समृद्धसंस्कृतवाङ्मयस्य वेदविषयका:, पौराणिका:, कालिदासीया:, साहित्यिकसमीक्षात्मक:, सांस्कृतिका:, पुरातात्त्विका: प्राच्यविद्यायाश्च विविधा: विचारपूर्णा: शोधलेखा: विद्यन्तेऽस्मिन्नुपादेयग्रन्थे ।

वैदुष्यपूर्णा अधिकांशलेखाञ्जलिलेखा अन्ताराष्ट्रिय-राष्ट्रियप्राच्यविद्यासम्मेलनीयशोधसंगोष्ठीसु विद्वद्भिर्विचारिता: बहुचर्चिता: । आकाशवाण्या संस्कृतवार्तारूपे संस्कृतकार्यक्रमेषु एषां प्रसारणमसंख्यसंस्कृतप्रेमिश्रोतृभि: प्रशंसितम् । किम्बहुना–विद्याव्यसनिन: सहृदयसंस्कृत-पाठका: लेखाञ्जलिलेखानामनुसन्धानस्य व्यापकपृष्ठभूमौ महदुपादेयतलस्पर्शिगभीराभिनवविचारानवगम्य स्वत एव प्रमाणभूता: भविष्यन्ति ।

'न हि कस्तूरिकाऽऽमोदं शपथेन विभाव्यते ।' इत्यलम् ।

—समीक्षक:

# घोषणापत्र

1- पुस्तक का विषय - रचनात्मक व समीक्षात्मक लेख ।

2- लेखक का नाम व पता - डॉ० कैलाशनाथ द्विवेदी
प्राचार्य, म० प्र० स्नातकोत्तर महाविद्यालय,
कोंच (जालौन) 285205

3- संस्था का नाम जहाँ लेखक कार्यरत हैं -
म० प्र० महाविद्यालय, कोंच (जालौन)

4- लेखक का प्रमाणपत्र।

(क) मैं प्रमाणित करता हूँ कि उपर्युक्त मेरी रचना मौलिक (लेखाञ्जलि:) प्रथमबार वर्ष 1992 में प्रकाशित हुई है।

(ख) यह रचना शोधग्रन्थ नहीं है।

(ग) मैं जन्म से उत्तरप्रदेश का निवासी हूँ। गत 5 वर्षों से उत्तर प्रदेश में निवास कर रहा हूँ।

1.1.95
लेखक के हस्ताक्षर

(Dr. K. N. Dwivedi, D.Litt,)
Principal,
M.P. College, Konch (Jalaun).

232



# लेखाञ्जलिः

(प्राच्यविद्यायाः विविधसमीक्षात्मकमौलिकलेखानां संकलनम्)






लेखकः
**डॉ० कैलाशनाथद्विवेदी,**
एम. ए , साहित्याचार्यः, सा० रत्नम्, पी-एच. डी., डी. लिट्,
प्राचार्यः
मथुराप्रसाद महाविद्यालयः, कोंच (जालौन) उ० प्र० 285205

प्रकाशकः
**साहित्यरत्नालयः, कानपुरम्-१**

"इस ग्रन्थ का प्रकाशन उत्तर प्रदेश संस्कृत अकादमी द्वारा प्रदत्त आर्थिक सहायता से किया गया है।"



लेखक : डॉ० कैलाशनाथ द्विवेदी
प्रकाशक : साहित्यरत्नालयः, गिलिस बाजार
कानपुरम्
संस्करणम् : प्रथम संस्करणम्, 1992
मूल्यम् : रु० 40=00
मुद्रक : मधुर प्रिन्टर्स, 128/93, वाई ब्लाक
किदवई नगर, कानपुर–208011

LEKHANJALIH—(A Collection of Indological Essays)
BY—Dr. Kailash Nath Dwivedi, D. Litt.
PRICE Rs.— 40=00




# समर्पणम्

प्राच्यविद्याविदां प्रीत्यै, सेवायै संस्कृतस्य च ।
सतां कराम्बुजेष्वेतल्लेखाञ्जलिः समर्प्यते ॥
संस्कृत्य सुधियः दोषान्, गृह्णन्त्विमां ममार्चनाम् ।
प्रेम्णाऽस्मद्भारतीपूजा, प्रीणातु पाठकान् प्रियान् ॥

—कैलाशनाथद्विवेदी,
प्राचार्यः

# प्रास्ताविकम्

संस्कृत-साहित्यं महाकाव्यगीतिकाव्यरूपकगद्यकाव्य कथाचम्पूकाव्यादि-विविधविधाभि: सुसमृद्धं संलक्ष्यते । सामान्यत: संस्कृतनिबन्धक्षेत्रे प्राच्यविद्या-विषयक मौलिकललितलेखानामभावोऽनुभूयते । लेखकेन अस्यां दिशि सम्यक विचार्य विविधविषयसम्बन्धिसमीक्षात्मकमौलिकसंस्कृतलेखानां समये-समये रचनां कृत्वाऽभावोऽयं दूरीकृतोऽस्ति । संकलनेऽधिकांशलेखा: राष्ट्रियान्ता-राष्ट्रियप्राच्यविद्यासम्मेलनशोधसंगोष्ठीसु प्रस्तुता: विचारिता: विद्वद्भिश्-प्रशंसिताश्च सन्ति ।

"लेखाञ्जलि:" इत्यस्मिन् ग्रन्थे कतिपयलेखा: भारतीयसुप्रतिष्ठित संस्कृतशोधपत्रिकास्वपि प्रकाशिता अभवन् । एषामुपयोगितामवलोक्य विद्वद्भिर्ग्रन्थरूपे प्रकाशनार्थं प्रेरितो भूत्वा प्रोत्साहितोऽस्मि । अतएव स्वकीयवैदिकपौराणिकलौकिककालिदासीयसांस्कृतिकसाहित्यिकसंस्कृतनिबन्धानां संकलनमिमं प्रस्तुतीकुर्वन् कृत्यकृत्योऽस्मि विदुषां समाजेऽनया लघु-संस्कृतसेवया ।

आशान्वितोऽस्मि, यत् सहृदयसंस्कृतविद्वांस: लेखाञ्जलिम् स्वीकार्य लेखकस्य विनम्रश्रद्धाञ्जलिना सर्वथा संतृप्ता: भविष्यन्ति । लेखेषु विद्यमान-दोषानविगणय्य एषामुपादेयतां संलक्ष्य यदि संस्कृतसंस्कृतिप्रेमिजिज्ञासुजनानां यत्किञ्चिदपि लाभो भवति लेखैरेभि: तदहमात्मानं कृतकृत्योऽनुभविष्यामि ।

लेखाञ्जलि-प्रकाशने प्रत्यक्षाप्रत्यक्षरूपयोर्येषां सहृदयविदुषां प्रोत्साहनं साहाय्यञ्चावाप्तं मया, तान् प्रति भूयो-भूयो धन्यवादा: समर्प्यन्ते । 'सागा-रिका', 'शोधप्रभा', 'अजस्रा', संस्कृतविमर्श:प्रभृति शोध-पत्रिकासम्पादका:, शोधसंगोष्ठीसंयोजका: सम्मेलनाध्यक्षाश्च एतदर्थं मदीया: धन्यवादपात्राश्च सन्ति ।

उत्तरप्रदेश संस्कृत–अकादमी लेखाञ्जलिप्रकाशनार्थं पञ्चसहस्र-रूप्यकाणामांशिकार्थिकसहायतां स्वीकृतवती–एतदर्थं लेखकोऽयमकादमीं प्रति हार्दिककृतज्ञतां ज्ञापयति ।

ग्रन्थप्रकाशन-व्यवस्थायां सुहृद: पं० महेशत्रिपाठिन: समीचीन

सहयोगः साधुवादार्हः सर्वेषा। प्रूफसंशोधने प्रेसस्य असावधानतयाऽनेका अशुद्धयो लेखेषु यत्र-तत्र वर्तन्ते–एतदर्थं सखेदं लेखकः क्षमां प्रार्थयन् मनीषि-पाठकान् नम्रतया निवेदयति। यत् लेखान्तर्गतविद्यमानमुद्रणसम्बन्ध्यशुद्धीः स्वतः संशोध्य एव कृपया पठन्तु।

अस्मदीयो दृढ विश्वासोऽस्ति, यत् संस्कृतानुरागिसंस्कृतिनिष्ठसहृदय-विद्वज्जनाः अस्मद् लेखाञ्जलिं स्वीकृत्य संस्कृतसेवायै मामहर्निशं प्रोत्साह-यिष्यन्ति इति शम्।

–कैलाशनाथ द्विवेदी,
प्राचार्यः
मथुराप्रसाद महाविद्यालयः
कोंच (जालौन)

# विषयानुक्रमः

# वेदकालीनभारतम्

वेदेषु विश्वविश्रुतभारतदेशस्य पुरातनसंस्कृतिः सम्यग्रूपेण प्रतिबिम्बिता परिलक्ष्यते । तत्कालीनभारतस्य सामाजिकधार्मिकार्थिक-राजनैतिकयौद्धिकादि-दशानां चारुचित्रणं वैदिकसाहित्ये प्राप्यते, येन वेदकालीनभारत स्ययथार्थदर्शनं कर्त्तुं शक्यते सुधीभिः स्वदेशप्रेमिभिः ।

वेदकालीनभारतस्य भौगोलिकविस्तारः स्थलीयस्वरूपं वा मध्यदेशीया-समुद्रहिमवत्पर्वतपर्यन्तमासीत् यस्मिन् उत्तरवर्तिनो मूजवच्छर्यणावत् हिमवत्-प्रकृतिपर्वताः मध्यभागे त्रिधन्वनां योजना सिन्धुसरस्वतीसदृशसप्तसिन्धवो विशेष-रूपेण समुल्लेखनीयाः सन्तिः । यथा ऋग्वेदः वर्णयति–

दिवः पृथिव्योरव आवृणीमहे मातॄन् सिन्धून् पर्वतान्छर्यणावतः ।
यस्येमे हिमवन्तो महित्वा यस्य समुद्रं रसया सहाहुः ।
अष्टौ व्यख्यत् ककुभः पृथिव्यास्त्री धन्वयोजना सप्तसिन्धून् । इति ।

वेदकालीनभारतस्य पश्चिमोत्तरपर्वतीयभूभागे रसाक्रुमुकुभादिसहितः सिन्धुः प्रवहति स्म, अन्यत्र नानानदीनदेषु प्रमुखसप्तसिन्धूनां मनोहारिणी वर्णना प्राप्यते ऋग्वेदे । यथा–

इमं मे गंगे यमुने सरस्वति शुतुद्रि स्तोमं सचता परुष्ण्या ।
असिक्न्या मरुद्वृधे वितस्तयार्जीकीये श्रुणुह्या सुषोमया ।।
तृष्टामया प्रथमं यातवे सजूः सुसर्त्वा रसया श्वत्या त्या ।
त्वं सिन्धो कुभया गोमतीं क्रुमुं मेहत्न्वा सरथं याभिरीयसे ।। इति

वेदकालीनभारतस्य सीमासु समुद्राणामवस्थितिरपि सुनिश्चिता भवति । परावत् दर्वावत् सारस्वत–शर्यणावत्सदृशसमुद्राणामुल्लेखेन । एसु प्रथमद्वयोः समु-द्रयोः पूर्वापरयोः परावत् दर्वावतोरेव प्रधानताऽऽसीत् तत्कालीनजनजीवने । यथा–

"उभौ समुद्रावा क्षेति यश्च पूर्व उतापरः । परावति अर्वावति समुद्रे ।"
इति

वेदकालीनभारते सदाहरितवनानामधिकताऽऽसीत् । वनेषु खदिरशिंशपा-श्वत्थशमीशाल्मलीविभीदकस्वधितिपर्णारट्टवंशप्रभृतिवृक्षाः व्यल्कशोर्वारुसोमशाद-काशोलपर्वाहिसैर्यंसस क्षुम्पप्रभृतितृणलताः वेतसशीपालपुष्करप्रभृतिजलीय वनस्पतयः प्राचुर्येण प्रभवन्ति स्म । वानस्पतिकव्रततिसु सोमस्य प्रधान्यमासीत् वेदकालीनभारते; यतोऽस्योपयोगः यज्ञेषु भवति स्म प्रमुखतया लोकप्रियपेयरूपे । ओजःस्फूर्तिबलवर्धकः सोमः सामान्यते ऋजीकमौञ्जवतपर्वतीयक्षेत्रे प्रादुर्बभूव

 

प्राचुर्येण, किन्तु कालान्तरे वेदोत्तरकालीने भारते प्रतीयते सोमः दुर्लभ इवाभवत् यथा–

"सोमं मन्यते पपिवान्यत् संपिषंयोसधिम् ।
सोम यं ब्रह्माणो विदुर्न तस्याश्नाति कश्चन ॥" (ऋक् 10.85.3)

यद्यपि वेदकालीनभारते बनान्येव मानवाजीविकाया आधारभूतानि स्रोतांसि आसन्, येषु पशुपालनाखेटकाष्ठाद्युद्योगाः प्राधान्येन प्रचलन्ति स्म तथापि कृषि-कार्येऽपि कर्मशीलार्याणामभिरुचिन्यू॑ना नासीत् । वेदेसु ऋत्वनुसारियवव्रीहि-प्रभृतिधान्यानां वपनपरिपाकयोरुल्लेखो विद्यते । तत्कालीनभारते कृषिसम्बन्धि विविधक्रियाणामपि वर्णनं विद्यते वेदेवाङ्मये । यथा–

"कृषन्तः वपन्तः लुनन्तः मृणन्तः··· ।" इति

बहूद्योगिनो वैदिकार्या अर्णिकार्पासिकस्यूतव्युतवस्त्रैः पौष्टिकाशनपानेन, ग्रीष्मशीतवर्षात्राणकारिगृहावासेन च रुक्मवक्षाः मणिग्रीवाः हिरण्यकर्णाश्च भूत्वा सुखेन जीवनं यापयामासुः ।

वेदकालीनभारते यदुतुर्वशानुद्रुह्यपुरुत्तृत्सुप्रभृतिजनानां राजनैतिकप्रभुत्व-मासीत् फलतोऽधिकांशभूभागे एतेषामेव राज्यविस्तार आसीत् । असुरदानवदास-दस्युपणिप्रभृतिकृष्णानार्यजनानामिव पश्चिमीसीमान्तप्रदेशीयाः पक्थमलानस् शिवालिन्विषाणिन्जना अपि आर्याणां राजनैतिकप्रतिस्पर्धिनः आसन् । परिणामत एतेषु मध्ये युद्धा अपि अभवन् । पारस्परिकसामाजिक राजनैतिकधार्मिकमतभेदैः आर्यानार्यदशराज्ञसदृशभयंकराणि युद्धान्युल्लेखनीयानि सन्ति, एषु प्राकृतिकशक्तीनां प्रत्यक्षप्रभावः परिलक्ष्यते ।

वेदकालीनभारते धर्मपरायणसमाजे विविधयज्ञानां विधिवत् सम्पादनं प्राकृतिकशक्तीनां समुपासनं सदाचारपालनञ्च प्रायः भवन्ति स्म । यत्र तत्र इन्द्रा-ग्निप्रभृतिनिसर्गशक्तीनां प्रतीकरूपाया मूर्त्तिपूजाया अपि बीजमासीत् । जनजीवने यथा–क इमं दशभिः ममेन्द्रं क्रीणाति धेनुभिः । इति ।

वेदकालीनभारते सरस्वत्यादिनदीनां सुरम्यतटेषु भरद्वाजवसिष्ठविश्वामित्र वामदेवकण्वादिमुनीनां पावनाश्रमाः आसन् । एषु धर्मदर्शनकलाज्ञानविज्ञानानां पराकाष्ठां प्राप्य यज्ञियवैदिकसंस्कृतेः समुज्ज्वला सार्वभौमिकीसमृद्धिरधिगतासीत् । भरद्वाजवसिष्ठयोः सैन्यविज्ञानप्रशिक्षणे, वामदेवस्य कृषिविज्ञाने, अत्रेर्ज्योतिषविज्ञाने अगस्त्यस्य वनस्पतिजीवविज्ञानयोः श्यावाश्वस्य भूगोलविज्ञाने च महदवदानं प्रतिभाति ।

वेदकालीनभारते परमप्रतापितृत्सूयां भरतानां वा या यज्ञियसंस्कृतिः-भारती प्रादुर्भूय सांस्कृतिकविजयञ्चाधिगत्ये अस्य राष्ट्रस्य नामकरण आधारवती बभूव

अस्या भारतीयसंस्कृते; संरक्षणं सम्प्रसारणञ्च मनीषिमुनिभि: मनस्विभिरार्यै: सततं न केवलं स्वदेशेऽपितु शतारित्रमयनौकाभि: समुद्रं तीर्त्वाऽन्यदेशेषु द्वीपान्तरेवपि परिभ्रम्य कृत, यस्य संकेत: ऋग्वेदे विद्यते । यथा· अनारम्भणे अग्रभणे समुद्रे शतारित्रां नावमातस्थिवांसम् ।

साम्प्रतमपि वेदकालीनभारतस्य[1] संस्कृते:–

पुरातनावशेषा ईरानेराकवेबीलोनियासीरियाहिन्देशियादिदेशेषु बाहुल्येन प्राप्यन्ते ।[2] इति शम् । □

1. द्रष्टव्यो लेखकस्य शोधग्रन्थ:, ऋग्वैदिकभूगोल: साहित्यनिकेतनं, कर्णपुरम् 1985 ई० संस्करणम् ।
2. लेखकस्य लक्ष्मणपुरकेन्द्रीयाकाशवाण्या एतद्विषयकं वार्ता प्रसारणं लेखस्यास्याधार: । द्रष्टव्या, सागारिका–25/3 अंक:, पृ० 29–31

# ऋग्वैदिकगुङ्गूनामनुसन्धानम्

ऋग्वेदोऽस्माकं पुरातनभारतीयसंस्कृतेः पावनतमः स्मारकोऽस्ति यस्मिन्निखिलधर्मदर्शनकलेतिहासभूगोलज्ञानविज्ञानादीनां सम्यक् परिचयः प्राप्यते। ऋषयोऽनेकमंत्रेषु वर्ण्यविषये तद्युगीनप्राचीनार्यार्येतरजातीनामप्यैतिहासिकदृष्ट्योल्लेखं चक्रुः याश्वेका सरस्वत्याः सहायकनद्या गुंग्वोस्तटवर्तिनी जातिः ऋग्वेदे दशममण्डलेऽष्टचत्वारिंशे सूक्ते इन्द्रसम्बन्धितायामेकस्यामृचि गुङ्गूनामुल्लेखः जातिरूपेण कृतः। यथा–

अहं गुङ्गुभ्यो अतिथिग्वमिष्करमिषं न वृत्रतुरं विक्षुधारय।
यत् पर्णयघ्न उत वा करंजहे प्राहं महे वृत्रहत्ये अशुश्रवि॥

ऋक्० 10/48/8

अस्यामृचिगुङ्गवो जातिरूपेण स्पष्टतो तृप्सूनां भरतानां वा राज्ञः दिवोदासस्य अतिथिग्वस्य अमित्ररूपेण विरुद्धा वर्णिताः, तस्माच्चाल्पशक्तिमया इमे आसन्। तृत्सुराजोऽतिथिग्वो दिवादासोऽमीषां गुङ्गूनां तथैव संहारको बभूव, यथा इन्द्रः पर्णयकरंजवृत्रादीनां संहारेण प्रसिद्धोऽस्ति। अत एव गुङ्गवोऽपि दासदस्यूनामिव आदिमा आर्येतरा आसन्। इमेऽपि उत्तरवर्तिहिमवत्पपर्वतीयभूभागसम्बन्धिताश्च आसन्।

लुडविग[1] मुग्धानलकीथादि[2] पाश्चात्यविद्वद्भिर्भ्रमवशाद् गुंगुजातिरियं अतिथिग्वस्य मित्ररूपेण परिकलय्य आर्यजातिर्निधारिता, किन्तु श्रीराहुलसांकृत्यायनो गुङ्गून् अनार्यजातेरभिन्नं प्रतिपादयति।[3] ऋगनुसारेण सर्वथा समीचीनोऽयं दृष्टिकोणः।

सिनीवालीराकासरस्वतीभिः सह सरितः गुङ्ग्वोः ऋग्वेदस्य द्वितीयमण्डले ऋषिणोल्लेख एवं कृतः–

या गुङ्गूर्या सिनीवाली या राका या सरस्वती। 2/32/8

अतः नदीयं सिनीवालीराकयोरिव सरस्वत्याः सहायिकैव प्रतीयते। अस्याः समीकरणं सम्प्रति लोहगढ (Lohgadh) नद्या सह कर्तुं शक्यते, या सिनीवाल्या

1. ऋग्वेदानुवादः, 3. 165।
2. वैदिकइण्डेक्स, भाग 1 (अनु० रामकुमारराय:), वाराणसी, पृ० 254।
3. ऋग्वेदिक आर्य, इलाहाबाद, 1957, पृ० 24, 117।

संगत्य सरस्वतीं प्रवहति। श्री एम० एल० भार्गवस्य समीकरणं समीचीनमनया दृष्ट्या।[1] अतः गुङ्गुजातीयजनाः अप्यस्या नद्या अभिधानेन समन्विता अस्या एव तटे निवसन्ति स्म। तत्स्थानीयक्षेत्रं गुङ्गुनाम्ना प्रथितमासीत्।

प्रतीयते, आर्यविरोधिनां गुङ्गूनां क्षेत्रमतिथिग्वदिवोदासस्य (तृत्सुभरत-जनस्य) उत्तरपूर्वे यमुनागंगयोरुद्गमस्थलसमीपे हिमालयश्रृंखलास्ववस्थितमासीत्। तृत्सूनां पूर्वसीमायाः शत्रवो गुङ्गवोऽजशिग्रुयक्षुजनानां निकटस्था आसन्। पराक्रमी दिवोदासः इन्द्र इव एषां वृत्रहत्यया समं संहारं सम्पाद्य एषामन्नधननिधीन् स्वीचकार।

गुङ्गूनां भौगोलिकी[2] अवस्थितिः पर्वतीयासीत्। अतः सैन्यविज्ञानदृष्ट्या एभ्यो नैसर्गिकी सुरक्षा समुपलब्धासीत्, किन्तु सैनिकशक्त्या यौद्धिकसाधनैश्च तृत्सुभ्योऽल्पतराः क्षीणतरा दितदासेनातिथिग्वेन इमे युद्धे पराजिताअभवन्। आर्यानार्ययुद्धान्तेऽमीषां प्रचुरधनसम्पत्तिः तृत्सूनां हस्तंगता।[3] □

---

1. A Geogrophy of Rigvedic India, Lucknow. P. 58
2. सप्तसैन्धवप्रदेशः (ऋग्वैदिक भूगोल) पृ० 148-149।
3. दृष्टव्यः सागरिका, 23/2, वि० सं० 2041 अंक, पृ० 79-80

# ऋग्वैदिक-तुला-प्रतिमान-विमर्शः

ऋग्वेदोऽस्माकं प्राचीनतमाया भारतीयसंस्कृतेः सभ्यतायाश्च सर्वश्रेष्ठ स्मारकोऽस्ति। अस्मिन् ज्ञान-विज्ञानविषयका नैक सन्दर्भाः प्राप्यन्ते लोकव्यवहारे ऋग्वैदिककाले गणनायै संख्यावाचि शब्दानां पर्याप्तप्रयोगो भवति स्म। यद्यपि वस्तूनां पदार्थानां वा विभाजनाय परिमाणज्ञानाय वा भारं विज्ञातुं ऋग्वैदिके सप्तसैन्धवप्रदेशे तुलाः प्रयोगस्य प्रमाणभूताः सन्दर्भाः न प्राप्यन्ते, तथापि तुलायाः स्थाने परिमाणं परिज्ञातुं विशिष्टानाम् आकारप्रकाराणां परिमाणसूचकानां कतिपयपत्राणामुपयोगः तत्कालीने समाजेऽवश्यमेव भवति स्म। एषु परिमाण (भारप्रतिमान) सूचकेषु पात्रेषु प्राधान्येन खारिद्रोणयोरुल्लेखः प्राप्यते ऋग्वेदे। यथा ऋषिः वामदेव एकस्मिन् मन्त्रे कथयति–

"सहस्रं व्यतीनां युक्तानामिन्द्रमीमहेशतं सोमस्य खार्यः ॥"

ऋक्० 4।32।17

तथैव भारप्रतिमाणं प्रकटयन् बुधः सोमपुत्रो नाम ऋषिरपि द्रोणं नामकं परिमाणं वर्णयति अस्मिन् मंत्रे–

"प्रीणीताश्वान् हितं जयाथ स्वस्तिवाहं रथमित कृणुध्वं।
द्रोणाहावमवतमश्चक्रमसत्रकोशं सिंचता नृपाणम् ॥"

ऋक्० 10।101।7

खारी–ऋग्वेदे उल्लितं खारी-भारप्रतिमानं डॉ० मैकडा[1]नेल कीथमहाशयौ सोमस्य सामान्यं परिमाणं स्वीकुर्वन्तौ निश्चितं प्रतिमानं न निर्दिष्टवन्तौ। श्रीराहुलसांकृत्यायनः खारीप्रतिमानं त्रिबुशल तुल्यं[2] स्वीकरोति, किन्तु श्री द्वारका-प्रसादशर्मा तारिणीशझा[3] प्रभृतिविद्वांसोऽमुं प्रतिमानं तुलानुसारेण द्वादस मनसहितं द्वात्रिंशत्सेरसमानं निर्दिशन्ति। सम्भावनाधिकं विद्यते, यत् समये-समये खार्या आकारप्रकारो प्रतिमानं वा परिवर्तितं भवति स्म।

---

1. वैदिक इण्डेक्स, भागः 1 (अनुवादकः रामकुमाररायः), 1962 ई० वाराणसी, पृष्ठ 240, आल्टिण्डिशे लेबेन, त्सिमर, 280।
2. ऋग्वैदिक आर्य, राहुल सांकृत्यायनः 1957, इलाहाबाद, पृ० 523 (परिशिष्ट)।
3. संस्कृत शब्दार्थ कौस्तुभः, 1957, इलाहाबाद, पृ० 376।

अर्थशास्त्रस्य रचनाकार आचार्यः कौटिल्यः[1] मौर्ययुगीन खार्याः भारप्रतिमानं षोडश द्रोणसमानं स्वीकरोति, येन इदं निश्चितरूपेण कथयितुं शक्यते यत् द्रोणं, प्रायः काष्ठस्य अश्मनः वा लोकभाषायां टवनांदादिपात्राणामिव, प्रतिमानकं पात्रं प्रयुज्यते स्म, यस्मिन् षोडशतः द्वात्रिंशत्सेरभारपर्यन्तं वस्तु आपूरयितुं शक्यते स्म, अस्माद अपेक्षाकृता खारी गरीयसः प्रतिमानस्य वस्तुनः मापनाय पात्रमासीत्।

द्रोणम्–खार्या अपेक्षाकृतं द्रोणमत्यल्पभारवस्तुनः सोमादिद्रवपदार्थानां संपूरयितुं काष्ठस्य काष्ठपात्रं 'कठौता' टवनांदादिलोकव्यहृतानां पत्राणामिव आकारस्य प्रतिमानकं पात्रमासीत्। तस्यापूरणक्षमता सामान्यतः षोडशतः द्वात्रिंशत्सेरभारपर्यन्तं स्वीकृता शब्दकोषकारैः[2] विद्वद्भिः।

सुप्रसिद्धार्थशास्त्री आचार्यकौटिल्यः[3] द्रोणस्वरूपं सम्यग्रूपेण विवेचयति। तस्य मान्यतानुसारेण इदं कथयितुं शक्यते यदअस्य चतुर्षु रूपेषु (आकार-प्रकारेषु) समाजे सामान्यतः प्रचलनं भवति स्म। किन्तु सामान्यतः 20 विंशतिद्रोण[4] परिमाणं एकं कुम्भकापूरितमानासीत्।

एभिः गुरुभारप्रतिमानकपात्रैः सिद्धयति यत् लघुभारतोलनाय तदनुसारिप्रतिमानकपात्राणां 'पसर' प्रस्थवा प्रभृतिनामपि प्रयोगः ऋग्वेदकालीने सप्तसैन्धवप्रदेशे पर्याप्तरूपेणाभवत्।

उपर्युक्तऋग्वेदवर्णितभारप्रतिमानसूचकपात्राणां समुल्लेखेन सिद्धयति यत् सप्तसैन्धवप्रदेशीये सामाजिकजीवने आर्या भारमयस्थूलद्रवपदार्थानां वस्तुनां वा परस्परमादानप्रदान व्यवहारे तुलायाः स्थाने भारप्रतिमानसूचकखारीद्रोणादिपात्राणां प्रयोगं प्रायशोऽकुर्वन्। इदमपि सुनश्चितमेव अस्ति, यत् खारी गुरुतम-

---

1. कौटिलीय अर्थशास्त्रम्, 2 अधिकरणम्, 19 अध्यायः, 37 सूत्रम्— "षोडशद्रोणाखारी"।
2. संस्कृत शब्दार्थकौस्तुभः, द्वारकानाथः शर्मा, तारणिश झा, 1957 इलाहाबाद पृ० 541।
3. कौटिलीय अर्थशास्त्रम्—1।19।32-38, अथ धान्यमाषद्विपलशतं द्रोणमायनानम्॥ 32॥ षोडशद्रोणा खारी॥
   विंशतिद्रोणिकः कुम्भः॥ 38 सपादपणो द्रोणामूल्यम्॥
   सप्ताशीतिपलशतमर्धपलं च व्यवहारिकम्॥ 33॥ पंचसप्ततिपलसशतं भाजनीयम्। 34। द्विषष्टि पलशतमर्धपलं चान्तः पुरभाजनीयम्॥ 35॥
   तेषां ज्ञाढकप्रस्थकुडुणाश्चतुर्भागातराः।
4. ऋग्वैदिक आर्य, इलाहाबाद, 1957, पृ० 218, 525।

भारमापकं पात्रमासीत्, अस्यापेक्षाकृतं द्रोणं लघुभारप्रतिमानकं पात्रं प्रचलितमासीत् । द्रोणाद् षोडशगुणात्मिकी गुरुभारक्षमतामयी खारी सोमादिद्रवपदार्थानां मापनेऽपि प्रयुज्यते स्म । प्रस्थ 'पसर' प्रभृति अन्य लघुभारप्रतिमानानाम् ऋग्वेदे उल्लेखो न प्राप्यते, किन्तु प्रतीयतेऽस्याऽपि प्रतिमाने प्रयोगोऽभवत् वर्तिसमाजे ।[1]

□

1. द्रष्टव्यो लेखकस्य ऋग्वैदिकभूगोल (सप्तसैन्धवप्रदेशः) ग्रन्थः साहित्यनिकेतनं, कानपुरं, 1984 ई० संस्करणम् ।
सागरिका 24/1, 2042 वि० संवत्सरीयाङ्कः, पृ० 107-109, वाराणसी ।

# ऋग्वैदिकसोमस्य प्रत्यभिज्ञान-विमर्शः

ऋग्वेदोऽस्ति समस्तसंसारस्य पुरातनज्ञानविज्ञानधर्मदर्शनादि तत्त्वानामक्षयो निधिः। अस्मिन् प्राकृतिकवनस्पतेश्चारुसमृद्धिरपि वर्णिता मनीषिभिः। वैदिक-युगीनसप्तसिन्धुप्रदेशे सदाहरितवनराजिमध्ये विविधवृक्षलतातृणगुल्मादिषु सोमस्य महत्त्वं सर्वाधिकमासीत्। यतो वैदिकयज्ञेषु सोमहविर्निर्मितयेऽस्य पादपस्य प्रयोगोऽभवत्। स्थाने ऋग्वेदस्य नवममण्डलेऽन्यमण्डलानां च षट्सूक्तेषु सोमस्य प्रशस्तिः कृता वर्तते।

## सोमस्य स्वरूपम्

अस्य पादपस्य शाखा वृन्ता वाऽरुण[1] बभ्रु[2] हरितः[3] कथ्यन्ते। हिलेब्राण्ट-मतानुसारेण[4] यद्यस्योपाधिः 'नैचाशाखः[5] तथ्ययुक्तोऽस्ति, तर्हि शाखा अस्य अधोलम्ब माना अभवन्। सोमांकुरः 'अंशुः[6] स्कन्ध पूर्वन्[7] (यो वृत्ताकारो न भूत्वा कोणवद[8]भवत्। समस्तपादपश्च; अन्धस्[9]; इति कथ्यते, योऽस्य रसस्य द्योतको[10]ऽस्ति।

प्रतीयते, पादपोऽयं प्रायः पर्वतेषु बभूव। ऋग्वेदस्य ऋचः तथ्यमिदं प्रमाणीकुर्वन्ति यथा–

'सोमस्येव मौजवत भक्षो।' (ऋक्०/10/34/1) पण्डितो दामोदरः सातवलेकरः मौजवत–प्रभृति पर्वतेषु 8 सहस्रोत्तुंगतायां सोमोत्पत्तिं (स्वीकरोति। ऋग्वेदे 1/93/6,3/48/2,5/36/2,/43/4,85/2,/9/17/1; 47/1,9/62/4, 63/27, 31 10/34/1) अनेकस्थलेषु सोमोत्पत्तिः मूजवत्पर्वते प्रसिद्धासीत्। अस्मिन् प्रसङ्गेऽधोलिखितानां पाश्चात्यपौरस्त्यगवेषक-विदुषां शोधपूर्णानि मतानि विचारणीयानि सन्ति–

रैप्सनः काश्मीरोपत्यकायाः सोमोत्पादकं दक्षिणपश्चिम क्षेत्रं मूजवत्-

---

1. ऋग्वेदे 9।92।1 2. ऋक् 7।98।1 10।94।3, 8।144।5
3. ऋक् 9।42।1 वसानो गा हरिः।
4. वैदिक माइथोलाजी 1।14-18, 1।241,244 5. ऋक् 3।53।14
6. ऋक् 1।168।3, 3।48।2 7. ऋक् 1।9।1 8. ऋक् 4।20।4
9. ऋक् 1।28।7, 3।48।1, 4।16।1 10. ऋक्के 2।14।1, 19।1, 35।1

 

पर्वतीयक्षेत्रेण सह समीकरोति ।[1]

डा० राधाकुमुदमुकर्जी सोमोत्पादकं क्षेत्रं कुहा (कुभा) तटं मनुते[2] डा० वासुदेवशरणाग्रवालो वंक्षुनद्या दक्षिणे मुञ्जान-क्षेत्रं सोमोत्पत्तिक्षेत्रमिति स्वीकरोति[3] ।

वस्तुतो मुञ्जानक्षेत्रं मूजवन्तादभिन्नं हिन्दुकुशपर्वतीयक्षेत्रमेवऽस्ति ।

## सोमस्य उपयोगविधि:

सोमपादप: सर्वप्रथमं व्यवहारार्थं प्रस्तरैरूलूखले निधाय कुट्टयते स्म । कुट्टनार्थं प्रस्तरा ग्रावा[4] अद्रि[5] रिति संज्ञका आसन् । यदा कदा प्रस्तराणां स्थाने मुसलोलूखलौ व्यवह्रियेते स्म[6] । प्रतीयते, प्रथेयम्पारसिकी आसीत् वैदिककाले चाल्पप्रचलिता बभूव । अधिकरसप्राप्त्यै पादपोऽयं कदाचित् जलार्द्र:[7] क्रियते स्म । अस्य परिष्कारार्थं रन्ध्रवत्या: परिष्कारिण्या लोकभाषायां चलन्या: प्रयोगो बभूव ।

पावन: सोम: दुग्धेन दध्ना, यवसेन सह मिश्रयित्वा प्रयुज्यतेस्म । पुरुषार्थिभि: पुरुषै: प्रियतमपेयरूपेण दैनिकजीवने । सोमस्य विविधानि मिश्रितपेयानि प्रचस् वासस् अत्क अभिश्री रसादिसंज्ञकानि लाक्षणिक[8]नामभिरपि ख्यातानि ।

प्रतीयते, आर्या: सोमस्य जीवनोपयोगिनैकगुणान् (रोगनाशकत्वं बलायु: स्फूर्तिज्ञानवर्धकत्वञ्च) अवलोक्य प्रतिदिनं तस्य विविधरूपेषु प्रयोगमकार्षु: । सोमस्य सेवनेनार्या: स्वस्थजीवनं लब्ध्वा शतायुष्मन्त: परमपुरुषार्थमधिगतवन्त: ।

## सोमोत्पत्तेरनुकूलदशा

ऋग्वेदस्यानेकसन्दर्भै: ज्ञायते यत् सोम: ससैन्धव प्रदेशस्य पर्वतीयभूभागेषु[9] यत्र वर्षा पर्याप्तमात्रायां भवति स्म प्रादुर्बभूव पर्वतेषु सोम: जले सततं वर्धमान

---

1. The Cambridge History of India Vol 1, 1962, P. 72.
2. हिन्दूसभ्यता, 19-66 दिल्ली, पृष्ठ 86
3. तदेव पृ० 86 (अनुवादकस्य टिप्पणी)
4. ऋग्वेद 1।83।6, 135।7 5. ऋक्० 1।130।2, 135।5 137।1
6. ऋक्० 1।28 (मुसल–मन्था; ) ऋक् 10।101।1 11 (उलूखल)
7. ऋक्० 9।74।9
8. ऋक्० 3।30।1, 9।46.3, 66।23 (प्रचस्) 9।79।5,86।27 (अभिश्री), ऋक्० 9।69।5 वासस् ऋक्० 9।69।4 (अत्क)
9. ऋक्० 9।113।2 मंत्रमिममाधारीकृता डा० सूर्यकान्त: सोमोत्पत्ति: ऋजीक-पर्वते प्रतिपादयति द्रष्टव्या सम्मेलन पत्रिका सं० 2012 वि० पृ० 92

आसीत् । यथोक्तमृग्वेदे–

"असाव्यंशुर्मदायाप्सु वक्षो गिरष्ठा–" ऋक्. 9।62।4

पृथिव्या अधिसानवि······ऋक्. 9।63।27

"वर्जिष्ठे अधिसानवि······।" ऋक्. 9।31।5

"यदद्भिः परिषिच्यसे······।" ऋक्. 9।67।6

पर्वतीयप्रदेशे प्रायः जलाभावे वर्षाभावेन वा जलेन सिच्यते स्म सोमः सम्बर्धनार्थम् । यथा–यदद्भिः परिपिच्यते । ऋक्. 9।67।6।

समनुकूल प्राकृतिकदशाभिः सोमः मूजवत[1] परावतावबित शर्यणावत क्षेत्रेषु[2] प्रादुर्भूव ऋग्वैदिक काले

## सोम प्रत्यभिज्ञानम्

सोमस्य प्रत्यभिज्ञानविषयेऽधोलिखितानां पाश्चात्य पौरस्त्यविदुषां गवेषणापूर्णानि मतानि विचारणीयानि सन्ति–

पश्चात्यविद्वांसौ सासन[3] मूइरौ[4] सोमं Sar costemma-Viminale Asilepias acida (Sar Costema brevistigma) वा बनस्पतिरिति स्वीकुरुत।

राथस्य[5] विचारेण सोमः Sarcostema acidum नाम्न्याः वनस्पतेः प्रकृत्याऽधिकं समानोऽस्ति । मैक्समूलर आर० एल० मित्रो इमं यवसुरारूपे मत्वा सोमपादपं Humulus-Lupulus बनस्पतेरभिन्नं प्रतिपादयत:[6] वेदाधीती वाटः सोमं अश्वकानक्षेत्रीय द्राक्षारसः (Sarcostema brestigma) मनुते, राइसश्चायमिक्षुरसः इति स्वीकरोति[7] ।

डा० मायर्सः सोमं इफिड्रा वलगेरिक वनस्पतिरिति प्रतिपादयति । अमेरिकादेशस्य सुप्रसिद्धःकवक शास्त्री रिचर्डगार्डनवासनः[8] सोमं कवक जातीयामानिता मस्करियावनस्पतिना समं समीकरोति, या कुक्कुर मूत्रीयाजातेरस्ति ।

पौरस्त्यविद्वत्सु–डा० रामनाथचोपडा सोमं गिलोयजातोटो नोस्पोरा कार्डीफोलिया रूटा ग्रावेओ लेंस वनस्पतिरिति मनुते ।

---

1. ऋग्वेदे 10।34।1 सोमस्येव मोजवतस्य भक्षो ।
2. ऋग्त० 9।65।22। ये सोमासः परावति ये अर्वावति······ये शर्यणावति ।
3. इण्डिचेश्आल्टरथुम्स कुण्डे, 12, 231 ।
4. संस्कृत टैक्स्ट्स 5, 561, परश्च ।
5. सीक्रिफ्ट गेसेलस्केफ्ट, 35, 680 ।
6. वैदिक इण्डेक्स, द्वितीय भागः, पृ० 554 ।
7. वेदिशे माइथोलाजी, 17; वैदिक इण्डेक्स, द्वितीयोभागः पृ० 454 ।
8. धर्मयुगसाप्ताहिके; द्रष्टव्यः ऋग्वेद का सोम शीर्षक लेखः, 3 जून, 1973 ।

डा० उस्मान अली नारायणः स्वामी च सोम सिरोपेजियेति वनस्पतिदिति स्वीकुरुतः। निरञ्चनचन्द्रशाहः ऋग्वेदे वर्णितं सोमं गुणाधारेण अमानितामस्करियायाः क्षारीयं तत्त्वं प्राप्यामु ं पलाई एगोरिकात् कवकात् लोकभाषाव्यहृत-कुकुरमुत्ताजातेरभिन्नं प्रतिपादयति[1]।

श्रीमजनसिंह[2] शतपथब्राह्मणे किरातानां स्थानीय भाषायां सोममसनोसना-शब्देन व्यवह्रियमाणं प्राप्य मूलेऽस्य 'शण' शब्दस्य समानार्थिनं 'कन्नं' शब्दं गृहीत्वा भंगादभिन्नं स्वीकरोति, यस्याऽपिवर्ण हरित्पीत स्वर्णिमञ्च भवति।

## समीक्षा

ऋग्वेदे वर्णित सोमस्य गुणान् आयुः ज्ञान बल स्फूर्तिवर्धक रोगवाशकादीन अस्य सेवनविधि (प्रस्तरे कुटित्वा, रन्ध्रवत्या परिष्कृत्य फल बीज मूलरहित सिरस (छात्र) अमसुञ्च) दृष्टिप्रथमवधार्यैं व पाश्चात्य पौरस्त्यविद्वदभिः सोमः सुराद्राक्षेषु भंगकवकादिभिः समं समीकृतः किन्तु अमीजां समीकरणप्रयासोऽसमीचीनः प्रतीयते यतः एतेषां समीकृत खत्तत्पदार्थेषु सोमस्य गुणसाम्यं सर्वथा न संलक्ष्यते।[3]

रिवर्डगार्डनवासनेन गवेषितस्य कवकजातीयस्य अमानिता मस्करियायाः (फ्लाई एगेरिक स्य वा) यद्यपि वाह्यस्वरूपः ऋग्वेदे (1.84.8) समुल्लेखः पृथगेव वर्तते, कोमलतामवधार्य इमं सोमाद्विषमगुणयुक्तं प्राप्नुमो वयम्। सेवनात्पूर्व सोमः प्रस्तरेण पेषणार्थ उलूखले कुट्टयते स्म। अतएवाऽस्य कोमलतायाः स्थाने कठोरतैव अनुमीयते। अनेन विषया भंगोवा[4] सोमवत् प्रतीयते पेषणीये पेयपदार्थरूपे।

यदि सोमः फ्लाईऐगेरिक (अमानिता मस्करिया)—वनस्पतेः कवक-जातेभिन्नः कोपि पादपोऽस्ति, तर्हि सः सीमेनावश्यमेव समीकर्त्तव्यः।

अस्मदीयावधारणाऽस्ति यत् ऋग्वैदिकयुगस्य सप्तसिन्धुप्रदेशस्य स्थलीयस्वरूपे जलवाय्वादि प्राकृतिकदशासु च प्रभूतपरिवर्तनेन[5] ऋग्वेदे ईदृशः संकेतः

1. तदेव, शोधलेखः साप्ताहिके धर्मयुगे, 3-6-73, पृ० 23
2. आर्यों का आदिनिवास-मध्य हिमालय, 1968, प्रयानं, पृ० 93।
3. द्रष्टव्या—सागरिका, 25.2, वि० स० 2043 अंकः, पृ० 113-118 सागर/वाराणसी
4. द्रष्टव्योऽस्मदीयशोधग्रन्थः सप्तसैन्धवप्रदेश, (ऋग्वैदिक भूगोल) साहित्य-निकेतनं, कर्णपुरम्, 1985, पृष्ठ 64-69।
5. हावड़ा संस्कृत समाजेन 27, 28.12-87 दिनाङ्के समायोजिते निखिलभारत-संस्कृतमहासम्मेलने वैदिक विभागे लेखकेन प्रस्तुतमस्मिन् विषये शोधपत्रं यदभवत् बहुचर्चितं विचारितञ्च। सम्मेलनस्य मुख्यातिथिः प्राक्तनकेन्द्रीय मंत्री डॉ० कर्णसिंहः आसीत्

आभासो वा प्राप्यते, (यत्) वास्तविकसोमः मूलरूपे तस्मिन् युगेऽपि दुर्लभः आसीत्[1] । अस्य तथ्यस्य प्रमाणं परवर्तिवैदिक साहित्ये[2] उल्लिखितेन पूतीकपदेनापि प्राप्यते ।

प्रतीयते, पूतीकः सोमस्य स्थानापन्न पादपोऽस्ति, यः गुलेण्डिनाबाण्डिकात् वेसेला कार्डीयाफोलिया वनस्पतेर्याऽभिन्नः स्वीकृतोस्ति वनस्पतिशास्त्रिभिः[3] ।

अतएव साम्प्रतमपि सोमस्य पूर्णतया प्रत्यभिज्ञानं स्वरूपगतं सुनिश्चितं समीकरणं वा केनचित् विशिष्टवनस्पतिना सह कर्त्तुं न शक्यते; तथाप्याशास्यते यत् ऋग्वैदिकयुगस्य अस्य महत्त्वपूर्णवनस्पतेरविलम्बमेव सत्यप्रत्यभिज्ञानं सततानुसन्धानेन वनस्पतिशास्त्रविद्भिः करिष्यते, येन पुनरपि सोमपादपं परिचिन्वन्तो जनाः जीवने परमलाभान्विताः स्युः । वस्तुतः सोमस्य गवेषणायां साफल्ये वैज्ञानिक-वनस्पतिज्ञानां महच्युपलब्धिः भविष्यति ।[4] □

---

1. ऋक्० 10।75।3 सोमं मन्यते पपिवान्यन् संपिन्षां योपधिम् । सोमं पं० ब्रह्माणो विदुर्न सस्वाश्नाति कश्चन् ।
2. काठकसंहिता–34।3, शतपथब्रा० 14।12।12, पंचविंश सा० 8 ।
3. वैदिक इण्डेक्स, द्वितीयो भागः रामकुमारराय, पृ० 13 ।
4. हावड़ानगरे निखिलभारतसंस्कृतमहासम्मेलने वैदिक शोधसंगोष्ठ्यां प्रस्तुतमिदं शोधपत्रं विद्वद्भिर्विचारितं बहुचर्चितमासीत् 27-28 दिसम्बर दिनाङ्के 1987 ई० वर्षे । प्रकाशितं सागरिकायां 25/2 अंके वि० सं० 2043 वर्षे, पृ० 111-118

# ऋग्वेदे वर्णितं वस्त्रनिर्माणम्

ऋग्वेदोऽस्माकं भारतीयसंस्कृतेः सभ्यतायाश्च पुरातनस्मारकोऽस्ति; यस्मिन् प्रचीनभारतीयज्ञान-विज्ञान कलाधर्मदर्शनादितत्त्वानां समावेशः प्राप्यते। जलवायोः प्रभावैः शरीरसंत्राणार्थं वस्त्राणि मानवस्य द्वितीयावश्यकतायामागच्छन्ति। अतएव भौगोलिकानां[1] मतानुसारं विभिन्नस्थानानां प्राकृतिकवातावरणे समुपलभ्यान्य-सामग्रीभिः (कार्पासतन्तुभिः) वस्त्राणां स्वरूपं निर्धार्यते।

विदुषां विचारोऽयं सर्वथा समीचीनः प्रतीयते यद् भारतीयवस्त्रनिर्माणोद्योगः विश्वेऽस्मिन् प्राचीनतमोऽस्ति। कार्पासस्य मूलोद्गमक्षेत्रं भारतमेवासीत्अतएव अत्र पञ्चसहस्रवर्षपूर्वं कार्पासिकानि वस्त्राणि[2] निर्मीयन्ते स्म।

सामान्यतः ऋग्वैदिके सप्तसिन्धुप्रदेशे द्विक्षेत्रयोः निम्नप्रकाराणि वस्त्राणि मानवीयावश्यकतायै आजीविकायै (अर्थोपार्जनाय) च अनुकूलभौगोलिकदशाधारे निर्मितानि आसन्।

(1) ऊर्णि वस्त्रनिर्माणन्–ऋग्वैदिक सप्तसैन्धवप्रदेशस्य पश्चिमोत्तरीय-पर्वतीयभागे सिन्धुनद्या ऊर्ध्ववर्तिन्यामुपत्कायां (गान्धारक्षेत्रे) शीताधिक्येन उत्त-मोर्णवत्यः गा[3]न्धार्यविका बहुसंख्याका आसन्; अतएव सुलभ्योर्णराशिना ऊर्णि-वस्त्राण्यधिकं निर्मीयन्ते स्म। अपरञ्च परु[4]ष्णीक्षेत्रमपि अविकानामूर्णोत्पत्तये प्रसिद्धमासीत्। अतः कम्बलादि ऊर्णिप्रावारकाणां निर्मितयेऽपीदं विश्रुतमासीत्। एषामूर्णिवस्त्राणामुपयोगः शीततो क्रियते स्म।[5]

(2) सूत्रि (तूल)–वस्त्रनिर्माणम्–एवं प्रतीयते यत्पादपानां त्वक्तन्तुभिः कार्पासाद्यन्यतन्तुभिश्च सूत्रिवस्त्राण्यपि सप्तसिन्धुप्रदेशस्य जलोढमध्यवर्ति सम-

1. Human Geography, John Brunshes, 1157. P. 32; मानव भूगोल, डॉ॰ एस॰ डी॰ कौशिश, मेरठ, पृ॰ 459
2. Population & World Production, W. S. & E. S. Woyrinskys, 1953, P. 597
3. ऋग्वेदे-1।126।7...रोमशा गान्धारीणामिवाविका
4. ऋक्॰ 4।22।2, 5।52।9, 10।26।2 वासो...वायोऽवीनां मा वासांसि मर्मवृजत्।
5. ऋक्॰ 1।34।1, 1।135।6 रोमाण्यव्यया (ऊर्णितन्तवः)

तलीयभूभागे हस्तवेमैस्तंत्रवापैर्वापदण्डैर्वा निर्मीयन्ते स्म यानि सामान्यतः 'वस्त्राणि'[1] वासांसि[2] वा रूपे व्यवहृतानि। वस्त्राणीमानि स्त्रीणांपुरुषतन्तुवायाः वयन्ति स्म। इमानीदृशानि उत्कृष्टान्यधिकानि च निर्मितान्यासन् यत् रेगोजिन[3] मतानुसारमेषां वस्त्राणां वेबिलोनियासीरियादेशयोर्नियातः भवति स्म, यत्र (वेबिलोनिया देशे) सिन्धुप्रदेशस्य मलमल्लकं (सूक्ष्मं तूलवस्त्रं) सिन्धुरिति नाम्नाति प्रसिद्धमासीत्।

**वस्त्रनिर्माणस्य विकासः** सप्तसिन्धुप्रदेशे विविधाभिरनुकूलपरिस्थितिभिः (ऊर्णसूत्रयोः प्रचुरमात्रायामुपलब्ध्या, कुशलतन्तुवायानामुपभोक्तृणाञ्च सुलाभेन च) दृष्टिगोचरो भवति। पुरुसतन्तुवायेभ्यः सामान्यतः स्त्रियो वस्त्रवयनस्य कार्यमधिककुशलतापूर्वकमकुर्वन्. यस्योल्लेखः[4] प्रत्यक्षाप्रत्यक्षरूपाभ्यामनेकस्थलेषु प्राप्यते। वस्त्राणां वयनकार्ये तन्तुवाया ईदृशाः सिद्धहस्ता आसन् यद्वयनतन्तुः कदापि छिन्नं[5] न भवति स्म, वयनितवस्त्र च वारवारं वर्द्धमानं लम्बमानञ्च भवति स्मः।[6]

**वस्त्रनिर्माण व्योपकरणानि प्रक्रियाश्च**—ऋग्वेदे वस्त्रवयनस्य प्रक्रियाभिः सार्धं विविधान्युपकरणानि उल्लिखितानि सन्ति येषु तन्तुवायस्य वस्त्रवेमः[7] (हस्तवेमः, तन्त्रावापः, वापदण्ड वा), तसरः[8] (त्रसरः. मल्लकी ढरकीत लोकभाषायां वा), तान्त्वम् (ओतुः तानेति वा लोकभाषायां) तिर्यक्तत्तवः (वयनं वानोति वा लोकभाषायां) इत्यादीनि महत्त्वपूर्णानि सन्ति। एषामुपकरणानां सहाय्येन वस्त्राणि[9] निर्मीयन्ते स्म।

तान्तवोत्वोः सम्यक् ज्ञानं विना वस्त्रवयनमत्यन्तं कठिनमासीत्, यतोऽस्य दुरूहताया एकस्मिन् स्थले उल्लेखो[10] विद्यते। अयमुद्योग ईदृश उत्कर्षपूर्ण आसीत्; येनैवं प्रतीयते यत् स्त्रीभिर्वयनीकृते वस्त्रेऽपि पश्चात् सूचिकया[11] कलात्मकमलङ्-

1. ऋक्० 2।14।3...सोमैरोणुं त जूर्नं वस्त्रैः।
2. ऋक्० 10।26।6 . वासो वायोऽवीनां मा वासांसि।
3. वैदिकइण्डिया, रैगोजिन, प्र० सं०, पृ० 306
4. ऋक्० 2।3।6, 38।4, 5।47।6
5. ऋग्वेदे 2।85।5 मा तन्तुश्छेदि वयतो...... ।
6. ऋक्० 10।106।1 वि तन्वाथे धियो वस्त्राण्यसैव।
7. ऋग्वेदे ५।71।9
8. ऋग्वेदे 10।130।2 इमे...सामानि चक्रुस्तसराणि ओतवे।
9. ऋक्० 10।130।2...इमे मयूखा उपदेसरू सदः सामानि चक्रुस्तसराण्योतवे।
10. ऋक्० 6।9।2 नाहं तन्तुं न वि जानाम्योतुं न यं वयन्ति समरेऽतमाना। 6।9।3 स इत्तन्तुं स वि जानात्योतुं...।
11. ऋक्० 2।32।4, 5।56।6, 7।34।11, 8।31।8, 10।1।4, 10।92।4

रणमणि क्रियतेस्म । कतिपयैः ऋग्वैदिक[1] संन्दर्भैरिदं तथ्यं विश्वेश्वर[2] नाथरेनू डॉ० पी० एल० भार्गव[3] प्रभृतयो विद्वांसोऽपि प्रतिपादितवन्तः ।

समीक्षा-ऋग्वेदस्य अनेकसन्दर्भान् दृष्ट्वा विचारानन्तरं निश्चितरूपेण कथयितुं शक्यते, यत् ऋग्वैदिककाले सप्तसैन्धव[4] प्रदेशे वस्त्रनिर्मितिरर्थकारिण्या आजीविकाया रूपेऽत्यधिकलोकप्रियाऽऽसीत् यतः यज्ञादिक्रियास्वपि[5] वयनस्य प्रतीकात्मरूपे क्रियामारोप्य अस्याः समृद्धिपूर्णलोकप्रियतायाः प्रकारान्तरेण ऋषयः सकेंतमकुर्वन् । रेगोजिनमहोदयानामियमवधारणाऽपि तथ्यपूर्णा प्रतिभाति, यद् इतः (सप्तसिन्धुप्रदेशतः) वस्त्राणि प्रचुराणि निर्मितानि भूत्वा वेविलोनियासी-रियाप्रभृतिसमीपस्थदेशान् प्रति प्रेषितान्यासन् ।[6] □

---

1. ऋक्० 2।32।4 सीव्यत्वपः सूच्याच्छिद्यमानया ।
2. ऋग्वेद पर एक ऐतिहासिक दृष्टि, वि० ना० रेनू, दिल्ली, 1967, पृ० 196
3. India in the Vedic Age, Bhargava, Lucknow, 1971. P. 263
4. द्रष्टव्यः लेखकस्य–"सप्तसैन्धवप्रदेश–ऋग्वेद के आधार पर भौगोलिक अध्ययन" इति ग्रन्थः
5. ऋक्० 10।130।1, 7।33।9, 12
6. पंचमे विश्वसंस्कृत-सम्मेलने, वाराणस्यां, प्रस्तुतं शोधपत्रम् । लक्ष्मणपुरीया-काशवाण्या प्रसारिता एतद् विषयसंस्कृतवार्ता । अजस्रा, (त्रैमासिकी) 4।4, 1981 ई० वर्णीयङ्कः, पृ० 31-34

—लक्ष्मणपुरम्

सागरिका–21।1, 2039 वि० सं० अङ्कः, पृ० 91–94

# वैदिकयुगीनभारतस्य भौगोलिक-स्थितिविमर्शः

वेदाः विश्वविश्रुतभारतस्य पुरातनसंस्कृतेः पावनतमाः स्मारकाः येषु निखिलधर्मदर्शनकलेतिहासभूगोलादिविविधि ज्ञानविज्ञान-पूर्णविषयाणां सम्यक् सन्निवेशोऽस्ति । प्रस्तुते संक्षिप्ते शोधलेखे वैदिकयुगीन भारतस्य भौगोलिक स्थितिः सोदाहरणं विविच्यते ।

प्रारम्भिके वैदिकयुगे भारतस्य भौगोलिकविस्तारः मध्यदेशीयसमुद्रहिमवन्तपर्यन्तमासीन्, यस्मिन् मूजवच्छर्यणावत् हिमवन्तार्बुदप्रभृतिपर्वताः, त्रिधन्वयोजना, सिन्धुसरस्वतीसदृशसप्त सिन्धवो विशेषरूपेण उल्लेखनीयाः सन्ति ।

यथा—"अष्टौ व्यख्यत् ककुभः पृथिव्यास्त्री धन्वयोजना सप्तसिन्धून् ।"

ऋक्० 1।35।8

"यस्येमे हिमवन्तो महित्वा यस्य समुद्रं रसया सहाहुः ।"

ऋक्० 10।121।4

"न त्वा वृहन्तो अद्रयो वरन्त इन्द्र वीलवः ।" ऋक्० 8।77।3

"दवः पृथिव्योरव आवृणीमहे मातृन् सिन्धून् पर्वताञ्छर्यणावतः ।"

ऋक्० 10।35।2

यद्यपि सप्त सिन्धूनां प्रदेशस्य पश्चिमोत्तरभूभागे प्राधान्यमासीत् तथापि नानानदनदीनामपि वर्णनमत्यन्तं महत्त्वपूर्णमस्ति । यथा—

"इमं मे गंगे यमुने सरस्वति शुतुद्रि स्तोमं सचतापरुष्ण्या ।
असिक्न्या मरुद्वृधे वितस्तयार्जीकीये श्रुणुह्या सुषोमया ॥
तृष्टामया प्रथमं यातवे सजूः सुसर्त्वा रसया श्वेत्या त्या ।
त्वं सिन्धो कुभया गोमतीं क्रुमुं मेहत्न्वा सरथं याभिरीयसे ॥"

ऋक्० 10।75।5, 6

वैदिककालीनभारते सप्तसिन्धुप्रदेशे सीमान्तपरावत् अर्वावत् सारस्वत्–शर्यणावतसदृश चतुः समुद्राणामवस्थितौ सति द्वयोः समुद्रयोरेव प्राधान्यमासीत् । यथा—

"उभौ समुद्रावा क्षेति यश्च पूर्व उतापरः।" ऋक्० 1।136

"परावति अर्वावति समुद्रे·····।" ऋक् 1।182।5

परवर्तिशतपथैतरेयब्राह्मणादि ग्रन्थेष्वप्यनयोरुल्लेखो विद्यते।

प्रतीयते, प्रारम्भिके वैदिककालीने भूभागे भूकम्पादिप्राकृतिकशक्तिभिः प्रभूतं परिवर्तनं बभूव–(पर्वतशृंगाणां भ्रंशनम्, समुद्रनदीतलानामुन्मज्जनञ्च)। यस्य संकेतः न केवलं ऋग्वेदस्य द्वितीयमण्डले–"यः पृथिवीं व्यथमानामदृहद् यः पर्वतान् प्रकुपितानरम्णात्?।" अपितु ताण्ड्यजैमिनीयब्राह्मणग्रन्थयोः सरस्वत्याः विलोपप्रादुर्भावयोरुल्लेखः[2] विनशनप्लक्षरूपयोः प्राप्यते। श्री वी० वी० केतकर[3] महोदयेन भूगर्भविज्ञानानुसारं राजस्थान क्षेत्रस्य समुद्रगर्भात् प्राकट्यं ईस्वीपूर्वसार्द्ध सप्तसहस्रवर्षपूर्वमनुमानितम्। अथर्ववेदकाले तु परावत्-अर्वावत्-समुद्र मध्यवर्तिक्षेत्रे स्थलोन्मेषे सति सप्तसिन्धु प्रदेशस्य पूर्वीय भूभागे मगधांगादि राज्यानां संस्थापना बभूव, येषु सोमपार्य्याणां यदुतुर्वशानुद्रुह्यु पुरुतृत्सु प्रभृतिजनानां राज्यविस्तार आसीत्, येषामुल्लेखोऽनेकेषु स्थलेषु विद्यते। यथा–

"यदिन्द्राग्नी यदुषु तुर्वशेषु यद् द्रुह्युष्वनुषु पूरुषु स्थः।
अतः परि वृषणावा हि यातमथा सोमस्य पिबत सुतस्य॥"

ऋक्० 10।108।8

असुर-दानव-दास-दस्युपणिप्रभृतिपर्वतीयकृष्णानार्यजनानामिव पश्चिमी सीमान्तप्रदेशीयाः पक्थभलानसशिवालिन् विषाणिन् जना अपि आर्याणाममित्राण्यासन्, येषामुल्लेखोऽप्यनेकमंत्रेषु प्राप्यते। यथा–

"अकर्मा दस्युरभि वो अमन्तुरन्यव्रतो अमानुषः।
त्वं तस्यामित्रहन् वधर्दासस्य दम्भय॥"

ऋक्० 10।22।8

"अपक्थासो भलानसो भनन्तालिनासो विषाणिनः शिवासः।
आ यो नयत्सधमा आर्यस्य गव्या तृत्सुभ्यो अजगन्युधा नृन्॥"

ऋक्० 7।1

"अधि बृबुः पणीनां वर्षिष्ठे मूर्धन्नस्थात्। उरुः कक्ष्यो न गांग्यः॥"

ऋक्० 45

---

1. ऋग्वेदे, 2।15।6
2. ताण्ड्य ब्राह्मणे 25।10।1, 16 जैमिनि ब्राह्मणे 2।2, 97
3. प्रथम प्राच्यविद्या सम्मेलनम्, 1919, पुणे (Ist Sessien A. i. O. C. Pune)

सामान्यतः समशीतोष्णजलवायुप्रभावितैः ऋषीणां पर्जन्य सदृशसूक्तैः प्रभूतवर्षायाः शोभनं वर्णनं वर्तते। यथा–

"प्रवाता वान्ति पतयन्ति विद्युत् उदोषधी जिहृते पिवन्ते स्वः।"
"अवर्षीर्वर्षमुदुषु गृभायाकं धन्वान्यत्येतवा।"

ऋक्० 5।83।4, 10

पर्याप्तवर्षया सदा हरितसघनवनानामप्यधिकताऽऽसीत्, किन्तु कथंकयाँ दीर्घ शीततौं सामान्यतः हिमपातेन वनद्रुमाणां पणान्यपि विनष्टानि भवन्ति स्म।

"हिमेव पर्णा मुषिता वनानि वृहस्पतिनाकृपयद्वलो गाः।"

ऋक्० 10।68।10

यद्यपि वैदिकयुगे वनानि मानवाजीविकाया आधारभूतानि साधनानि आसन्, येषु धेन्वजाविकाश्वादीनां पशुपालनम्, आखेटकाष्टाद्युयोगाः प्राधान्येन प्रचेलुः, तथापि कृषिकार्येऽपि कर्मशीलार्याणामभिरुचिन्यू"ना नासीत्। द्यूतादिदुर्व्यसनेभ्यो दूरीकृत्य सामाजिकसमृद्ध्यै मंगलकामनायै च कृषिं प्रति ध्यानाकर्षणं कृत्वा वैदिक ऋषिः कथयति–

"अक्षैर्मा दीव्यः कृषिमित् कृषस्व विते रमस्व बहुमन्यमानः।
तत्र गावः कितवः तत्र जाया तन्मे विचष्टे सवितायमर्यः॥"

ऋक्० 10।34।12

"शुनं नः फालाः विकृषन्तु भूमिं शुनं कीनाशा अभियान्तु वाहैः।
शुनं पर्जन्यो मधुना पयोभिः शुनासीरा शुनमस्मासु धत्तम्॥

ऋक्० 4।57।8

कृषिसम्बन्धिसन्दर्भे तैत्तिरीय[1] संहितायामपि ऋत्वनुकूलं यवव्रीहि प्रभृतिधान्यानां वपनपरिपाकयोरुलेखो विद्यते। कृषिविषयकविविधानां क्रियाणामपि वर्णनं वर्तते परवर्ति वैदिक साहित्ये। यथा शतपथ ब्राह्मणे–

"कृषन्त वपन्तः लुनन्तः मृणन्तः।"

(–शत० 1।6।1।3)

सामान्यतः शीततौंः शस्यं चैत्रमासे[2] पचति स्म। तद्युगीन परिवारे श्रमपूर्ण जीविकायां वैविध्यमपि वर्तते। यथा–

---

1. तैत्ति० संहितायाम्–7।2।10।2।
2. कौषीतकिब्राह्मणे–19।3

"कारुरहं ततो भिषगुपलप्रक्षिणी नना।
नानाधियो वसूयतोऽनुगा इव तस्थिमेन्द्रायेन्दो परिस्रव ॥"
ऋक्० 9।112।3

बहूद्योगिनो वैदिकार्याः ऊर्णिकार्पासिकस्यूत व्युत वस्त्रैः, पौष्टिकान्नपानेन ग्रीष्मशीतवर्षांत्राणकारिगृहावासेन च रुक्मवक्षाः मणिग्रीवाः हिरण्यकर्णाश्च भूत्वा सुखेन जीवन यापयामासुः। तत्कालीनं गृहनिर्माण कलाऽपि ईदृश्युत्कर्षपूर्णा जल-वाय्वनुकूला चासीत् यत् सहस्रस्तम्भमयदीर्घगृहाणां निर्माणमभूत्—

"सहस्रस्थूणं विभृथः सह द्वौ…।" ऋक्० 5।62।6

वैदिकयुगीना राज्य व्यवस्था कुलपग्रामणीव्राजपतिविश्पतिराजादिभिः कुलग्रामव्रजपुरविश्जनराष्ट्रादिविविधरूपेषु संविभाज्य सम्यग्रपेण संचाल्यते स्म। व्यापकप्राशासनिकप्रभुसत्तादृष्ट्या राष्ट्रे 'सम्राट्, एकराट् पदधारिणः राजानः सेनापति-पुरोहित (प्रधानमंत्रिणाम्) प्रभृत्यधिकारिणां साहाय्येन सभा-समिति सदृशलोकतंत्रात्मकप्रणाल्या प्राशासन्; परन्तु पारस्परिक-सामयिक-राजनैतिक-सामाजिक-धार्मिक-मतभेदैः युद्धा अप्यनिवार्याः भवन्ति स्म, येषु युद्धेषु विविध-शस्त्रास्त्र प्रयोगेन सह सांग्रामिककूटनीतेः, प्राकृतिकशक्तीनां भौगोलिक कारकानां (नदीप्रवाहपर्वतावरोधभयकरवृष्टि प्रभृतीनामपि) प्रत्यक्षं प्रभावः परिलक्ष्यते। राजा दिवोदासकाले पर्वतीयप्रदेशे सम्पन्नः आर्यानार्ययुद्धस्तत्सुराज सुदास समये जलप्रवाहपूर्णपरुष्णीतटे दाशराज्ञयुद्धश्च तथ्यमिम प्रमाणयतः।

प्रायः परुष्णीवितस्तासरस्वत्यादिनदीनां सुरम्यतटेषु भरद्वाजवशिष्ठ विश्वामित्र वामदेवजमदग्निकण्वादिमुनीनामाश्रमाः आसन्, येषु धर्मदर्शनकला-ज्ञानविज्ञानानां पराकाष्ठां प्राप्य वैदिकसंस्कृतेः समुज्ज्वला, शाश्वती, सार्वभौमिकी च समृद्धिरधिगताऽऽसीत्। सूर्याग्निवायुपर्जन्य वरुणपृथ्वीन्द्रादिप्राकृतिकशक्तीनामु-पासना, हवनपंचमहायज्ञसंस्काराश्रमपुरुषार्थादीनां व्यवस्था धर्मदर्शनयोराध्या-त्मिकता कर्मवादिताशावादिता मोक्षादीनामवधारणा ऋषीणामार्याणां च राष्ट्रिय-सांस्कृतिकैकतायाः समुपलब्धये एका महती संसिद्धिरासीत्।

वैदिकयुगीन सांस्कृतिकोत्कर्षज्ञानाय महर्षिभरद्वाजवशिष्ठयोः यौद्धिकवर्णन-पूर्णसैन्यविज्ञानसम्बन्धिमंत्राः, कृषिविकास सम्बन्धिनो वामदेवस्य मंत्राः, ज्योतिष-विषयका अत्रिमुनेर्मंत्राः, वनस्पतिजीवविज्ञान विषयका, अगस्त्यस्य मंत्राः, भौगोलिकज्ञानाय श्यावाश्वस्य मंत्राश्च महत्त्वपूर्णाः सन्ति।

वैदिक सप्तसैन्धवप्रदेशीयानां पावनसप्तनदीनामखण्डभावात्मकैकतासंवर्ध-नाय न केवलं तद्युगीनार्यावर्ते मध्यदेशे वाऽपितु समग्रे भारतेऽपि महत्त्वमासीत्।

अद्यापि प्रत्येकः श्रद्धालुः भारतीयः पुरातन सांस्कृतिकैतिहासिकधार्मिकभावाभिभूतो भूत्वाऽऽसां पावनं राष्ट्रव्यापि स्वरूपस्य स्मरण स्नानसमये करोत्येव–

"गंगश्च जमुनश्च गोदावरी सरस्वती।
नर्मदा सिन्धुकावेरी जलेऽस्मिन् सन्निधिं कुरु ॥"

परमप्रतापि तृत्सूनां (पुरु/कुरु भरतानां) वैदिकयुगे या यज्ञियसंस्कृतिः 'भारती' प्रादुर्भूय सांस्कृतिक समृद्धिं विजयञ्चाधिगत्य कालान्तरेऽस्य राष्ट्रस्य नामकरणेऽपि आधारवती बभूव। पुरुवंशिदौष्यन्तेः भरतस्य प्रतापमहिमा न केवलं शतपथब्राह्मणे (13।5।3।13) वर्णितोऽस्ति, प्रत्युत निरुक्ताधारेण मनुपरम्परया ऋषभपुत्र+भरतस्याऽपि वर्णनं विद्यते पुराण ग्रन्थेषु ?–

"भरणात् प्रजानां चैव मनुर्भरत उच्यते।
निरुक्तवचनाच्चैव वर्षं तद् भारतं स्मृतम्।"

(वायु० 45।76, मत्स्यपुराणे 114।5-6)

अस्याः यज्ञियभारतीसंस्कृतेः संरक्षणं सम्प्रसारणञ्ज मनीषीभिर्मुनिभिः, मनस्विभिरार्यैः सतत न केवलं स्वदेशेऽपितु शतारित्रमयनौकाभिः समुद्रं तीर्त्वाऽन्यदेशेषु द्वीपान्तरेष्वपि परिभ्रम्य कृतम्। अस्य संकेतः ऋग्वेदेऽनेकस्थलेषु वर्तते। यथा–

"अनारम्भणे ..अग्रभणे समुद्रे . शतारित्रां नावमातस्थिवांसम्।"

ऋक्० 1।116।5

"प्रयत्समुद्रमतिशूरपर्षिपारया ..तुर्वशं यदुं स्वस्ति।"

ऋक्० 1।174।9

"वि द्विपानि पापतन्तिष्ठद् दुच्छुनो मे ॥"

ऋक्० 8।20।4

साम्प्रतमपि वैदिक भारती संस्कृतेः स्वदेशे ईरानेराकवेबिलोनियासीरिया-हिन्देशियादिदेशेषु च पुरातनावशेषा; बाहुल्येन प्राप्यन्ते। अस्माभिः स्वदेशानु-रागिभिस्तस्याः गौरवसंरक्षणार्थमादर्शानामनुकरणार्थञ्च राष्ट्रिय सांस्कृतिकैकतायै सततं सदाचरणीयम्।[1] इति शम्। □

---

+1. वायुपुराणे–33।51,52 मार्कण्डेयपुराणे–53।39,40

1. दृष्टव्यः लेखकस्य लेखोऽयं संस्कृत विमर्शः 14/1, 1986 ई० अंकः, राष्ट्रीय संस्कृत संस्थानं नवदिल्ली, पृ० 10–16।

# सप्तद्वीपवती पृथ्वी

पृथ्वी परमोदाररमणीया परिलक्ष्यते प्राकृतिकरूपैः । नानानदीनदवनगिरि-सागरसरोवरद्वीपादीनां शोभया पृथ्वी सदैव सर्वेभ्यः स्पृहणीया सञ्जाता । समुद्र-रशना पृथ्वी प्रथिता सर्वतः सलिलावृतैरनेकैः रम्यद्वीपैः । एतेषां पृथिव्याः द्वीपानां संख्या पृथक्-पृथक् निर्दिष्टा पुरातनसाहित्यग्रन्थेषु ।

ऋग्वेदे सागरे द्वीपाना[1] मवस्थितिर्ज्ञायते । वा० रामायणे[2] जम्बूद्वीपसहित-यव सुवर्णरूप्यकलंकादिनानाद्वीपानामुल्लेखोऽस्ति । कविकुलगुरुः कालिदासः[3] स्वकाव्यकृतिषु पृथिव्याः विभिन्नसंख्याकद्वीपानामुल्लेखं करोति । यथा–

'पुरा सप्तद्वीपामवति वसुधामप्रतिरथः ।'

–अभि० 7।33

'संग्राम निर्विष्टसहस्रबाहुरष्टादश द्वीपनिखात यूपः ।'

–रघु० 6।38

डॉ० वासुदेवशरण अग्रवाल, म० म० गिरिधरशर्मचतुर्वेद प्रभृतिविद्वांसः द्वीपानां चतुःसप्तनवसंख्याञ्चापि स्वीकुर्वन्ति, किन्तु पुराणेषु पृथिव्याः विराट् भौगोलिकविस्तारदृष्ट्या प्रमुखतया प्रतिपादिताः सप्तद्वीपा इमे सन्ति–

"जम्बूप्लक्षाह्वयो द्वीपौ शाल्मलश्चापरो द्विज ।
कुशः क्रौञ्चस्तथा शाकः पुष्करश्चैव सप्तमः ।।
एते द्वीपाः समुद्रैस्तु सप्तसप्तभिरावृताः ।
लवणेक्षुसुरासर्पिर्दधिदुग्धजलैः समम् ।।"

–वि० पु० 2।5-6

---

1. ऋक्० 8।20।4 वि द्वीपानि पापतं तिष्ठद् दुच्छुनो मे । द्रष्टव्यो लेखकस्य शोध ग्रन्थः 'ऋग्वैदिक भूगोल (सप्तसैन्धव प्रदेशः) कर्णपुरम्, 1985 ।
2. वा० रामा० किष्किन्धा० 40।28, 59, 60, 41।36
3. रघु० 6।57 द्वीपान्तरानीतलवंगपुष्पैरेला···, द्रष्टव्यः लेखकस्य शोधग्रन्थः 'कालिदास की कृतियां में भौगोलिक स्थलों का प्रत्यभिज्ञान' कानपुरम्, 1969
4. भारत सावित्री, दिल्ली, प्रथम, पृ० 118 ।
5. पुराणपरिशीलन, पटना, 1970, पृ० 311 ।

पुराणेषु पृथिव्याः सप्तद्वीपानां स्वरूपाः भौगोलिक दृष्ट्या वर्णितः भुवनकोशरूपेण। एषामभिधानं प्रमुखवनस्पति (वृक्ष) नामाधारेण, स्थलसंरचनायां विशिष्टपर्वतादीनां नामाधारेण व कृतम्। सप्तद्वीपेषु क्षेत्रीयविभाजनदृष्ट्य सप्तभूखण्डानां वर्षाणां, स्थलीयस्वरूपे प्रमुखसप्तपर्वतानां, प्रवाहप्रणाल्यां सप्तप्रमुख नदीनां, निवासकारिजनजातीनां प्राणिनाञ्चोल्लेखः प्राप्यते। कुत्रचित् सप्तद्वीपानां स्वरूपे वर्षनदीपर्वताभिधानेषु परस्परं वैभिन्न्यमपि वर्तते।

(1) जम्बूद्वीपः–पृथिव्याः सप्तद्वीपेषु प्रमुखः। अस्यावस्थितिस्तेषां मध्ये क्षारसमुद्रे वर्णिताऽस्ति। भूखण्डेऽस्य भारत किम्पुरुष हरिवर्ष रम्यक हिरण्मयोत्तरकुरुभद्राश्व केतुमालेलावृत्तवर्षाणि, हिमवान्हेमकूट निषधनीलश्वेतशृगिपर्वताः सीतालकनन्दाचक्षुः भद्रादि नद्यः, देवगन्धर्वयक्षकिन्नरनागदानवमानवजातयश्चोल्लेखनीयाः सन्ति।

मध्यवर्तिमेरु[1] परिसरे जम्बूप्रमुखवृक्षाणामुत्पत्या, जम्बूफलरसेन जम्बूनद्याः प्रवाहेण, क्षेत्रीयमृत्तिकायां जाम्बूनदसुवर्णोत्पत्या चाऽयं जम्बूद्वीपमभिधानं प्राप्नोति। अस्य समीकरणं वर्तमान एशियामहाद्वीपेन समं कर्तुं शक्यते।

(2) प्लक्षद्वीपः–प्रतीयते, प्लक्षद्वीपे प्राकृतिक वनस्पतौ प्लक्ष (लोकभाषायां पाकरेति) वृक्षाणामधिकताऽऽसीत्। विस्तारेऽयं जम्बद्वीपाद् द्विगुणः क्षारोदधिसंवृतः एवं वर्णितो विष्णुपुराणे–

"क्षारोदेन यथा द्वीपो जम्बूसंज्ञोऽभिवेष्टितः।
संवेष्ट्य क्षारमुदधिं प्लक्षद्वीपस्तथा 'स्थितः॥
जम्बूद्वीपस्य विस्तारः शतसाहस्रसम्मितः।
स एव द्विगुणो ब्रह्मन् प्लक्षद्वीप उदाहृतः॥"

वि० पु० 4।1-2

प्लक्षद्वीपेश्वरस्य मेधातिथेः शान्तहय शिशिरसुखोदयानन्दशिव क्षेमक सप्तपुत्राणां नामानुसारेणाऽस्य सप्तभूखण्डानि वर्षाणि, गोमेदः चन्द्रनारद दुन्दुभि सोमकसुमनसवैभ्राज प्रभृति पर्वताः, अनुतप्ता शिखी विपाशात्रिदिवाक्लमामृतासुकृतासप्तसरितः, पञ्चजनजातयश्चोल्लेखनीयाः सन्ति।

प्लक्षद्वीपस्य प्रत्यभिज्ञानं डॉ० एम० एम० अलीमहोदयः भूमध्यसागरपरिवृतक्षेत्रेण सहकृतवान्, एतदसमीचीनं खलु। उत्तरी अमेरिकामहाद्वीपेन समं समीकरणमस्य समुचितं प्रतिभाति भौगोलिकतथ्य दृष्ट्या।

---

1. विष्णु० 2।8 जम्बूद्वीपः समस्तानामेतेषां मध्यसंस्थितः। तस्यापि मेरुर्मैत्रेय मध्ये कनक पर्वतः। 2।9 चतुराशीतिसाहस्रो योजनैरस्य चोच्छ्रयः। प्रविष्टः षोडशाधस्ताद् द्वात्रिंशन्मूर्ध्नि विस्तृतः।

(3) शाल्मलीद्वीपः—शाल्मली (लोकभाषायां सेमल) वृक्षसमृद्धोऽयं द्वीपः इक्षुरसोदधि संवृतः एवमुल्लिखितः पुराणे–

"शाल्मलेन समुद्रोऽसौ द्वीपेनेक्षुरसोदकः ।
विस्तार द्विगुणेनाथ पर्वतः संवृतः स्थितः ॥"

—वि० पु० 4।24

शाल्मलेश्वरवपुष्मतः सप्तपुत्राणां—श्वेतहरितजीमूतरोहितवैद्युत मानससुप्रभनामानुसारमस्य सप्तवर्षाणि, कुमुदोन्नतवलाहकद्रोणकंकमहिष ककुद्मानादि सप्तपर्वताः, योनितोयावितृष्णाचन्द्रामुक्ताविमोचिनी निवृत्तीति सप्तनद्यः, पञ्चजनाश्चोल्लेखनीयाः सन्ति ।

श्रीमद्भागवतादि पुराणेषु अन्यानि नामानि वर्षपर्वतनदीनां प्राप्यन्ते ।[1] शाल्मलीद्वीपस्य समीकरणमफ्रीकामहाद्वीपेन समं सर्वथा समीचीनमस्ति । डॉ० एस० एम० अलीमहाशयोऽपि स्वाभिमतं एवमेव प्रकटयति 'Geography In the Puranas' नाम्निग्रन्थे ।

(4) कुशद्वीपः—प्राकृतिक वनस्पतौ प्रमुखतया प्रादुर्भूतकुशस्तम्बानां संज्ञया संश्रुतोऽयं द्वीपः शाल्मलीद्वीपाद्द्विगुणः, घृतोदकेन समावृतः । ज्योतिष्मतः उद्भिद्वेणुमत्वैरथलम्बन घृतिप्रभाकरकपिल सप्त पुत्राणां नामानुसारेण सप्तवर्षाणि, विद्रुमहेमशैलद्युतिमान् पुष्पवान्कुशेशयहरिमन्दराचल सप्तपर्वताः, धूत पापाशिवापवित्रासम्मतिविद्युदम्भा महीतिसप्तनद्यः देवगन्धर्वयक्षकिन्नरदैत्यदानवमानवश्चोल्लेखनीयाः सन्ति ।

डॉ० एस० एम० अलीमहोदयः कुशद्वीपमरबप्रायद्वीपेन समं समीकरोति, एतदसमीचीनं भौगोलिकतथ्यैः । इमं द्वीपं दक्षिणी अमेरिकामहाद्वीपेन समं समीकर्तुं शक्यतेऽनुकूलप्राकृतिकवनस्पति दृष्ट्या ।

(5) क्रौञ्चद्वीपः—स्थलानुसारं संरचनायां क्रौञ्चप्रमुखपर्वताभिधानानुसारं नामास्य विश्रुतमवस्थितिश्च एवं वर्तते–

"क्रौञ्च द्वीपः समुद्रेण, दधिमण्डोदकेन च ।
आवृतः सर्वतः क्रौञ्चद्वीपस्तुल्येन मानतः ॥"

—वि० पु० 4।57

---

1. श्रीमद्भागवत० 5।20 अध्याये—सुरोचनसौमनस्य रमणक देववर्ष परिभद्रवर्षाणि, शतश्रृंग वामदेव कुन्दमुकुन्द पुष्पवर्षसहस्रश्रुति पर्वताः, अनुमति सिनीवालीसरस्वती कुहरजनीनन्दाराकानद्यश्च (आसां नदीनां वर्णनं सप्तसिन्धु क्षेत्रेऽपि विद्यते ऋग्वेदे० द्रष्टव्यः—सप्त सैन्धव प्रदेशः ऋग्वैदिक भूगोल, पृ० 173 ।

द्युतिमत: (घृतपृष्ठस्य वा) पुत्राणां नामानुसारं कुशलमन्दगोष्ण पीवरान्धकारकमुनि दुन्दुभीति सप्तवर्षाणि, क्रौञ्चवामनान्धकारकररत्नशैल दिवावृत पुण्डरीकवान् दुन्दुभीतिसप्तपर्वता:, गौरीकुमुद्वती संध्यारात्रिमनोजवा क्षान्ति (ख्याति) पुण्डरीकासप्तनद्य:, सिद्धचारणजातयश्चोल्लेखनीया -न्ति ।

क्रौञ्चद्वीपो वर्तमान योरूपमहाद्वीपादभिन्न: प्रतीयते । डॉ० एस० एम० अली प्रभृति भौगोलिका अप्येवं समर्थयन्ति ।

(6) शाकद्वीप:—शाक प्रधानप्राकृतिकवनस्पत्या समृद्ध: शाकद्वीप: द्वात्रिंशत् लक्षयोजनायाम: वर्णितो भागवतकारेण । क्षीरोदेन समावृतोऽयं महात्मन: भव्यस्य सप्तपुत्राणां नामानुसारं जलदकुमार सुकुमारमरीचक कुसुमोदमौदाकिमहाद्रुमेति-सप्तवर्षै:, उदयगिरिजलाधाररैवतकस्यामास्तगिरि आम्बिकेय केशरीतिसप्तपर्वतै:, सुकुमारीकुमारीनलिनी धेनुकेक्षुवेणुकागभस्तीति नदीभि: सिद्धगन्धर्वैश्च राराजते ।

शाकद्वीप: प्राकृतिक वनस्पत्या पूर्वीद्वीपसहितास्ट्रेलियामहाद्वीपादभिन्न: प्रतीयते । डॉ० एस० एम० अलीमहोदयस्य समीकरणमस्य मात्रेण्डोचीनप्रायद्वीपे सीमितत्वात् संकुचितममान्यञ्च ।

(7) पुष्करद्वीप:-पुष्करप्रमुखजलीय वनस्पतियुक्तोऽयं शाकद्वीपाद् द्विगुण: स्वादूदकेनोदधिना परिवेष्टित: वि० पु० 4.83 स्वादूदकेनोदधिना पुष्कर: परिवेष्टित: । समेन पुष्करस्यैव विस्तारान्मण्डलं तथा । महावीर (रमणक) धातकि वर्षान्वित:, मानसोत्तरपर्वतसहितो, नदीरहित:[1], साध्यदेवादिसेवित:, सर्वर्तुसुखद:, जरारोगादिवर्जितश्च विद्यते । पुष्करद्वीपस्य समीकरणं भौगोलिकतथ्यानुसारं ध्रुवक्षेत्रीयांटार्कटिकामहाद्वीपेन समं समीचीनम् । डॉ० एस० एम० अली[2] महाशय: इमं उत्तरीपूर्वीसाइबेरिया क्षेत्रे एव सीमितं करोति । अतोऽस्य संकुचितं समीकरणमसमीचीनममान्यञ्च !

संक्षेपे, कथयितुं शक्यते यत् 'सप्तद्वीपवती पृथ्वी वर्णनाऽस्माकं प्राज्ञपुराणकाराणां प्रतिभाया: परिकल्पनाशक्तेश्च चूडान्त निदर्शनम् । भुवनकोशरूपेऽस्यां चमत्कारिभूगोलवर्णनमस्माकं महती संस्कृतेर्व्यापक ज्ञानविज्ञानद्वारमुद्घाटयति । अतोऽस्यानुसन्धानदृष्ट्या गम्भीरमध्ययनं करणीयं, येनाविज्ञाता अन्धकारग्रस्ता: सप्तद्वीपा: सर्वेभ्य: सर्वथा प्रकाशिता: परिचिताश्च भवेयु:[3] । इति शम् ।

---

1. विष्णु० 4.82 न तत्र नद्य: शैला वा द्वीपे वर्षद्वयान्विते ।
2. Geography In the Puranas Lucknow 1967, P. 93.
3. द्रष्टव्य: लेखकस्य विस्तृत लेखोऽयं 'संस्कृत-विमर्श' (राष्ट्रीयसंस्कृतसंस्थानस्य त्रैमासिके शोधपत्रके) 15/2, 1987 ईस्वीयाङ्क: पृ० 27-32, नवदिल्ली । एतद्विषयकसंस्कृतवार्ताऽपि आकाशवाण्या: लखनऊकेन्द्रात् प्रसारिताऽऽसीत् ।

# संस्कृत-साहित्ये प्रागैतिहासिक-सन्दर्भाणामनुशीलनम्

इतिहास: सामान्यतया कालमूलक:, यस्मिन् मानवीयसभ्यतासंस्कृतिषु पुरातनशासकानां राज्यानाञ्चोत्कर्षापकर्षयोर्गाथा विद्यते । प्रागितिहासस्तु अतिपुरातनोऽलिखितोऽविज्ञातश्चास्ति । अत एव सामान्यजनेन अन्धकारमयोऽयं कथ्यते, तथापि पुरातनसंस्कृतसाहित्ये विद्यमानै: कतिपयसन्दर्भैरेनं प्रकाशयितुं प्रयास: क्रियतेतरामस्मिन् शोधलेखे ।

यद्यपि खगोलशास्त्रिभूगर्भशास्त्रिभौगोलिकादिवैज्ञानिकैश्चन्द्रमस: गुरुत्वाकर्षणेन[1] अवसादनक्रिया[2] सामुद्रिकलवणतया[3] तेजोद्गारि पदार्थै: विविधगणनाभिश्च पृथिव्या उत्पत्ति: पंचसप्ततिसहस्रवर्षतोऽर्बुदद्वयवर्षपूर्वं निर्धारिता[4]; तथापि मानवजीवनस्य उदयोऽस्यां पंचाशतसहस्रवर्षत: दशलक्षवर्षपूर्वस्यैव घटनास्ति ।[5] प्राचीनपृथिव्या इव आदिमानवस्य पुरातन: प्रागितिहासोऽभिलेखशून्योऽपि अनेकाप्तप्रमाणैर्ज्ञायते इतिहासविद्भि: । संस्कृतसाहित्येऽपि प्रागितिहाससम्बन्धिनोऽनेके सन्दर्भा विद्यन्ते ।

प्रागितिहासे पूर्वप्रसारयुग: पंचाशतसहस्रवर्षतो दशलक्षवर्षपर्यन्तं पूर्वं प्राचीनतमो मन्यते; यस्मिन्नर: पशुभि: समान एवासीत् । गृहनिर्माणज्ञानहीनोऽनावृत्ताङ्ग: स प्रथमन्तु सघनवृक्षच्छायासु पशूनां पिशितं भक्षयन् अवसत्, किन्तु कालान्तरे वृक्षाणां पर्णानि वल्कलवासांसि च धारयित्वा विविधहिंस्रपशुभि: संत्रासात् स गिरिगुहाश्रयं लेभे । संसारस्य प्राचीनतमे ग्रन्थे ऋग्वेदे ईदृशानां गिरिगुहावासिनां मनुष्याणामुल्लेखो विद्यतेऽनेकस्थलेषु । यथा—

---

1. G. Gamow, The Creation of the Universe, p. 21–23.
2. W. M. Smart, The Orgin of the Earth, p. 114.
3. G. Gamow, Biography of the Earth, p. 3.
4. बफन-खगोलशास्त्रिजार्जडार्विन, एडमण्ड हैली-जॉली, लाप्लास-ए० पोलक्रानोवगेरलिंग-प्रभृति वैज्ञानिकानां प्रयोगा: सिद्धान्ताश्च द्रष्टव्या: ।
5. मामोरिया एण्ड [illegible], भौतिक भूगोल के तत्त्व, 1972, पृ० 71 ।

"अवगिरेर्दासं शम्बरं हन प्रातो दिवोदासं चित्राभिरूती ।"

—ऋक्० 6।26।5

ऋषि: वामदेवो दिवोर्दासस्य शत्रूणां दस्यूनामेतेषां गिरिगुहावासिनामनायाणामेतादृशानां नवतिं वा शताश्ममयपर्वतीयपुराणामुल्लेख करोति—

"अहं पुरो मन्दसासो नव साकन्नतो शम्बरस्य ।"

—ऋक्० 4।26

"शतमश्मन्मयीनां पुरामिन्द्रो ।,.......

पुरो विभेदाश्मनेव पूर्वा:.......। —ऋक्० 4।30।20

ऋषिः गृत्समदोऽपि तथ्यमिदं प्रमाणयति ऋग्वेदे ।

—ऋक्० 2।14।6–7; 2।19।6; 2।20।8

दस्यून् पुर आयसीर्नितारीत् ।"

रामायणे किष्किन्धाकाण्डे वर्णिता वानराणां वसतिः । किष्किन्धा पूर्वपाषाणयुगादेव ऋष्मूकगिरिगुहायामवस्थितासीत् । रामनिदेशात् यदा तस्यानुजो लक्ष्मण: सुग्रीव-समीपं किष्किन्धामाजगाम, तदा तस्या गिरिगुहामयी स्थिति: सुव्यक्ता भवति—

प्रविवेश गुहां रम्यां किष्किन्धां रामशासनात् ।"

—रामा० किष्किन्धा 33।1

महाकविकालिदासवर्णिता: शैलवेश्मवासिनो दरीगृहेषु वन्यजीवनं यापयन्त: पुलिन्दकिरातकिन्नरवनेचराद्यादिमजातीयजना अपि पुरातनं गुहामानवं स्मारयन्ति । यथा—

"वनेचराणां वनितासखानां दरीगृहोत्संगनिषक्तभासः ।"

कुमार० 1।10

यत्रांशुकाक्षेपविलज्जितानां यदृच्छया किंपुरुषाङ्गनानाम् ।
दरीबिद्वारविलम्बिगृहम्बास्तिरस्करिण्यो जलदा भवन्ति ।।

—कुमार० 1।14

नीचैराख्यं—मुद्दामानि प्रथयति शिलावेश्मभियौंवनानि ।

—पूर्व मे० 52

सामान्यत आखेटकार्ये शस्त्रास्त्राणां विकासात्पूर्वं दशसहस्रवर्षपूर्वं उत्तरपाषाणकाले तद्युगीनमानवा वृक्षशाखानां पर्वतीयपाषाणखण्डानामेव प्रयोगमकुर्वन् । रामायणे पाषाणखण्डानां प्रयोगप्रवृत्तिर्वानराणामायोधने प्राप्यते । यथा—

"उद्यम्य गिरिश्रृंगाणि महान्ति शिखराणि च।
तरूँश्चोत्पाश्च विविधास्तिष्ठन्ति हरियूथपाः॥"
—युद्ध० 42।12

ते द्रुमैः पर्वताग्रैश्च प्लवंगमाः। —युद्ध० 42।15

उत्तरपाषाणकालपर्यन्तं पाषाणनिर्मितानामायुधानामेव प्रधानतासीत्, किन्तु उत्तरप्रस्तरयुगान्तरे चतुःसहस्रवर्षपूर्वं ताम्रयुगे (धातुयुगे वा (मानवोऽयस्ताम्रादि धातुभ्यः परिचितो बभूव। ऋग्वैदिकसंस्कृतिस्ताम्रयुगीनैव कथयितुं शक्यते यत् ऋग्वेदेऽनेकमंत्रेषु तत्कालीनार्याणां आयसीपुराणामुल्लेखेन सह ताम्रलौहनिर्मितवाशीद्रविः अत्काद्युपकरणानामपि वर्णनं विद्यते। यथा—

"दस्यून् परः आयसीर्नितारीत्। —ऋक्० 2।20।8

"वाशीमेको बिभर्ति हस्त आयसीमन्तर्देवेषु निध्रुविः।"
—ऋक्० 8।29।3

"वर्धी वनेव सुधितेभिरत्कैरा पृत्सु दर्षि नृणां नृतं॥"
ऋक्० 6।33।3

द्रविर्न द्रावयति दास दक्षत्। —ऋक्० 1।191।4

ताम्रयुगीनजनाः पाषाणकालीनमानवेभ्यः सभ्यतरादृश्यन्ते। तेऽग्निना पात्रे पशुमांसं पचन्ति स्म। कृषिपशुपालनाभ्यां चक्रस्याविष्कारमपि कृतवन्तः। वस्त्राभरणानामपि च प्रयोगमकुर्वन्। यथा ऋग्वेदे—

"ते वाजिनं परिपश्यन्ति पक्वं य ईमाहुः सुरभिर्निर्हरेति।
ये चार्वतो मांसभिक्षमुपासत उतो तेषामभिगूतिर्न इवन्तु॥"
—ऋक्० 1।162।12

"यन्नीक्षणं मांस्पचन्या उखाया या पात्राणि यूष्ण आसेचनानि।
अष्माण्यपिधाना चरूणामंका सूनाः परिभूषयन्त्यश्व॥"
—ऋक्० 1।12।13

"धानावन्तं करम्भिणमपूपवन्तमुक्थिनं। इन्द्र प्रातः जुषस्व नः।"
—ऋक्० 3।52।1

"खे रथस्य खे नसः खे युगस्य शतक्रतो।" ऋक्०— 8।80।7

"शुनं वाहाः शुनं नरः शुनं कृषतु लाङ्गलम्।
शुनं वरत्रा वध्यन्तां शुनमुष्ट्रामुदिंगय॥"
—ऋक्० 4।57।4

"युवा सुवासः परिवीत आगात्........" —ऋक्० 3।8।4

"वासो वायोऽवीनां वासांसि ममृजत् ।" —ऋक्० 10।26।6

"आकलशेषु धावति पवित्रे परिषिच्यते । उक्थैर्यज्ञेषु वर्धते ।।"

—ऋक्० 9।17।4

ताम्रयुगीनमानवो गृहनिर्माणकार्येऽपि ईदृश: कुशल आसीत्, यत् अनेक-प्राङ्गणप्रकोष्ठपर्वमयानि गृहाणि काष्ठेष्टका प्रस्तरादिपदार्थै निर्मितान्यासन तानि गृहहर्म्यछदिर्दुरोणद्वयंसुनामभिरभिधीयन्ते स्म । सहस्रद्वार–सहस्रस्तम्भमयभवनानामप्युल्लेखस्तत्कालीनविकसितगृहनिर्माणकलां प्रकटति । यथा ऋग्वेदे—

"सहस्रद्वारं जगमा गृहं ते ।" —ऋक्० 7।88।5

सहस्रस्थूणं विभृथ: सह द्वौ ।" —ऋक्० 5।62।6

ईसातो द्विसहस्रवर्षपूर्वं गृहनिर्माणे वास्तुकलायां परा गति: वेविलोनिया-पार्श्वे असूरियावासिभिरपि प्राप्तासीत् । तत्रत्या मयासुरसदृशवास्तुकारा भारते भवननिर्माणाय नियोजिताआसन् । यथा महाभारते सभापर्वणि महाराजो युधिष्ठिरो मयासुरं ईदृश्या दिव्यसभाया: निर्माणे नियुक्तवान्, यस्या: कुट्टिमे स्थलजलयो-र्भ्रान्तिर्जायेत्—

उत्तमद्रव्यसम्पन्ना रत्नप्राकातोरणा ।
बहुचित्रा बहुधना: सुकृता विश्वकर्मणा ।।
न दाशार्ही सुधर्मा वा ब्राह्मणो वाथ तादृशी ।
सभारूपेण सम्पन्ना यां चक्रे मतिमान् मय: ।।
मणिरत्नखचितां तु केचिद्भ्येत्य पार्थिव: ।
दृष्ट्वापि नाभ्यजानन्त तेऽज्ञानात् प्रपतन्त्युत ।।"

—महा० सभा० 3।26, 33, 27

उत्तरपाषाणकालोत्तरयुगीनमानव: सामाजिक राजनैतिकचेतनाभ्य: सुसम्पन्न: संदृश्यते । राजनैतिकधार्मिकसामाजिकमान्यतासु वैषम्यात् दिवोदासशासने चत्वारिंशद् वर्षपर्यन्तं देवासुरयो: (आर्यानार्ययो:) भयंकर: संग्रामोबभूव, यस्मिन् न केवलं पाषाण-लौहताम्रनिर्मितान्यस्त्रशस्त्राणि ऋष्टि-वाशी-धनुष् परशुखड्गादीनि प्रयुक्तान्यभवन् अपितु महर्षिदधीचेरस्थिभिर्निर्मितं वज्रसदृशमस्त्रमपि इन्द्रेण वृत्रोपरि प्रयुक्तमासीत् । यथा—

"इन्द्रो दधीचोऽस्थिभिवृत्राण्यप्रतिष्कृत: । जघान नवतीर्नव ।।"

—ऋक्० 1।84।13

कालान्तरे सुदासशासनसमये परुष्णीतटे दाशराज्ञयुद्धमतिभयंकरमासीत्, यस्मिन्नैकानि शस्त्राणि प्रयुक्तानि आसन्, यस्योलेख ऋग्वेदे विद्यते । यथा—

"वाशीमन्तः ऋष्टिमन्तो मनीषिणः ।
सुधन्वान इषुमन्तो निषंगिणः ॥" —ऋक्० 5।57।2

रामायण आयुधानांविकासो, वालिप्रभृतिवानराणां प्रागैतिहासिकी (पुरापाषाणकालीना) युद्धप्रवृत्तिश्च संलक्ष्यते । यथा–

"अयुध्यत् तदा वाली शक्रतुल्यपराक्रमः ।
मुष्टिभिर्जानुभिः पद्भिः शिलाभिः पादपस्तथा ॥"
रामा०, किष्किन्धा० 9/43

आदिमानवो हिंस्रपशुभिर्भयाक्रान्तो आजीविकार्थं आरम्भ आखेटाश्रित आसीत्, किन्तु कालान्तरे उत्तरपाषाणयुगेऽजाश्वगोप्रभृतिपशूनां पालनमकरोत् । ऋग्वेदे पशुपालनकृषिकाष्ठधातु-वस्त्रनिर्माणवाणिज्यादिनानार्थिकी क्रिया वर्णिताः सन्ति । यथा–

"गोभिर्यदी मन्ये अस्मन्मृगं न वा मृगयन्ते ।" —ऋक्० 8।2।6
शुनं न फाला विकृषन्तु भूमिं
शुनं कीनाशा अभियन्तु वाहैः ।
शुनं पर्जन्यो मधुना पयोभिः
शुनासीरा शुनमस्मासु धत्तम् ॥ —ऋक्० 4।57।8
मा तन्तुश्छेदि वयतो……… —ऋक्० 2।85।5
रथं न तष्ठेव तत्सिनाथ । -ऋक् 1।61।4
महे…………………परा शुल्काय देयाम् ।
न सहस्राय न युताय वज्रिवो न शताय शतामव ॥
—ऋक्० 8।1।5

उत्तरपाषाणयुगीनमानवा विविधधार्मिकसामाजिकपरम्पराणां पालनं राजपुरोहितनिर्देशानुसारेणांकुर्वन् । सामान्यतः समाजे संस्कारा प्रचलिता आसन् । अन्तिमसंस्कारे पूर्वपाषाणवत् शव क्षेत्रे बहिरानाक्षिप्य तस्य भूमौ अन्तःस्थापना, दाहकर्म वा क्रियतेस्म । मिस्रयूनानवेबिलोनियासीरियाप्रभृतिदेशेषु भारतेऽपि मृतकस्य आत्मशान्तये जीवनोपयोगिविविधवस्तूनि स्थाप्यन्ते स्म । कालान्तरे कुत्रचित्, चिरस्थायिनः कलात्मकाः स्मारका अपि निर्मीयन्ते स्म । वैदिकयुगे प्रथमचरणे शवानां भूमिसात् करणम्, किन्तु कालान्तरे दाहकर्म प्रचलितम् । पुरातनप्रेतक्रियाया निदर्शनं रामायणे राक्षसराजरावणस्य अन्तिमसंस्कारवर्णनेन ज्ञायते ।

प्रतीयते, प्रारम्भिकाः संगीतप्रिया मानवाः लौकिकवाद्यानामविकासे सति गोधचर्मणा निर्मितां गोधां पिंगां वा घटं गर्गरं वा [illegible] सुलभवाद्यरूपेण प्रयुज्यन्ते स्म ।

यथा ऋग्वेदे–

"अथ स्वाराति गर्गरो गोधा परिसनिष्वणत् ।
पिंगा परि च निष्कदन्द्रिन्द्राय ब्रह्मणोद्यतम् ॥"

–ऋक्० 8।58।

प्रागैतिहासिकेषु प्रमुखसन्दर्भेषु भौतिकपरिवर्तनकारिघटना उल्लेखनीयाः सन्ति। पृथिव्या आभ्यन्तरासन्तुलेन भूकम्पारतु प्रायशो विध्वसलीलामसृजन् यथा–

"यः पृथिवीं व्यथमानामदृंहत् ।
यः पर्वतान् प्रकुपितान रम्णात् ॥" –ऋक्० 2।12।2

उत्तरध्रुवीययवनैर्हिमप्रलयवत् भयंकरशीततौं हिमपातेन सामान्यतः वनद्रुमाणां पर्णानि विनष्टानि भवन्ति स्म–

"हिमेव पर्णा मुषिता वनानि ।" (ऋक्० 10।68।10)

उत्तरपाषाणयुगे चतुःसहस्राब्दे जलप्रलयस्य महत्त्वपूर्णघटनासीद यस्या उल्लेख ससारस्य निःशेषसाहित्ये प्राप्यते। प्रतीयते, पृथिव्या आन्तरिकशक्तिभिर्मध्यवर्तिसागरतलानामुन्मज्जनेन ऊद्ध्वंवर्तिजलौघो वैदिकवसतीनां विनाशाय प्रलयरूपेण प्रादुर्भूतः। हड़प्पा-मोहनजोदड़ोप्रभृत्यवशेषास्तु तासां पुरातनध्वस्ताः स्मारकाः सन्ति ।

संस्कृतसाहित्ये जलप्रलयस्य वर्णनं न केवलं शतपथब्राह्मणे (1।8।16) अपितु परवर्ति महाभारत-मत्स्य-मार्कण्डेयभागवतादिपुराणग्रन्थेषु प्राचुर्येण प्राप्यते। अस्मिन् जलप्रलयकाले मनोर्नौका त्रिककुदस्थले उत्तरगिरौ (हिमालये) अतिष्ठत्।

उपर्युक्तसन्दर्भेण (मनोर्नौकया जलप्रलयत्राणेन) इदं सिद्ध्यति यत् ताम्रयुगीना[1] वैदिकार्याः शतारित्रमयनौकाभिः सुदूरं सागरं तीर्त्वा ईरानेराकबेविलोनिया सूरियाप्रभृत्यन्यदेशेषु द्वीपान्तरेषु च धार्मिकसांस्कृतिक-राजनैतिक-वाणिज्यिकसम्बधान् स्थापितवन्तः। ऋग्वैदिकमनस्विभिः पणिभिः प्रायः पश्चिमएशियाफ्रीकायोरुपीयदेशेषु वाणिज्यव्याजेन आर्यसंस्कृतेः सम्प्रसारः कृतः ।

तद्युगीने एशियामाइनरक्षेत्रे 'बोगाज-कोई' स्थलात् सम्प्राप्ते सन्धिशिलापट्टे खत्ती (Hitlite) मितन्नी जातिसम्पूजिता इन्द्रवरुणमित्रनासत्याः ऋग्वैदिकदेवताः साक्षिरूपिण उल्लिखिताः सन्ति। अनेन संस्कृतसाहित्ये वेदानां महत्त्वं

1. राहुल सांकृत्यायनः, ऋग्वैदिक आर्य, 1957, इलाहाबाद, पृ० 26–27
उपाध्यायो भगवतशरणः, भारतीय कला का इतिहास, दिल्ली, पृ० 10–11
द्विवेदी कैलाशनाथः, ऋग्वैदिक भूगोल, कानपुर, 1984 (भूमिका)।

सार्वभौमं सिद्ध्यति ।

प्राचीनसंस्कृतसाहित्ये सामान्यतः प्रागैतिहासिकसन्दर्भा वाहुल्येन प्राप्यन्ते ।[1] एभिरस्माकं पुरातनसंस्कृतेः क्रमिकविकासः सम्यक् संलक्ष्यते । मानवीयविकासस्य असीमदिशि अस्माभिरग्रे कीदृशमुच्चलक्ष्यं ज्ञानविज्ञानाभ्यां प्राप्तव्यमिति सम्यगवधारणीयम् । □

1. द्रष्टव्योऽस्मदीयशोधलेखः सागरिका, 23/4, 2041 वि० सं० वर्षीयाङ्कः, पृ० 97–103
लेखकस्यैतद्विषयिका संस्कृतवार्ताऽऽकाशवाण्याः लक्ष्मणपुरकेन्द्रेण प्रसारिता ।

# कालिदासीयम्

## कालिदासवर्णिताश्रमाणां वैशिष्ट्यम्

कालिदासः संस्कृतवाङ्मयस्य मूर्धाभिषिक्तो महाकविरस्ति। तस्याप्रतिम-प्रतिभायाः संस्पर्शाज्जीवन-जगतोर्नाना वर्ण्यविषयाः सर्वथा ज्योतिर्मया, भूत्वा सहृदयसंवेद्याः सञ्जाताः। श्रीमतां के० एस०[1] रामस्वामिप्रभृतिविदुषां मतं समीचीनमेव यत् कालिदासस्य पावनमुन्याश्रमेषु महती आस्थाऽऽसीत्। अतएव तेन स्वकीयकाव्यकृतिषु पावनानामृष्याश्रमाणां वैशिष्ट्यपूर्णा मनोहारिणी छटाऽङ्किता, यस्या विवेचनमस्मिन्निबन्धे मया सोदाहरणं प्रस्तूयते।

महाकविवर्णिताश्रमाः संसारस्याशान्तवातावरणाद्दूरं, नगराद्बहिः पावन-पर्वतवनोपवनेषु प्रायः नदीतटस्य जलाशयस्य वा समीपस्था आसन्। कविना क्वचित्–कुत्रचिदेतेषां भौगोलिकस्थितिरपि स्पष्टतया निर्दिष्टाऽस्ति। उदाहर-णार्थम्–कण्वाश्रमो धर्मारण्ये[2] हिमालयपर्वतस्य पादशृंखलासु मालिनीनद्याः[3] समीपस्थ आसीत्। अभिज्ञानशाकुन्तलस्यानेकैरुद्धरणैरस्य संपुष्टिर्भवति। एवं

---

1. "The epics as well as the dramas are full of the tapovanas atmosphere. Sakuntala begins with Kanva's hermitage on the earth and closes with the hermitage of Maricha on the Hemkuta mountain, Raghuvansa beginings with Vasistha's hermitage. Kumarasambhava describes the hermitage of Siva, and later on the hermitage of Uma on Himalaya range."
–Kalidas, by K. S. Ramswami Shastri, II Edition. pp. 33-34.
2. अभिज्ञानशाकुन्तले 1।31 तीव्राघातप्रतिहततरुः······ धर्मारण्यं प्रविशतिगजः स्यन्दनालोकभीतं।
अभिज्ञानशाकुन्तले 5।9 किं तावद्व्रतिनाम्······धर्मारण्यचरेषु केनचिदुत प्राणिष्वसच्चेष्टितम्।
3. अभि० शा० 6।17 'कार्या सैकतलीनहंसमिथुनां स्रोतोवहा मालिनी।
पादास्तामभितो निषण्णहरिणा गौरीगुरोः पावनाः।'

रघुवंशमहाकाव्ये महाकविमतानुसारं वाल्मीकेराश्रमो गङ्गा-[1]तमसानद्योर्मध्य-वर्तिभूभागेऽवस्थित आसीत् । वशिष्ठाश्रमस्य स्थितिरपि हिमालयपर्वते गङ्गाया उद्गमक्षेत्र आसीत्, यस्मात् स्थलाच्चरन्ती सौरभेयी नन्दिनी गङ्गाप्रपातस्य समीपवर्ति-स्थले हिमालयीयगह्वरे प्रविवेश–

अन्येद्युरात्मानुचरस्य भावं जिज्ञासमाना मुनिहोमधेनुः ।
गङ्गाप्रपान्तान्तविरूढशष्पं गौरीगुरोर्गह्वरमाविवेश ॥
(रघु० 2।26)

एतेषामाश्रमाणां नैसर्गिकी–सुषमा हरितपादपपुञ्जैः पुष्पितपल्लवितसघन-लताकुञ्जैः कमलैर्हरितैस्सरोभिर्मृगमयूरादिपशुपक्षिभिश्च सर्वदा समृद्धाऽभवत् ।[2] आश्रमवासिनामेतेभ्य एतादृगव्याजस्नेहसम्बन्ध आसीत् यत्त एकैकस्य सुखदुःख-योरत्यन्तं संवेदनशीला अभवन् । प्रकृतेस्तादात्म्यस्यानया भावनया पतिगृहप्रस्थान-काले शकुन्तला एतान् सर्वाननुमतिं[3] ययाचे । कण्वाश्रमस्य सचेतना प्रकृतिः प्रस्थानवेलायां पूर्णसंवेदनां प्रदर्शयती चित्रिता महाकविना–

उद्गलितदर्भकवला मृग्यः परित्यक्तनर्तना मयूराः ।
अपसृतपाण्डुपत्रा मुञ्चन्त्यश्रूणीव लताः ॥
(अभि० शा० 4।12)

अयमेव मार्मिकभावो महाकविना वाल्मीकितपोवने रामाज्ञया लक्ष्मणेन परित्यक्तायाः सीताया परित्यागावसरे मार्मिकशब्देषु प्रकटितोऽस्ति–

'नृत्यं मयूराः कुसुमानि वृक्षा दर्भानुपात्तान्विजहुर्हरिण्यः ।
तस्याः प्रपन्ने समदुःखभावमत्यन्तमासीद्रुदितं वनेऽपि ॥'
(रघु० 14।69)

तपोवनरूपे इमे शान्ताश्रमा अनेकवीतरागमुनीनां निवासस्थानान्यासन्, यत्र रम्यसात्त्विकवातावरणे समाधिस्थास्ते निर्बाधतपश्चर्यायां निरता बभूवुः । मारीचाश्रमस्य एतादृशि लोकोत्तररम्यवातावरणे समाधिस्थतपस्विनः कविकुल-

1. रघु० 14।28 भागीरथीतीरतपोवनानि । 14।52 गांगं निवादाहृत-14।76 अशून्यतीरां ··तमसां विगाह्य ।
2. रघु० 11।12 नाम्भसां कमलशोभिनां ··, 13।46
3. अभि० शा० 4।9 पातुं न प्रथमं व्यवस्यति जलं युष्मास्वपीतेषु या,
नादत्ते प्रियमण्डनापि भवतां स्नेहेन या पल्लवम् ।
आद्ये वः कुसुमप्रसूतिसमये यस्या भवत्युत्सवः,
सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम् ॥

 

गुरुरत्यन्तं सुन्दरं चित्रणं कृतवान्–

वल्मीकार्धनिमग्नमूर्तिरुरसा संदष्टसर्पत्वचा,
कण्ठे जीर्णलताप्रतानवलयेनात्यर्थसंपीडितः ।
अंसव्यापिशकुन्तनीडनिचितं विभ्रज्जटामण्डल,
यत्र स्थाणुरिवाचलो मुनिरसावम्यर्कबिम्बं स्थितः ॥
(अभि० शा० 6।11)

एवं प्रकारेण तपस्विनः सुतीक्ष्णस्य महतीं तपश्चर्या[1] वर्णयन् शरभङ्गाश्रमे महात्मनः शरभङ्गस्य घोरं तपो महाकविना वर्णितमेतेषु शब्देषु रामचन्द्रस्य पुष्पकविमानेन प्रत्यागमनकाले–

अदः शरण्यं शरभङ्गनाम्नस्तपोवनं पावनमाहिताग्नेः ।
चिराय संतर्प्य समिद्भिरग्निं यो मंत्रपूतां तनुमप्यहौषीत् ॥
(रघु० 13।45)

एतेष्वाश्रमेषु नियमिता यज्ञहवनादिधार्मिकक्रिया मुनिभिर्नित्यं सम्पन्ना अभवन् । आश्रमप्राङ्गणेषु निर्मिता यज्ञवेदिकाः प्रातः सायं यज्ञाग्निना एतावत् प्रज्वलिता बभूवुः, (अभि० शा० 4।8 अमीं वेदि परितः···वह्नयः पावयन्तु) यत्ताभ्य उद्गतधूम्रेणाश्रमपादपानां किसलयान्यपि धूमिलानि[2] भवन्ति स्म । मुनिजनानामाश्रमं परितः वृक्षाणां गर्भकोटरेभ्यो भ्रष्टैर्नीवारैः इङ्गुदीफलभिद्भिः प्रस्निग्धैः प्रस्तरखण्डैः, जलबिन्दुभिर्रेखाङ्कितैर्जलाशयमार्गादिभिश्च दूरादेव एतेषामाश्रमाणां[3] ज्ञानं भवति स्म ।

वर्णनसाम्यदृष्ट्या-कविवर्णितेष्वेतेषु यज्ञस्थानतपः स्थानप्रधानेष्वाश्रमेषु

---

1. रघु० 13।41 हविर्भुजामेधवतां चतुर्णां मध्ये ललाटंतपसप्तसप्तिः ।
असौ तपस्यत्यपरस्तपस्वी नाम्ना सुतीक्ष्णश्चरितेन दान्तः ॥
रघु० 13।42 अमुं सहासप्रहितेक्षणानि व्याजार्धसंदर्शितमेखलानि ।
नालं विकर्तुं जनितेन्द्रशङ्कं सुराङ्गनाविभ्रमचेष्टितानि ॥
2. अभि० शाकु० 1।15 कुल्याम्भोभिः ···भिन्नो रागः किसलयरुचामाज्यधूमोद्गमेन ।
3. अभि० शाकु० 1।15 नीवाराः शुकगर्भकोटरमुखभ्रष्टास्तरूणामधः,
प्रस्निग्धाः क्वचिदिङ्गुदीफलभिदः सूच्यन्त एवोपलाः ।
विश्वासोपगमादभिन्नगतयः शब्दं सहन्ते मृगास्-
तोयाधारपथाश्च वल्कलशिखानिष्यन्दरेखाङ्किताः ॥

वशिष्ठविश्वामित्रकण्ववाल्मीकिसुतीक्ष्णशरभङ्गाश्यगस्त्यादिमुनीनामाश्रमा उल्लेखनीयाः सन्ति ।

महाकविवर्णितानामेषामाश्रमाणां प्रमुखवैशिष्ट्यमेतेषां शिक्षासंस्थानरूपे सुप्रसिद्धिरस्ति । इमे आश्रमाः ज्ञानध्यानयोर्क्षेत्रे देशे लब्ध प्रतिष्ठमहर्षिभिः सञ्चालिता व्यवस्थिताश्चाभवन्, ये कुलपतयः इत्यभिहिताः सन्ति । कुलपतय एवैतेषामाश्रमाणामधिष्ठातार आसन्, येषां संरक्षणे सहस्रसंख्यकाः शिष्या ब्रह्मचारिणो भूत्वा वेदवेदाङ्गैस्सह शास्त्रीयलौकिकाश्च विद्या निःशुल्कं शिक्षितवन्तः । गुरुभ्यः सर्वे शिष्याः शिक्षासमाप्तौ सहर्षं गुरुदक्षिणां दत्तवन्तः । महर्षिवरतन्त्वाश्रमस्य एतादृशैर्भाव एकेन स्नातकेन कौत्सेन गुरुदक्षिणा विषये स्वकीयाक्षमतापूर्णस्थितिरेवं राजानं रघुं प्रति निवेदिताऽस्ति–

निर्बन्धसञ्जातरुषार्थकार्श्यमचिन्तयित्वा गुरुणाहमुक्तः ।
वित्तस्य विद्यापरिसंख्यया मे कोटीश्चतस्रो दश चाहरेति ।।
(रघु० 5।21)

एतादृशः शिक्षासंस्थानरूपाः कण्वाश्रमच्यवनाश्रमसिद्धाश्रमवाल्मीक्याश्रमादय उल्लेखनीयाः सन्ति ।

महाकविकालिदासवर्णितेष्वेतेष्वाश्रमेषु प्रेमविश्वबन्धुत्वभावनया जीवहिंसा सर्वथा विवर्जितासीत् ।[1] सर्वदमनायुप्रभृतिमुनिकुमारका अपि इमामाश्रमविरुद्धवृत्तिं प्रति निषिद्धा आसन् । एष्वाश्रमेषु मुनीनां निर्विघ्नधार्मिकक्रियाभ्यस्तत्सम्बन्धितराज्यस्य शासकस्यैव प्रमुखं दायित्वमासीत् यतः तेन राज्ञा एतेभ्यो मुनिभ्यस्तपसष्षष्ठांशः[2] स्वत एव प्राप्यते स्म । इदमेव कारणमस्ति यदाश्रममृग न हन्तुमनुरोधयद्भिर्मुनिभिः तपोवनरक्षणाय राजा दुष्यन्तः सादरं समामन्त्रितः–'राजन् ! आश्रममृगोऽयं न हन्तव्यो न हन्तव्यः । पुनश्च वैखानसेन राजाऽस्मिन् विषये एवमुक्तः–

'रम्यास्तपोधनानां प्रतिहतविघ्नाः क्रियाः समवलोक्य ।
ज्ञास्यसि कियद् भुजो मे रक्षति मौर्वीकिणांक इति ।।'

---

1. अभि० शा० प्रथमा तपस्विनीकथनम्–अविनीत ! किं नोऽपत्यनिर्विशेषाणि सत्त्वानि विप्रकरोषि'' (सप्तमाङ्के, पृ० 56) ।
''विक्रमोर्वशीयम्–तुलनीय तापसीकथनम्–अद्य पुष्पसमित्कुशनिमित्तं ऋषिकुमारकैः सहगतेनानेन आश्रमविरुद्धमाचरितं···लक्ष्यीकृतो वाणः ।'' (पंचमाङ्को, पृ० 246) ।
2. अभि० शा० 2।13 तपः षड्भागमक्षय्यं ददत्यारण्यका हि नः ।।

महर्षिविश्वामित्रोऽपि[1] स्वकीयसिद्धाश्रमे यज्ञविध्वंसकान् मारीचसुबाहुसदृश-राक्षसान् संहारयितुं राजानं दशरथं याचित्वा रामलक्ष्मणौ समानीतवान् ।

गृहस्थाश्रमस्य सामान्यधर्माणामिव एतेष्वाश्रमेष्वपि[2] संयमितदाम्पत्य-जीवननियोजितसन्तानोत्पत्त्यतिथिसत्कारादिलोकाचाराणां प्रायः प्रचलनमासीत् । महर्षिकण्वकथनेन तथ्यस्यास्य संपुष्टिर्भवति—'वत्से ! ···वनौकसोऽपि वयं लौकिकज्ञा एव ।' (अभि० शा० चतुर्थाङ्कः)

लोकजीवने व्यवहृतसामान्यरीति-परम्पराशिष्टाचारादीनामपि तपोवन-वासिनः सम्यक् परिपालनं कुर्वन्ति स्म । दुर्वाससः सदृशस्याभ्यागतस्य अतिथेः सत्कारं, तं प्रति समुचितं शिष्टाचारं वा न कृत्वा शकुन्तला यस्य शापेन[3] संत्रस्ता-भवत् । परिणामतः दुष्यन्तो गान्धर्वविवाहस्य घटनामेव विस्मृतवान्, शकुन्तला-याश्च-राजसभायां सप्रत्याख्यानमपि कृतवान् ।

आश्रमेष्वेषु तपस्विनां सरलसरलं दैनिकजीवनं लोकजीवनमिव संलक्ष्यते । नित्यं पुष्पफलकन्दमूलकुशसमिदादिसामग्रीणां वनादा[4]-नयनं, मृग[5]-धेन्वादिपशूनां पालनं, तपस्विकन्याभिः पादपलतानां स्वप्रमाणानुरूपैर्घटैर्जलसेचनादिसामान्य-कार्याणि[6] चोल्लेखनीयानि सन्ति ।

मुनिजनानामाश्रमस्य सघनकुञ्जपुञ्जेषु यत्र-तत्र प्रस्तरशिलाखण्डानि[7] विद्यन्ते स्म, तेषूपविश्यैकान्ते शान्तवातावरणेऽध्ययनमननाभ्यां समं सुनिभिरातपात्

---

1. रघु० 11।1 कौशिकेन स किल क्षितीश्वरो रामध्वरविघातशान्तये ।
काकपक्षधरमेत्य याचितस्तेजसां हि न वयः समीक्ष्यते ।।
2. रघु० 1।48 सायं संयमिनस्तस्य महर्षेर्महिषीसखः ।
1।56 अन्वासितमरुन्धत्या स्वाहयेव हविर्भुजम् ।।
3. विचिन्तयन्ती यमनन्यमानसा, तपोधनं वेत्सि न मामुपस्थितम् ।
स्मरिष्यति त्वां न स बोधितोऽपि सन् कथां प्रमत्तः प्रथमं कृतामिव ।।
4. वनान्तरादुपावृत्तैः समित्कुशफलाहरैः ।
पूर्यमाणमदृश्याग्निप्रत्युद्यातैस्तपस्विभिः ।।
5. रघु० 14।79 सायं मृगाध्यासितवेदिपार्श्वं स्वमाश्रमं शान्तमृगं निनाय ।
6. रघु० 1।51 सेकान्ते मुनिकन्याभिस्तत्क्षणोज्झितवृक्षकम् ।
13।46 छायाविनीताध्वपरिश्रमेस्थिता सुपुत्रेषु पादपेषु ।
14।78 पयोघटैराश्रमबालवृक्षान् संवर्धयन्ती स्वबलानुरूपैः ।
7. अभि० शा०—तृतीयाङ्के (शकुन्तला शिलापट्टमधिशयानाऽङ्किताकचिना) ।

संत्राणं लब्ध्वा विश्रामः क्रियते स्म । रात्रावाश्रमस्य कुटीरेषु इङ्गुदीतैलप्रदीपाः[1] प्रज्वलिता अभवन् ।

महाकविवर्णिताः सर्वे आश्रमाः सामान्यतो यज्ञस्थानतपःस्थानशिक्षासंस्थानरूपेण आर्यावर्त्त एव नापितु समस्तभारतवर्षेऽवस्थितिमवाप्य साधारणगृहस्थधर्मात्पराङ्मुखा नासन् । इमे सामयिकपरिस्थितिमनुसृत्य 'बहुजनहिताय', 'बहुजनसुखाय' इति परमोदात्तभावनावशाद्युगधर्मं संवहन्तः सम्पूर्णराष्ट्रस्य भौतिकाध्यात्मिकयोरुत्कर्षाय महत्त्वपूर्णं योगमददुः । राज्यसंरक्षणं लब्ध्वापीमे शान्तसात्त्विकरम्यस्वतन्त्रवातावरणे च श्वसितवन्तः । महाकवेरघुवंशकुमारसंभवाभिज्ञानशाकुन्तलप्रभृतय उत्कृष्टाः कृतय एतेषां पावनाश्रमाणां गौरवगरिम्णा अभिमण्डिताः सन्ति । महाकाव्यरघुवंशस्य प्रारम्भो वशिष्ठाश्रमे दिलीपसुदक्षिणयोः प्रवेशाद् भवति । परन्त्वभिज्ञानशाकुन्तलनाटकस्य कथावस्तुनः प्रारम्भोऽन्तश्च लोकेतरशोभासम्पन्नेषु तपोवनेषु लोकमङ्गलस्य पावनभावनया सममेव अभवताम् ।

महाकवेस्तपोवनेषु एवमाकर्षणमभिलक्ष्य श्रीमतः के० एस० रामस्वामिनो मतमिदं सर्वथा समीचीनमेव प्रतिभाति यन् मुन्याश्रमाणां तस्य राष्ट्रियसांस्कृतिकविचारधारयोः[2] पृष्ठभूमिसन्दर्भे–

"But the intensest devotion of Kalidasa in regard to his motherland is in regard to her holy mountains and her holy hermitages and her holy streams and his holy temples and other places of pilgrimage. The Indian civilization of which the poem is a presentation and panorama.........it had its inspiration from the Tapovanaas where lived godly men who were beloved of gods and men."

(Kalidasa, II Ed; p. 33 & 214)

संक्षेपे, कथयितमिदं शक्यते यत्कविकुलगुरुणा कालिदासेन वर्णिता इमे पावनाश्रमाः प्राचीनभारतस्य समुज्ज्वलभूमौ विद्यमानाध्यात्मिकोत्कर्षपूर्णाया

---

1. रघु० 14।81 ता इंगुदीस्नेहकृतप्रदीपां···।
2. महाकवेः कालिदासस्य भौगोलिकज्ञानसमन्वितराष्ट्रियसांस्कृतिकविचारधारयोः पृष्ठभूमि–सन्दर्भे विस्तृतविवेचनाय लेखकस्य पी-एच० डी० शोधप्रबन्धोऽवलोकनीयः । 'कालिदास की कृतियों में भौगोलिक स्थलों का प्रत्यभिज्ञान' शीर्षकाङ्कितोऽयं शोधग्रन्थः आगराविश्वविद्यालयेन 1968 ई० वर्षे पी-एच० डी० उपाधये स्वीकृतः साहित्यनिकेतनेन च कर्णपुरे 1969 ई० वर्षे प्रकाशितः ।

उपलब्धेः कीर्ति गायन्ति । वस्तुतः परम्परारूपेण एतेषां पावनानामाश्रमाणां चित्रणं कृत्वा कलिदासः करुणाक्षमादयपारोपकारपूर्णस्य तपोमयशुद्धजीवनस्योज्ज्वलान्तःपक्षस्य मनोमोहकच्छटां दर्शयित्वा भारतीयसंस्कृतेश्चरमादर्शं प्रति विश्वमुन्मुखं कृतवान् ।[1] □

1. लेखकस्य विस्तृतशोधलेखोऽस्मिन् विषये सागरिकायां 16/4 अंके प्रकाशितः, पृ० 55–62, वाराणसी/सागरतः ।
लेखकस्य एतद्विषयकसंस्कृतवार्ताऽपि लक्ष्मणपुरकेन्द्रात् आकाशवाण्या प्रसारिताऽभवत् ।

# कालिदासकृतिषु सीमान्तविदेशिराज्या-नामुल्लेखः

कालिदासः स्वकीयरचनासु वर्ण्यविषयेण सह बृहत्तरभारतस्यादर्शसीमा-रेखा निर्धारयन्नेतेषां सीमान्तविदेशिराज्यानामपि समुल्लेखं कृतवान्। समसामयिकैतिहासिकराजनीतिकतथ्यैरेतेषां राज्यानां प्रत्यभिज्ञानपूर्णं विवेचनं क्रियते।

## पारसीकराज्यम्

प्राचीनसीमान्तराज्येषु पारसीकराज्यस्य प्रमुखं स्थानं वर्तते। महाभारतात्पूर्ववर्तिग्रन्थेष्वस्योल्लेखः प्रायो न प्राप्यते। महाभारते[1] (भीष्मपर्वणि) यवनचीनकम्बोजहूणादिराज्यैः सह पारसीकानामप्युल्लेखो विद्यते, यस्मिन्निमे म्लेच्छजातौ निर्धारिताः, शूरवीराश्च मन्यन्ते स्म। महाकविः कालिदासो रघुवंशे चतुर्थसर्गे रघुदिग्विजयप्रसङ्गे पारसीकराज्यमुल्लिखितवान्[2]। सागरतटीयापरान्तत्रिकूटराज्ये विजित्यससैन्यो रघुर्जलमार्गेण न गत्वा स्थलमार्गेणैव पारसीकान् जेतुं प्रतस्थे। अस्मिन् प्रकरणे पारसीकानां प्रमदानां (यवनीनां) मदिरापानप्रवृत्तिः,[3] पारसीकाश्वारोहिसैनिकानां मधुमक्षिकामयसक्षौद्रपटलानीव श्मश्रुलानि[4] शिरांसि, अत्रोद्भवा द्राक्षालता द्राक्षासवादयश्च[5] कविना

---

1. महाभारते, भीष्मपर्वणि—

    उत्तराश्चापरम्लेच्छाः क्रूरा भरतसत्तम।
    यवनाश्चीनकाम्बोजा दारुणा म्लेच्छजातयः॥ 9।65
    सकृद्ग्रहाः कुलत्थाश्च हूणाः पारसिकैः सह।
    तथैव रमणाश्चीनास्तथैव दशमालिकाः॥ 9।66

2. रघुवंशे॰ 4।60 पारसीकांस्ततो जेतुं प्रतस्थे स्थलवर्त्मना।
    इन्द्रियाख्यानिव रिपूंस्तत्त्वज्ञानेन संयमी॥
3. रघु॰ 4।61 यवनीमुखपद्मानां सेहे मधुमदं न सः।
    बालातपमिवाब्जानामकालजलदोदयः॥
4. रघु॰ 4।63 भल्लापवर्जितैस्तेषां शिरोभिः श्मश्रुलैर्महीम्।
    तस्तार सरघाव्याप्तैः सक्षौद्रपटलैरिव॥
5. रघु॰ 4।65 विनयन्ते स्म तद्योधा मधुभिर्विजयश्रमम्।
    आस्तीर्णाजिनरत्नासु द्राक्षावलयभूमिषु॥

विशेषरूपेण वर्णिता: ।

रघुवंशस्य यशस्विटीकाकारो दिनकरमिश्र: पारसीकं यवनराज्यं स्वीकरोति, वल्लभदेवश्चेमं पश्चिमदिशीयम् (पाश्चात्यं) मन्यते । हलायुधकोश: अस्य 'वनायुजं' नाम निर्धारितवान् । अस्य देशस्याश्वा विशेषरूपेण प्रसिद्धा भवन्ति । इमेऽश्वा महाकविना-'वनायुदेश्या:'[1] इति संज्ञयाऽन्यत्र उल्लिखिता: ।

पारसीकराज्यमिदं 'पर्शिया' फारसाद्वा भिन्नं न प्रतीयते, यत् किल वर्तमानविलोचिस्तान-दक्षिणी-अफगानिस्तान-पूर्वीरानराज्यानां भूभागेन विनिर्मितमासीत् ।

प्रो० जयचन्द्रविद्यालङ्काराणां[2] मतानुसारं पारसीका इमे सिन्धुतटीया: 'सासेनियन्स' (Sassanians) एव सन्ति, येऽफगानिस्तानस्य वर्तमान पर्सीवान्सजनानां पूर्वजेभ्यो भिन्ना: सन्ति ।

स्व० डॉ० वासुदेवशरणाग्रवालमहोदया:[3] पारसीकस्य समीकरणं पर्शियापारसेन वा समं कृतवन्त: । डी० सी० सरकारमहोदया[4] अपि पारसीकान् 'पर्शियन्स' इत्येव मन्यन्ते । इदं पारसीकराज्यं फारसादभिन्नमस्ति ।

सीमान्तवर्तिपश्चिमीराज्येषु पर्शिया-(पारस)-राज्यं पारसीकेन समीकरणीयम्, यतो महाकवे: 'प्रतस्थे स्थलवर्त्मना' वर्णनेनेदं ध्वनितम्भवति यद् रघु: जलमार्गेण पारसीकं गन्तुं शक्नोति स्म, तथापि तेन स्थलमार्गो गृहीत: । मल्लिनाथोऽस्य कारणं धार्मिकं स्वीकृतवान्–'समुद्रयाननिषिद्धत्वादिति भाव:' (सञ्जीवनी रघु० 4।60), किन्तु समीचीनमेवैतत्प्रतिभाति । यौद्धिकदृष्ट्याऽनेकानि कारणानि विद्यन्ते । स्थलवर्त्मना रघोरभियानस्य–यथा फारसस्य समुद्रीयमकरानतटस्य यौद्धिकदृष्ट्याऽननुकूलता, समुद्रीपोतगाहानामभाव:, समुद्रीसुरक्षासाधनानाम् अभावश्च कारणानि सन्ति ।

---

1. रघुवंशे–दीर्घेष्वमी नियमिता: पटमण्डपेषु
   निद्रां विहाय वनजाक्षवनायुदेश्या: ।
   वक्त्रोष्मणा मलिनयन्ति पुरोगतानि
   लेह्यानि सैन्धवशिलाशकलानि वाहा: ।। 5।73
2. Proceedings of Transaction of the VI Oriental Conference, Patna, Dec. 1930, p. 102.
3. 'विक्रमाङ्क' नागरी प्रचारिणी पत्रिका, काशी, सं० 2000 वि०, पृ० 237 ।
4. Studies in the Geography of Ancient & Mediaeval India, Delhi, 1960, P. 18.

स्थलमार्गस्याभियानेनैव रघोर्दिग्विजयस्य सार्थकताऽस्ति । प्रतीय, ते महा-कविस्तत्कालीनराष्ट्रस्यादर्शसीमारेखां निर्धारयितुमिच्छति या स्थलमार्गाभियानेनैव अधिकं स्पष्टीकर्तुं शक्यते । रघुः ससैन्यो दाक्षिणात्यमरुस्थलात् पारसीकराज्य-पूर्ववर्तिकिरथरसुलेमानपर्वतश्रृंखलः बोलनरन्ध्रेणातिक्रम्य प्राविशत् । पारसीकं सिन्धुनद्या पश्चिमे विशालं सीमान्तराज्यमस्ति, यस्मिन् विलोचिस्तानाफगानि-स्तानयोर्भूभागौ वर्तेते । अत्र कन्दहार–(कन्धार) काबुलगजनीवलखस्थानानां संयोजिका रेखा टालेमी (Ptolemy) निर्दिष्टायाः पश्चिम-रेखाया अनुकूलैव[1] विद्यते ।

अयमेव प्रदेशश्चन्द्रगुप्तविक्रमादित्यस्य वैक्ट्रियाविजयेन प्रभावितोऽभवत्[2] । मेहरौलीलौहस्तम्भे पारसहिन्दुकुशवंक्षूपत्यका भारतस्य उत्तरीपश्चिमीसीमा निर्दिष्टाः । प्रो० जयचन्द्रविद्यालङ्कारः[3] पारसीवान्सभिन्नान् यान् सासनीजनान् पारसीकैः समं समीकृतवान्, ते सिन्धुनद्याः पश्चिम-प्रदेशस्य पह्लवेभ्योऽभिन्नाः प्रतीयन्ते, यतः पारसी पह्लवीशब्दौ साम्प्रतमपि समानार्थकौ स्तः । लाला सीता-रामस्य[4] मतेन इमे पह्लवाः पारसीका वा अश्वकान-(अफगान)-यवनजनेभ्यो भिन्ना नासन् । तत्कालिकमिव फारसराज्यस्याद्यापि द्राक्षालतोत्पत्त्यै तदीयमेरिया-नाक्षेत्रं प्रसिद्धमस्ति ।

विल्सनमहोदयस्य[5] मतानुसारं हिरातप्रदेशसमीपस्था ऐल्वुर्जपर्वतस्य दक्षिणश्रृंखलाः, ट्राब्जियानादिद्राक्षालतोत्पादकक्षेत्राणि चैरियानाक्षेत्रात् सम्बन्धि-तानि सन्ति । फारसेऽद्यापि 'शीराजीति द्राक्षासुरा सर्वप्रियाऽस्ति, याम् आस्तीर्णा-जिनवस्त्रेषूपविश्य रघोः सैनिकाः पीतवन्तः (रघु० 4।65)

विनयन्ते स्म तद्योधा मधुभिर्विजयश्रमं ।
आस्तीर्णाजिनरत्नासु द्राक्षावलयभूमिषु ।।

पर्शियाराज्यं साम्प्रतमपि चर्मवस्त्रैः महत्त्वं भजते । पेरीप्लसेन[6]

---

1. Majumdar, M'crindles Ptolemy, P. 33-34.
2. Smith. Early History of India, IV Edition, p 306.
3. Proceedings of Transaction of VI A I. O. Conference, Patna, Dec. 1930 p. 102.
4. भूगोल (भुवनकोषाङ्क), प्रयाग, 1932 (मई, जून, जुलाई) 'रघुदिग्विजय' शीर्षक लेख, पृ० 36 ।
5. Arrian–Antiquities, p. 150.
6. The Periplus of the Erythraean Sea (Translated by Schoff) P. 70.

चर्मकञ्चुकानां पारसादडोलिसाय निर्यातस्योल्लेखः कृतः। अतएव प्रतीयते, यद् महाकविकालिदासस्य श्मश्रुला अश्वारोहिणः पारसीकयवनेरानिजनेभ्योऽभिन्नाः सन्ति, तत्कालिकफारसञ्च सिन्धोः पश्चिमे, दक्षिणतो मकरानाद्, उत्तरं हैराद्-क्षिणपूर्वाफगानिस्तानपर्यन्तं विस्तृतमासीत्। पश्चिमे वर्तमानफारस पठारस्य पूर्विभागोऽप्यस्मिन् सम्मिलितोऽभविष्यत्।

## हूण (वाह्लीक) राज्यम्

पारसीकान् पराजित्य ससैन्यो रघुरुत्तरस्यां दिशि अग्रेसरोऽभवत्। वंक्षुन-द्यास्तटे श्रममपनेतुकामा भूलुण्ठिताश्वाः सकेशरशरीराः सञ्जाताः। तत्रस्थैर्हूण-शासकै[1] रघोर्गत्यवरोधाय प्रयत्नः कृतः, किन्तु ते रघोः पराक्रमेण परास्ता अभवन्।

रघुवंशस्य प्रायः प्रमुखाष्टीकाकाराः[2] वल्लभदेव-चरित्रवर्धनादयः 'वंकु' 'वंक्षु' वेति शब्दं गृहीतवन्तः, किन्तु सञ्जीवनीकारो मल्लिनाथो वंक्षोः स्थाने सिन्धु-पाठं भ्रमवशात् गृह्णाति। कश्मीरं विहाय केशरोत्पत्त्यै वंक्षूपत्यकाऽल्प-विख्याता नासीत्। क्षीरस्वामिनेदमेव[3] तथ्यं प्रतिपादितम्। अतएव वंक्षु (oxus)-नद्या मध्यवर्तिन्या उपत्यकाया विस्तृतभूभागेन वाह्लीक (हूण) राज्यस्य समीकरणं समीचीनमेवास्ति।

कतिपयैतिहासिकैरपि प्रमाणितं यद् वंक्षूपत्यकायां पञ्चमख्रिस्ताब्द्यां शक्तिशालिन्याहूणजातेः प्रभुत्वमासीत्। जे० जे०[4] मोदी महोदयानां मतानुसारं पूर्वितातारक्षेत्रान्निष्कासिता इमे हूणा (वाह्लीकाः) ईशवीयप्रथमशताब्द्यां काशग-राक्षु (oxus) क्षेत्रयोः प्रविष्टवन्तः।[5] औरलस्टीन महोदयानामभिमतेन ई. पञ्चम-शताब्द्यां मध्यभागे आक्ससोपत्यकायामेषां जातेः शक्तिशालिशासनस्य संस्थापना

---

1. रघुवंशे, 4/67 तत्र हूणावरोधानां भर्तृषु व्यक्तविक्रमम्।
   कपोलपाटलादेशि बभूव रघुचेष्टितम्॥
   टिप्पणी—रेखाङ्किते 'कपोलपाटलदेशि' स्थाने डॉ० वासुदेवशरण अग्रवाल-प्रभृतिविद्वांसः 'कपोलपाटनादेशि' पाठं स्वीकुर्वन्ति। अस्मिन् 'कपोलपाटना-देशि' पाठे मृतहूणानामन्तिमसंस्कारस्याभासो विद्यते तेषां मतेन।
2. वल्लभदेवः—'वंक्षुतीरविचेष्टनैः' इति पाठमादृत्य 'वंकू' (वंक्षू) नाम्नीं नदीं इत्याह। चरित्रवर्धनोऽपि—वंकू नाम···इति पाठं ग्रह्णाति।
3. के० जी० ओझा के 'क्षीरस्वामी प्रकाशन', पृ० 110
4. Early History of the Hunas and Their Inraids in India & Persia. P. 545.
5. Early History of the Hunas. P. 656.

बभूव। अनेन शासनेन गान्धारेण समं दक्षिणे सिन्धोः पारं खोतनपर्यन्तं भूभागो विजितः। सम्भवतस्तदानीमियमेव हूणजातिः पारसीकराज्यस्यापि शत्रुरासीत्, या 425 तमे ई० वर्षे पारसीकस्योपरिष्टादाक्रमणं कृतवती। फलतः पारसीकैर्विवशतो वंक्षुपर्यन्तं पारसीकराज्यस्य सीमा स्वीकृता।[1]

स्व० डॉ० वासुदेवशरणाग्रवालमहोदयैः[2] प्राचीन वाह्लीकं (वैक्ट्रिया राज्यं) आधुनिकबलखेन समीकृतम्। महाभारतस्यादिपर्वणः (16।16) आधारेण स्व० डॉ० मोतीचन्द्र[3] इदं राज्यं वर्तमानोत्तरीयाफगानिस्तानस्य बलखादभिन्नं स्वीकरोति। प्रो० जयचन्द्रविद्यालङ्कारः[4] हूणराज्यमॉक्ससहायकोवक्षवक्षयोर्मध्यवर्तिभूभागेऽवस्थितमासीत्। श्रीमतः एस० के०[5] स्वामिन आयङ्गरस्यापि इदमेवाभिमतमस्ति। डी० सी० सरकारमहोदयोऽपि[6] महाम्लेच्छस्य प्राच्यां कम्बोजस्य पश्चिमे, अफगानिस्तानस्य चोत्तरे वर्तमानबलखं प्राचीनवाह्लीकं (वैक्ट्रिया) राज्यं स्वीकरोति।

वस्तुतस्तत्कालीनैतिहासिकं प्रतिबिम्बं महाकवेर्हूणानामुल्लेखेन दृश्यते। निश्चितरूपेण रघुवंशे (4।67) उल्लिखितं, वंक्षु नद्याः मध्योपत्यकायामक्सवक्सवनद्योर्मध्यवर्तिभूभागे हूणराज्यमासीत्, यस्मै वाह्लीक-(बलख)-संज्ञां दातुं शक्यते। तदानीमस्य राज्यस्य दक्षिणे पारसीकगान्धारराज्ये, पूर्वे कम्बोजराज्यं, पश्चिमे च मध्यैशियाराज्यमवस्थितमासीत्।

## कम्बोजराज्यम्

इदं भारतस्य उत्तरसीमान्तप्रदेशीयकं प्राचीनं राज्यमस्ति। प्राचीन[7]साहित्येऽस्य प्राचुर्येणोल्लेखाः प्राप्यन्ते। वंक्षु (oxus) नद्याः मध्योपत्यकायां हूणराज्यं विजित्य ससैन्यो रघुरग्रेसरी भूत्वा काम्बोजान् पराजितवान्[8]। अनेन

1. Modi, Early History of the Hunas. P. 566-67.
2. भारत की मौलिक एकता, पृ० 163
3. 'विक्रमाङ्क' नागरी प्रचारिणी पत्रिका, काशी, सं० 2000 वि०, पृ० 181
4. Proceedings & Transactions of the VI A. I. O. C. Patna 1930. Dec. P. 102.
5. Indian. Antiquary, 1919. P. 65.
6. Studies in the Geography of the Ancient & Med. India, 1960 Delhi. P. 94.
7. वाल्मीकीयरामायणे, किष्किन्धाकाण्डे, 43।12 काम्बोज यवनाश्चैव शकानां पत्तनानि च। महाभारते, उद्योगपर्वणि 166।1, 3, सभा० 11।24, भीष्म० 9।65
8. रघुवंशे, 4।69 काम्बोजाः समरे सोढुं तस्य वीर्यमनीश्वराः।
गजालानपरिक्लिष्टैरक्षोटैः सार्धमानताः॥

ज्ञायते यत् कम्बोजस्य स्थिति: सामान्यतो वंक्षुनद्या: मध्योपत्यकाया वलखात्पूर्वमासीत् । कालिदासस्य परिवर्तिमहाकवि: कल्हणोऽपि[1] कम्बोजं कश्मीरस्योत्तरे वर्णितवान् । अत: वर्तमानवलखस्य पूर्वस्मिन्ऽफगानिस्तानस्योत्तरपूर्वयो: कश्मीरस्य चोत्तरे पामीरक्षेत्रेण समं कम्बोजराज्यं समीकर्त्तुं सर्वथा समीचीनमेव प्रतिभाति ।

स्व० डॉ० [2]वासुदेव शरण-अग्रवालमहोदयो गाल्चाभाषाभाषिणं पामीरप्रदेशं, यद्वलखात्पूर्वं विस्तृतमस्ति, कम्बोजादभिन्नं स्वीकरोति । तस्य मतानुसारं मध्यकालीनयुगेऽयमेय भूभाग: 'कम्बोह' इत्यभिधीयते स्म ।

महाकवे रघुदिग्विजयप्रसङ्गेन ज्ञायते यत् कम्बोजशासकै: श्रेष्ठजातेरश्वस्वर्णरत्नहीरकादीनां धनराशी रघवे समर्पित आसीत् । श्रीजयचन्द्र-[3] विद्यालङ्कारस्य-वदख्शां-पामीरयो: समीपवर्तिप्रदेशेन समं प्राचीनकम्बोजस्य समीकरणं सर्वथा समीचीनमस्ति । वुडमहाशयेनाऽपि स्वकीय वंक्षुयात्रायामुक्तं यद् इशिकाश्मात् 20 मीलान्तरे घारानप्रदेशे माणिक्यखनयो वर्तन्ते, कोकचरस्योपत्यकायां राजवर्तखनयो, वदख्शांक्षेत्रे च रजतखनयो विख्याता आसन् (वुड:, पृष्ठ 171) । टरनियर[4] महाशयस्य मतानुसारं कश्मीरपारीण: वैदूर्योत्पादक: पर्वतोऽस्ति । अयमेव वालमहोदयेन फरगामुसमीपे (36°-10, उ० अ०, 71° पू० देशान्तरे) वदख्शां क्षेत्रेऽवस्थित: [5]स्वीकृतोऽस्ति । डॉ० भण्डारकरमहोदयो महाभारतस्य (8/4-5 कर्णराजपुरं गत्वा काम्भोजा निर्जितास्त्वया । ) इत्याधारेण कश्मीरस्य दक्षिणे राजौरीसमीपस्थं छिभलक्षेत्रं कम्बोजं स्वीकरोति, किन्तु प्रो० जयचन्द्रविद्यालङ्कारोऽस्य[6] निराकरणं कृत्वा गाल्चाभाषिप्राचीनजनपदमेव कम्बोजं प्रमाणीकरोति ।

लाङ्गमैनमहोदयेन[7] 250 ई० पूर्वस्यैतिहासिके भारतस्य मानचित्रे कम्बोजस्य या स्थिति: ( हिमालयस्योत्तरे कश्मीरस्य च पूर्वे) प्रदर्शिताऽस्ति, सा सर्वथा तथ्यानुकूला प्रतिभाति । लालासीताराममहोदयेन[8] लद्दाखक्षेत्रस्य उत्तरीभाग: (गिल-

---

1. राजतरङ्गिणी, सं० औरेल स्टीन पृ० 104, 4/163-176 ।
2. Purana, vol. VI No 1. Jan 1964, p. 221–29.
   विक्रमाङ्क ना० प्र० प० काशी, सं० 2000 वि० पृ० 238 ।
3. भारतभूमि और उसके निवासी, पृ० 297-305 ।
4. Travels in India, II, p. 25
5. Economic Geology of India, p. 229
6. Proceedings & Transactions of the VI A. I. O. C. Patna. 1930, P. 107–108.
7. Senior Atlas of India, Ed. J. Philip. F. R. G S. Pt. II Map No. A.
8. 'रघु० दिग्विजय' भूगोल (भुवनकोषाङ्क) प्रयाग 1932, पृ० 35

गितोपत्यकापि) अस्मिन् सम्मेलितः, यत्र महाकविकालिदासानुसारमश्वा प्रधानतया प्रादुर्भवन्ति । अस्य मूलनिवासिनः 'कम्बोह्' इति संज्ञया युक्ताः सन्ति । एषु केचित् मुस्लिमधर्मानुयायिनो भूत्वा भारतं समागतवन्तः ।

एवं, कम्बोजराज्यं वर्तमानकश्मीरस्योत्तरे पामीरवदख्शाप्रदेशे एव स्वीकर्त्तव्यं ।

## लङ्काराज्यम्

भारतीयप्रायद्वीपस्य दक्षिणे हिन्दमहासागरे सुप्रसिद्धसिङ्घलद्वीपो लङ्काद्वीपस्यापराभिधानेन विश्रुतः । महाकवि कालिदासोऽस्योल्लेखं [1]रघुवंशे कृतवान्, येन ज्ञायते यल्लङ्कां परितः विस्तृतसागर आसीत् । लघुपरिखावत् तं सागरं रामः कपिभल्लूकसेनया निर्मितेन सेतुना संतीर्य रावणप्रशासितेऽस्मिन् द्वीपे प्राविशत् ।

लङ्का वर्तमानसीलोनात् (बौद्धकालीनसिंघलद्वीपात्) श्रीलङ्काया वा सर्वथाऽभिन्ना वर्तते । यद्यपि कतिपये विद्वांसोऽस्य द्वीपस्यावस्थिर्जबलपुरसमीपे मध्यभारते स्वीकुर्वन्ति, किन्तु भौगोलिकतथ्यैरियं धारणा सर्वथाऽसमीचीनैव सिद्ध्यति । लङ्काद्वीपस्य विस्तारः दक्षिणोत्तरयोः 6°30–10°30, पश्चिमपूर्वयोः 79°–45,' पू० दे०–82° पूर्वीयदेशान्तरपर्यन्तमस्ति । बौद्धकालादेव सांस्कृतिक-व्यापारिकक्षेत्रयोरस्य द्वीपस्य महत्त्वपूर्णं स्थानमासीत् । लङ्काया उत्तरमध्यवर्तिक्षेत्रेऽवस्थितं पुरातनराजनगरमनुराधपुरं विशेषेण विख्यातमासीत् ।

## द्वीपान्तरं (हिन्देशिया) राज्यम्

महाकविपरोक्षरूपेण रघुवंशे[2] द्वीपान्तरस्य (हिन्देशियायाः) उल्लेखं कृतवान्, यस्मात् तत्कालिकं भारतं लवङ्गपुष्पाणामायातं करोति स्म ।

डॉ० मोतीचन्द्रस्य[3] मतानुसारं गुप्तकालपर्यन्तं हिन्देशियायां भारतीयोपनिवेशाः विनिर्मिता आसन्, एतयोः पारस्परिक सांस्कृतिक-व्यापारिक-सम्बन्धाश्च गुप्तकाले अभवन् । अस्य पूर्वद्वीपसमूह इति संज्ञा द्वीपान्तरमिति संस्कृतसाहित्ये प्रायः प्रायुक्ताऽभवत्, यस्मिन् सुमात्राजावाबोर्नियो-प्रभृतिद्वीपाः सम्मिलिताः सन्ति । अतएवापररूपेण द्वीपान्तरं हिन्देशिया नाम्ना गृहीतुं शक्यते ।

इदं द्वीपान्तरं (हिन्देशिया राज्यं) वस्तुतः लवङ्गेलादीनामुत्पत्त्यै,अन्य-

---

1. रघुवंशे 12/63 स ददाह पुरीं लंका···।, 12/66 महार्णवपरिक्षेपं लंकायाः परिखालघुम् ।
   12/7। तेनोत्तीर्य पथा लंकां रोधयामास पिंगलैः ।
   12/78 लंकास्त्रीणां पुनश्चक्रे विलापाचार्यकं शरैः ।
2. रघुवंशे 6/57 द्वीपान्तरानीतलवंगपुष्पैरपाकृतस्वेदलवा मरुद्भिः ।
3. सार्थवाह, पटना 1953, पृ० 174 ।

बाह्यदेशेभ्यो निर्यातायच साहित्ये[1] प्रसिद्धमासीत् । एषु सुमात्रा-[2] जावाद्वीपयो: प्रमुखं स्थानमासीत् । ईशवीय-सप्तमशताब्द्यां भारतद्वीपान्तरयोर्मध्ये प्रभूतं व्यापारिकजलयानचालनं प्रचलितमासीत्, अस्य ज्ञानं 'समराइञ्चकहा'[3] ग्रन्थे धारणकथया भवति । तिलकमञ्जर्या[4] ज्ञायते यद् द्वीपान्तराणां तटीयनगरेषु व्यापारिणां सम्मर्द: एकत्रितोऽभवत् । सामान्यतो द्वीपान्तरीयसैनिका वंशफलकं धारितवन्त: । तेषां लिपिरपि दुर्वाच्यासीत् । द्वीपान्तरजनानां समाजे वर्णाश्रमधर्मस्याभाव आसीत् । तत्र स्त्रीणामपहरणं साधारणं कार्यमासीत् । पुरुषाणां वेशभूषा: तालकुण्डलैर्लैहिककङ्कणैश्च विचित्राऽसीत् । स्त्रिय: आकषकवस्त्राणि धारयन्ति स्म ।

इत्थं द्वीपान्तरं पूर्विद्वीपसमूहो वा हिन्देशियाया अभिन्नोऽस्ति स भारतस्य दक्षिणपूर्वयोर्भूमध्यरेखाया उभयतो दक्षिणं चीनसागरपूर्वहिन्दमहासागरयोर्मध्ये विस्तृततोऽस्ति । एषु सुमात्राजावाबोर्नियोप्रभृतयो द्वीपा: प्रमुखा: सन्ति ।

## चीनराज्यम्

प्राचीनसंस्कृत-साहित्ये[5] चीनस्योल्लेख: प्राय: प्राप्यते । महाभारतकाले[6] चीनवासिनो भगदत्तसेनायां सैनिका आसन् । संभवतोऽत्रचीनशब्दस्य तात्पर्य: ऊर्ध्ववर्तिवर्मदेशस्य चीनजनै: स्यात् । महाकवि:[7] कालिदास: राज्यस्यास्योल्लेख विशेषप्रकारस्य कौशेयवस्त्रस्य चीनांशुकस्य प्रयोगे कृतवान्, यत्तदानीं संभवतश्चीनदेशादेव आयातमासीत् । पार्जीटरमहोदयस्य[8] मतानुसारं सम्पूर्णं हिमालयसहितं तिब्बतक्षेत्रमेव चीनमस्ति । डी० सी०[9] सरकारमहोदय: महाभारतस्य (6।9।66) आधारेण अस्य देशस्य उत्तरपश्चिमयोर्भूभागं कम्बोजसलग्नं स्वीकरोति ।

---

1. तिलकमञ्जरी, द्वितीयसंस्करणम्, बम्बई 1938, पृ० 136 ।
2. हर्ष और रॉक हिल, चाओजुकुआ, पृ० 61, 78 ।
3. समराईञ्चकहा, बम्बई, 1938, पृ० 510 ।
4. तिलकमञ्जरी, द्वितीय स०, पृ० 124-134 ।
5. वाल्मीकिरामायणे, किष्किन्धा० 43।13, महाभारते, भीष्म० 9।66 तथैव रमणाश्चीनास्तथैव दशमालिका: ।
6. महाभारते, सभापर्वणि 23।19
7. अभिज्ञानशाकुन्तले, 1।32 चीनांशुकमिव केतो: प्रतिवातं नीयमानस्य । कुमारसम्भवे, 7।3…तच्चीनांशुकै: कल्पितकेतुमालम् ।
8. मार्कण्डेयपुराण, अनुवाद, पृ० 319
9. Studies in the Geography of Ancient & Mediaeval India, Delhi. 1960. P. 26.

एवं प्राचीनचीनं वर्तमानतिब्बतोर्ध्वंवर्मभ्यां समं पूर्वे प्रशान्तमहासागर-पर्यन्तं विस्तृतमासीत् । संभवत: ईशवीय पञ्चमशताब्द्यामिदं शक्तिशालिशासन-मासीत् ।

## समीक्षा

महाकवे: काव्यकृतिषूपयु क्तसीमान्तविदेशिराज्यानामुल्लेखेन परिचीयते यत् कविकुलगुरोर्व्यापकदृष्टिर्नकेवलमस्मिन्देश एव सीमिता आसीत्, अपितु भारतीय-सीमा अतिक्रम्य सीमान्तविदेशिराज्येष्वपि संन्निपतिता । अतएव भौगोलिकचित्रणेन सममेतेषां न केवलं नरनारीणां स्वरूपस्वभावादीनामपितु स तत्रोद्भवानां वस्तु-जातानामपि यथातथ्यं वर्णनमकरोत् । एतेषामुल्लेखेन इदं स्पष्टं भवति यदेषामुपरि भारतस्य न केवलं संग्रामेषु सैनिकविजयोऽपितु सांस्कृतिकविजयोऽप्यासीत् । अतएव एभी राज्यै: समं भारतवर्षस्य पुरातनकालादेव सांस्कृतिक-राजनीतिकव्यापारिक-सम्बन्धा अपि सुदृढा आसन् ।

प्रतीयते, कालिदासकालीने वृहत्तरभारते इमानि सीमान्तवैदेशिकराज्यानि सांस्कृतिकदृष्ट्या राष्ट्रस्याविच्छिन्नाङ्गभूतानि आसन् ।[1] □

---

1. अवलोकनीयोऽयं लेखोविस्तृतरूपे लेखकस्य "सागरिका" शोधपत्रिकायां 16/2 अंके० पृ० 75–85 (सागरविश्वविद्यालय: सागरम्) ।
द्रष्टव्यो लेखकस्य शोधग्रन्थ: "कालिदास की कृतियों में भौगोलिक स्थलों का प्रत्यभिज्ञान" (रचनाध्याय:) कानपुरम् 1969 ई० संस्करणम् ।

# कालिदासवर्णित 'कारापथ' राज्यस्य स्थितिनिर्धारणम्

महाकविना कालिदासेन स्वकाव्यकृतिषु महिममयस्य तत्कालीनराष्ट्रस्य तथ्यात्मकस्वरूपस्य चित्रणं नैसर्गिक्या प्रतिभया कृतमिति सुविदितमेव तथ्यं सर्वेभ्यः साहित्यिकेभ्यः। तदानीमपि देशोऽयं विविधशासकीयविभागोपविभागेषु विभक्तमासीत्। इदं प्रतीयते यत् रामोत्तरकालीनायां राज्यव्यवस्थायां प्राचीना केन्द्रीभूता राज्यसत्ता प्राशासनिकदृष्ट्या तदा विकेन्द्रीकृता लवकुशतक्षपुष्कलाङ्गदचन्द्रकेतुसुबाहुशत्रुघातिभी राज्यस्योत्तराधिकारिभिः।

अतएव कथयितुं शक्यते यत् रामोत्तरकालीनविकेन्द्रीकृतायां राज्यव्यवस्थायामेकं कारुपथराज्यमपि तत्कालीनशासकैः निर्मितमासीत्। रामानुजलक्ष्मणस्य सुयोग्यपुत्रौ चन्द्रकेत्वङ्गदौ राज्यस्यास्य शासकावास्ताम्। आदिकविना महर्षिवाल्मीकिना रामायणकालीनेषु समृद्धिशालिराज्येषु रमणीयस्य कारुपथराज्यस्याऽपि वर्णनं कृतं रामायणस्योत्तरकाण्डे[1]।

अनेन रामायणस्योल्लेखेनैव ज्ञायते यत् कारुपथराज्यस्य जलवाय्वादिभौगोलिकदशाः मानवीयजीवनाय अत्यन्तमेव अनुकूला आसन्। अस्य राज्यस्य प्राकृतिकसुषमाऽतीव मनोहारिणी, जनजीवनञ्चापि स्वास्थ्यपूर्णमासीत्। अतएव ईदृशे सुरम्ये देशे कोशलेश्वरैः पुनर्गठितरूपेण राज्यस्थापनम् स्वाभाविकमेव।

निखिलकविचक्रचूडामणिः कालिदासः रामायणमनुसृत्य कारुपथराज्यं कारापथनाम्ना गृहीतवान् रघुवंशमहाकाव्ये पञ्चदशसर्गे। महाकविरिदमत्यन्तं संक्षेपेण वर्णितवान्—

---

1. वाल्मीकिरामायणे, उत्तरकाण्डे—

तथोक्तवति रामे तु भरतः प्रत्युवाच ह।
अयं कारुपथो देशो रमणीयो निरामयः॥
निवेश्यतां तत्र पुरमङ्गदस्य महात्मनः।
चन्द्रकेतोः सुरुचिरं चन्द्रकान्तं निरामयम्॥

(सर्गः 102, श्लोकौ 5, 6)

अङ्गदचन्द्रकेतुं च लक्ष्मणोऽप्यात्मसंभवौ ।
शासनाद्रघुनाथस्य चक्रे कारापथेश्वरौ ॥
रघु० 15।90

## अवस्थितिविषयकानि विदुषामभिमतानि—

श्रीमतां विल्सन[1] (Wilson) महोदयानामभिमतेन कारापथराज्यमिदं हिमालयीयोपत्यकाया: बहिर्नासीत्, किन्त्वनेन मतेन अस्य राज्यस्य सुनिश्चितावस्थिति: ज्ञातुं न शक्यते ।

प्रतिभातीदं यत् रघुवंशमहाकाव्यस्य यशस्विनष्टीकाकारवल्लभदेवस्य चन्द्रपथराज्यं सामान्यत: रामायणस्य चन्द्रकान्तस्थानात् दूरं नासीत्, यत् चन्द्रकेतो: शासनस्य प्रधानप्राशासनिककेन्द्रमासीत् ।[2]

ए० बोरुआ महोदयानां मतानुसारेण इदं समीकर्तुं शक्यते यत् वर्तमानस्थ बिजनौरजनपदस्य चाँदपुरस्थानमेव वाल्मीकिरामायणस्य चन्द्रपुरम् चन्द्रकान्तं वाऽऽसीत्, यस्य प्रशासकश्चन्द्रकेतुरासीत् एतच्चोत्तरे[3] मल्लभूमे: प्रधानप्राशासनिककेन्द्रमासीत् । सौमित्रै: (लक्ष्मणस्य) द्वितीयपुत्रस्य अङ्गदस्य शासनकेन्द्रं, ए० बोरुआ महाशयानां मतानुसारेणाङ्गदपुरमेव[4] प्रतिभाति, यस्य समीकरणं वर्तमानशाहाबादस्थानेन शोधकर्तृभि: क्रियते । अपरञ्चापि फर्रुखाबादनाम्नि जनपदे एकं चाँदपुरस्थानं वर्तते, किन्तु अस्य चन्द्रकान्तेन समं समीकरणमसमीचीनमेव; यतश्चेमे चाँदपुर-शाहाबाद (अंगदपुर) इति उभे स्थाने अत्यन्तमेव समीपस्थे वर्तेते, यत् सामान्यस्थितौ समकालीनशासकाभ्यां सममेव शासितुं न शक्येते ।

पण्डितप्रवरै: [5]रामनारायणमिश्रमहोदयै: कारापथराज्यं सिन्धो: मध्यवर्तिनि रम्योपत्यकायामवस्थितं मत्वा तत्रैव मानचित्रेऽपि प्रदर्शितम्, किन्तु

---

1. विष्णुपुराणम्, तृतीयो भाग: (Volume 3), पृ० 390 ।
2. रघुवंशम् सम्पादक:—नन्दार्गिकर:, 15/90 टिप्पण्या आधारेण ।
3. वा० रामायणे उत्तरकाण्डे 102/7, 9 ।

   चन्द्रकेतोश्च मल्लस्य मल्लभूम्यां निवेशिता ।
   चन्द्रकान्तेति विख्याता दिव्या स्वर्गपुरी यथा ॥
4. वा० रामा०, उत्तर०, 102/8

   अङ्गदीया पुरी रम्याप्यङ्गदस्य निवेशिता ।
   रमणीया सुगुप्ता च रमेणाक्लिष्टकर्मणा ॥
5. भूगोल, 'भुवनकोषाङ्क:' सं० रामनारायणमिश्र:, प्रयाग, 1921 (मई, जून, जुलाई ।)

तेषामियं मान्यता सर्वथा भ्रान्तिपूर्णैव प्रतीयते, यतोऽस्मिन् क्षेत्रे कारावागस्थानस्य अवस्थितिर्विद्यते तथा कारापथराज्यं कारावागस्थानेन समीकर्तुमसमीचीनमेव।

## समीक्षा–

उपर्युक्ततथ्येन कथयितुं शक्यते यत् सहारनपुरजनपदात्पूर्वं बिजनौराख्य-जनपदस्य चाँदपुरस्थानेन चन्द्रकेतोः शासनकेन्द्रं चन्द्रकान्तनगरं, शाहाबादेन अङ्गदपुरञ्च समीकर्तुं सर्वथा समीचीनमेवाऽस्ति । इत्थं महाकवेर्कालिदासस्य कारापथराज्यं वर्तमानगङ्गारामगङ्गयोर्मध्यवर्तिक्षेत्रादभिन्नं मन्तव्यम् । शाहाबादस्थानमुत्तरकोशले (अवध) राज्येऽवस्थितमस्ति, तस्योत्तरपश्चिमेऽवस्थितः चाँदपुरस्थानस्य भूभागश्च, यः प्राचीनपाञ्चालराज्यान्तर्गते आसीत्, रामायण-कालीनकोशलराज्यस्य प्रभुत्वे वर्तते स्म । विल्सनमहाभागैर्निर्दिष्टा कारापथ-राज्यभूमिः या हिमालयीयोपत्यकाऽन्तर्गताऽऽसीत्, सा वर्तमानविजनौरजनपदान्तर्गते चाँदपुरस्थानस्य समीपवर्तिरम्यक्षेत्रेण समीकर्तुं शक्यते ।

आशासे, चन्द्रकेत्वङ्गदयोरनयोर्नगरयोरिदं समीकरणं तथ्यपूर्णं मत्वा कारापथराज्यस्थितिं च सम्यक् निर्धार्य विद्वज्जनाः अस्य राज्यस्य सांस्कृतिकैति-हासिकपुरातात्त्विकराजनैतिकधार्मिकक्षेत्रेष्वपि अनुसन्धानात्मिकाध्ययने प्रवृत्ता भविष्यन्ति ।[1] ◘

1. द्रष्टव्यो लेखकस्य शोधलेखः 'सागरिकायाः 16/3 अंके, सागर, पृ० 131–133 ।

# कालिदासीयोद्ध्यभिद्ययोः समीकरणम्

रघुवंशमहाकाव्यस्यान्तर्गत एकादशसर्गे सिद्धाश्रमं प्रति प्रस्थितयोर्महर्षि-विश्वामित्रस्यानुगामिनो रामलक्ष्मणयोर्गमनचेष्टां निरूपयन् महाकविरुपमानरूप-योरिमे नद्यौ वर्णितवान् ।

'वीचिलोलभुजयोस्तयोर्गतं शैशवाञ्चपलमत्यशोभत ।
तोयदागम इवोद्ध्यभिद्ययोर्नामधेयसदृश विचेष्टितम् ।।' (रघु० ११।८)

यद्यपि बाह्यस्वरूपदृष्ट्या भौगोलिकपौराणिकमाहात्म्यदृष्ट्या चानयोर्नद्योर्गङ्गादीनां पुरातननदीनामिव माहात्म्यं प्रसिद्धिश्च न विद्येते, तथापि साहित्य-शास्त्रीयग्रन्थेष्वनयोरुल्लेख: प्राप्यते । अतएव मनोहारिण्यौ लघुसरिताविमेऽस्माकं दृष्टिमावर्जयत: । नद्योरनयो: कुत्रचिदवस्थिति: किं स्वरूपञ्चासीदिति प्रश्नयोरुत्तरं प्रस्तूयतेऽस्मिन्नदीसमीकरणात्मके निबन्धे ।

इमे उद्ध्यभिद्यौ नद्यौ बृहदाकारे नास्ताम् । अतएव अस्माकं प्राचीन-साहित्यग्रन्थेष्वनयोरुल्लेखोऽल्पमेव प्राप्यते । महावैयाकरणो महर्षि: पाणिनि: स्वकीयेऽष्टाध्यायिग्रन्थेऽनयोरुल्लेखं[1] कृतवान्, येन प्रतीयते यदिमे नद्यौ न भूत्वा नदा-वास्ताम् । अष्टाध्याय्यानयोर्नद्यो: परिचय: प्राप्तुं न शक्यते, किन्त्वष्टाध्या-य्याष्टीकाकारेषु वामनजयादित्याभ्यामिमे परिचीयेते यदुभेऽपीमे इरावत्यां (रावी) नद्यां पतत: स्म । 'उद्ध्येरावति', 'भिद्येरावति' उदाहरणाभ्याञ्च तथ्यस्यास्य संपुष्टिर्भवति ।

महाकविना कालिदासेनोपमानरूपयोरेकस्मिन्नेव स्थले[2] वर्णितयोर्नद्योरव-स्थितिरपि काशिकाया उपयुक्तोदाहरणाभ्यां (इरावत्या उल्लेखेन) ज्ञातुं शक्यते । अष्टाध्याय्यामिमे नद्यौ 'नदौ' इति रूप उल्लिखिते स्त: । अतएव प्रतीयते, यत्पाणिनिकाले (ई० पू० षष्ठशताब्द्यां उद्ध्यभिद्यौ [3]नदावास्ताम्, नद्यो रूपञ्च

---

1. पाणिनीयाष्टाध्यायी—3।1।115—'भिद्योद्ध्यौ नदे' ।
2. रघु० 11।8 वीचिलोल···तोयदागम इवोद्ध्यभिद्ययोर्नामधेयसदृशं विचेष्टितम् ।
3. लोकभाषायां नदस्य 'नालेति' संज्ञा सर्वै: प्रयुज्यते, साम्प्रतमपि, प्राय: दृश्यते यत् 'बरसाती नाला' कालान्तरे नदीरूपं गृह्णाति । नदस्य प्रयोगो विशालनद्यै विरलमेव भवति लोकव्यवहारे ।

न धारितवन्तो। स्पष्टमस्ति यत् प्रारम्भिके कालेऽविकसितायामवस्थायामिमौ नदयो रूपाभ्यां प्रवहतः स्म, किन्तु कालान्तरे कालिदासकालिकभारतेऽनवरतेन प्रवाहेण विकसितायामवस्थायां नद्यौ भूत्वेमे प्रसिद्धिङ्गतवत्यौ।

## (१) उद्ध्यनदीसमीकरणम्

अस्या नद्या नाम्नोऽस्याः प्रवाहप्रकृतिः परिज्ञायते। ऊर्ध्वगामिना परिपूर्ण-प्रवाहेण विशेषतो वर्षर्तौ वीचिभिः तटयोरुद्भेदनं भग्नपार्श्वाभ्यां जलनिष्क्रमण-ञ्चास्या मूलप्रकृतिः प्रतीयते। रघुवंशमहाकाव्यस्य यशस्विना टीकाकारेण [1]मल्लिनाथेनाऽपीयमेव सामान्याप्रवाहप्रकृतिरस्या उद्घाटिताऽस्ति। काशिकाया 'उद्ध्येरावति' उदाहरणेन निश्चितरूपेण कथयितुं शक्यते यदियं नदी पञ्चनद-प्रदेशस्य इरावत्याः नद्याः सहायिका (शाखा) नदी आसीत्। अतएव नामसाम्य-दृष्ट्या नदीयं 'उझ' नद्या समं समीकर्तुं शक्यते। विद्वद्वरैः स्व० डॉ० [2]वासुदेव-शरणाग्रवाममहोदयैरपीयं उद्ध्यनदी 'उझ' नद्या समीकृता, इरावत्याः (रावी) नद्याः सहायकनदीरूपे स्वीकृता चास्ति।

उद्ध्यनदी वर्तमानकाले 'उझ' नाम्ना कश्मीरहिमालयशृङ्खलाभ्यो निर्गत्य जम्मूप्रान्तवर्तिनि जसरोटाजनपदान्तर्गते प्रवहन्ती पञ्चनदप्रदेशस्य गुरुदासपुरजनपदे इरावत्याः (राव्याः) नद्या दक्षिणे तटे सङ्गच्छते। साम्प्रतमप्यस्याः तीव्रप्रवाहस्य तटोज्झनात्मिकी प्रकृतिर्वर्षर्तौ दृष्टुं शक्यते। लघ्वी सरिदियं वर्षस्यावशेषेषु मासेषु सामान्य नदीवत् प्रवहन्ती विलोक्यते, किन्तु वर्षर्तौ एवास्था उग्रासामान्यं च रूपमलोक्यते।

## (२) भिद्यनदी समीकरणम्

भिद्यनाम्नाऽस्या अप्यसामान्या प्रवाहप्रकृतिर्ज्ञायते, प्रतीयतेऽस्याः नाम्ना यदनयापि वर्षर्तौ तीव्रप्रवाहेण वीचिभिश्च तटयोरुभयोर्भेदनमसामान्यरूपेण क्रियते स्म। मल्लिनाथेन सञ्जीवनीटीकायामेवास्या अपि स्वभावः[3] प्रकटीकृतः।

वर्तमानकाले पञ्चनदप्रदेशस्य 'बही' (लोकभाषायां 'बई' नामधारिणी) नदी भिद्यनद्या समं समीकर्तुं शक्यते। यत इयं भिद्यनदी वर्षर्तावद्यापि स्वकीय-तीव्रतोयप्रवाहेणोभेऽपि कूले भिनत्ति। तोयदागमनकाले तरङ्गैस्तीव्रतया तटभेदनत्वा-दियं भिद्यनदी सत्यमेवाऽभिहिता पुरातनजनैः।

स्व० डॉ० वासुदेवशरणाग्रवालमहोदया[4] अपि भिद्यनदीभ्यां बही (बई)

1. सञ्जीवनीटीका–रघु० 11।8 'उज्झत्युदकमित्युद्ध्यः'…।
2. पाणिनिकालीन-भारतवर्ष, डॉ० अग्रवाल, बनारस, सं० 2012 वि०, पृ० 52।
3. सं० टीका–रघु० 11।8 'भिनत्तिकूलमिति भिद्यः'।
4. पाणिनिकालीनभारतवर्ष, डॉ० वासुदेवशरण अग्रवाल, बनारस, सं० 2012 वि० पृ० 52।

नद्या समं समीकृतवन्तः। नामसाम्यदृष्ट्या समीकरणमिदं सर्वथा समीचीनमेवास्ति। अस्या नद्या उद्गमस्थानं 'उज्ज' (उद्ध्य) नद्या उद्गमस्थानात् अष्टकोशान्तरे पश्चिमे कश्मीरहिमालयशृङ्खलासु जम्मूप्रान्ते वर्तते। उपर्युक्तोद्गमस्थानात् प्रवहन्ती भिद्य (बई) नद्यपि पञ्चनदप्रान्तवर्तिगुरुदासपुरजनपदान्तर्गते एव इरावतीं (रावीं) नदीं सङ्गच्छति। वर्षर्तावस्यास्तीव्रतरङ्गैस्तटभेदनप्रकृतिर्दर्शनीयाऽस्ति।

वर्षर्तावुद्ध्यभिद्ययोरसामान्यां वारिवीचिभिस्तटत्यागभेदनात्मिकीं प्रकृतिं संवीक्ष्य समासेन समीकरणमनयोरुज्जबईनदीभ्यां समं सर्वथा समीचीनमेव[1] कथयितुं शक्यते। महाकविः कालिदासो रामलक्ष्मणयोरुपमेययोः शैशवावस्थायाः स्वाभाविकीं स्फूर्तिमयीं चञ्चलाङ्गसंचलनचेष्टां निरूपयन् सटीकोपमानरूपयोरनयोः सुदूरवर्तिन्योर्नद्योरुल्लेखमुचितमेव कृतवान्। एवमन्यसामयिकसटीकोपमाभिराभिर्महाकविः कालिदासः सत्यमेवाभिहितः साहित्यालोचकैः—

'उपमा कालिदास्य।'...[2] □

---

1. विस्तृतविवरणाय लेखकस्य 1968 ई० वर्षे स्वीकृतः आगरा विश्वविद्यालयीयः पी-एच० डी० शोधप्रबन्धः द्रष्टव्यः—'कालिदास की कृतियों में भौगोलिक स्थलों का प्रत्यभिज्ञान', साहित्यनिकेतन, कानपुर 1969 ई०, पृ० 126–127।
2. द्रष्टव्यो विस्तृतशोधलेखो लेखकस्य सागरिकायां 16/3 अंके० सागरम् पृ० 87–90।

# अभिज्ञानशाकुन्तले कालिदासवर्णित-शुक्रावतार-शचीतीर्थ-स्थितिनिर्धारणम्

विश्वस्याशेषवाङ्मये समृद्धतमस्य संस्कृतसाहित्यस्य मूर्धन्यमहाकविना कालिदासेन स्वकाव्यग्रन्थरत्नेषु देवोपममहिममयस्य भारतभूमेः पावनाश्रमतीर्थादि सांस्कृतिकाङ्गनां चारुवर्णना वर्ण्यविषयेण सह यथास्थानं कृतेति सुविदितमेव सुधीसाहित्यिकानाम् । कविकुलगुरुः कालिदासः स्वकीयामरनाट्यकृतावभिज्ञान-शाकुन्तले महाराजदुष्यन्तस्य समक्षमेव राजसभायां तापसवृद्धया गौतम्या शुक्राव-तारशचीतीर्थयोरुल्लेखः कारयामास, तदनुसारं कण्वाश्रमात् हस्तिनापुरमागच्छन्ती सौभाग्यकांक्षिणी शकुन्तला न केवलमनयोः पावनतीर्थयोर्दर्शनं लेभेऽपितु श्रद्धावनता सा सामीप्येन तीर्थसलिलमप्यनयोर्ववन्दे[1] । कर्मणानेन शकुन्तलाया अज्ञाता एव दुष्यन्तप्रदत्ताऽभिज्ञानरूपिणी नामाङ्कितमुद्रिका तीर्थसलिले परिभ्रष्टासीत् । अतएव दुर्भाग्यवशाद्दुष्यन्तस्य समक्षं समये सा हतभागा तमङ्गुलीयकं प्रस्तोतुकामाऽपि प्रस्तोतुमसमर्था बभूव ।

कालान्तरे (नाटकस्य षष्ठाङ्के) शक्रावताराभ्यन्तरालवासिना मत्स्य-जीविना धीवरेण रोहितमत्स्योदरे लब्धा सैव मुद्रिका राजपुरुषैः राज्ञः दुष्यन्तस्य हस्तंगताभवत् । नाटकस्यास्मिन्नङ्के धीवरेण[2] समं दुष्यन्तेनापि[3] तदङ्गुलीयक-सन्दर्भे शक्रावतार-शचीतीर्थयोरुल्लेखः कृतः ।

अनेनोल्लेखेन स्पष्टमेव ज्ञायते यत् पावनशक्रावतारक्षेत्रे शचीतीर्थस्याव-स्थितिरासीत् । शचीतीर्थस्य स्वरूपं सरोवरादभिन्नमासीत् । राज्ञः दुष्यन्तस्योक्त्या प्रतीयते यदिदं शचीतीर्थसरः गंगास्रोतसोऽदूरमासीत् । तीर्थसरसः समीपवर्तिक्षेत्रं शक्रावतारसंज्ञया सुप्रसिद्धमभवत् । रोहितमत्स्योदराल्लब्धाङ्गुलीयको धीवरो-

---

1. अभिज्ञानशाकुन्तले, पञ्चमाङ्के गौतमी-कथनम्—"नूनं ते शक्रावताराभ्यन्तरे शचीतीर्थसलिल वन्दमानायाः प्रभ्रष्टमङ्गुलीयकम् ।"
2. अभि० शाकु०, षष्ठाङ्के, पुरुष (धीवर)—कथनम्-"शक्रावताराभ्यन्तराल-वासी धीवरः" ।
3. अभि० शाकु० षष्ठाङ्के—राज्ञः कथनम्—"शचीतीर्थं वन्दमानायाः सख्यास्ते हस्ताद् गंगास्रोतसि परिभ्रष्टम् ।"

ऽस्मिन् क्षेत्र एव निवसति स्म[1]। सम्भाव्यते, यदयं शचीतीर्थसरसः सलिलराशिः पावनगंगास्रोतसि एव अवरुद्धेऽपि पृथक् जलाशयरूपे निर्गत आसीत्। अतएव नौकर्मान्तरेण अस्य स्थिरजलतले बहुलतया मत्स्यादीनां जलजन्तूनां जालोपजीविभिर्मत्स्यजीविभिः संग्रहणमत्यन्तं स्वाभाविकमेवास्ति।

## तीर्थयोरवस्थितिविषयकाणि विदुषामभिमतानि—

अनयोः पावनतीर्थयोरवस्थितिविषयकाणि विदुषामभिमतानि विप्रतिपत्तिपूर्णानि विद्यन्ते। अस्मिन् विषयेऽधोलिखितानामनुसन्धानकानामभिमतान्युल्लेख्यानि सन्ति।

(1) डॉ० भगवतशरणोपाध्याय[2]—महोदयाः न शक्रावतारक्षेत्रं शचीतीर्थञ्च हस्तिनापुरस्य समीपं गंगातटेऽवस्थिते मन्यन्ते, किन्तु तैर्निश्चितं स्थानं न निर्धारितमस्ति।

(2) पं० गुरुप्रसादशास्त्रि[3]—महाभागैः सर्वप्रथमं शक्रावतारस्य समीकरणं एटा-जनपदस्य 'सोरों'—स्थानस्य सूकरतालेन समं कृतम्, किन्त्विदं समीकरणं सन्देहपूर्णं मत्वा पुनस्तैर्हापुड़स्थानस्यान्तिकेऽपि तीर्थरूपेऽस्यावस्थितिर्निर्दिष्टास्ति।

(3) श्री श्रीनिधिसिद्धान्तालङ्काराणां[4] मतानुसारं शक्रावतार-शचीतीर्थे वर्तमान—मुजफ्फरनगरात् चतुष्क्रोशान्तरेऽद्यापि 'शकरतार' इति नाम्ना तीर्थरूपे गंगातटे ऽवस्थिते स्तः।

शक्रावतार—शचीतीर्थयोरवस्थितिविषयकेषु पर्युक्ताभिमतेषु गुरुप्रसादशास्त्रिणामभिमतं तथ्यविपरीततया सन्दिग्धतया चामाननीयमस्ति। न केवलमस्माकमपितु तेषामपि दृष्ट्या तदीयावधारणा भ्रान्तिपूर्णा एव प्रतीयते। उभेऽपि स्थाने शक्रावतार-शचीतीर्थाभ्यां सर्वथाऽसम्बन्धिते स्तः, यतश्च मालिनीतटवर्ति-कण्वाश्रमात् हस्तिनापुरगामिनः प्राकृतमार्गान्निकटं न भूत्वेमे स्थाने (सोरों) स्थानस्य सूकरतालं, हापुडञ्च विपरीतदिशोः दूरस्थे वर्तेते। यद्यप्येतयोस्थलयोर्गङ्गातटादधिकान्तरयुक्तावस्थितिर्नास्ति, तथापि कण्वाश्रमात् हस्तिनापुरं प्रति मार्गस्य ऋजुतां दृष्टिपथमादायानयोः समीकरणं शक्रावतारशचीतर्थाभ्यां समुचितं नास्ति।

प्रासङ्गिक्या दृष्ट्यानया डॉ० भगवतशरणोपाध्यायमहोदयानामभिमतं विचारणीयमस्तिः यस्मिन् स्थलविशेषस्यानिर्दिष्ट्याऽनिश्चितिः श्रीनिधिसिद्धान्ता-

---

1. अभि० शाकु० षष्ठाङ्के पुरुष "अहं खलु शक्रावतारवासी धीवरः (हग्गे क्खु शक्कवदालवाशी धीवले), पृ० 361।
2. कालिदास का भारत, (हिन्दी संस्करणम्), काशी, 1963 पृ० 123।
3. अभिज्ञानशाकुन्तलम्—सं० गुरुप्रसाद शास्त्री, चौखम्भा संस्करणम् भूमिका।
4. मालिनी के तटों में, (हिन्दी संस्करणम्), दिल्ली 1960, पृ० 191।

लंकाराणामभिमतेन सर्वथा दूरीभवति तथाहि मुजफ्फरनगरात् पंचक्रोशान्तरे गंगानटीयं "शकरतार"–नाम्नस्तीर्थसर: शक्रावतार-शचीतर्थाभ्यां समीकर्तुमव्याघातकदृष्टिकोणेन समीचीनं प्रतिभाति।

## तीर्थयो: प्राचीनता माहात्म्यञ्च—

तीर्थयोरनयो: प्राचीनताभिज्ञानशाकुन्तले वर्त्तमानै: प्रसंगै: सिद्ध्यति। कालिदासकालिके भारतेऽनयो: प्रसिद्धि–रसामान्या महत्त्वञ्च सर्वविदितमासीत्। इदं प्रतीयते, यत् कवि-कुल-गुरो: कालिदासस्य पूर्ववर्तिसमाजे साहित्ये चानयोस्तीर्थयोर्मान्यितासीत्। वृत्रासुरवधस्य पौराणिक[1]–कथाया आधारेण कथयितुमिदं शक्यते यत् युद्धे दुर्दान्तदानवै: पराभूत: पुरन्दरोऽन्ते, वज्रेण वृत्रं निहत्य ब्रह्महत्यापातकेन श्रीहीनो भूत्वा स्वर्गं त्यक्त्वा गुप्ताज्ञातस्थाने न्यवसत्। इदं स्थानं न शचीन्द्राणी न च मंत्रिवर्ग एव जानाति स्म; किन्त्वन्वेषणे विलुप्तस्त्रिदिवस्पति: वज्रायुध:शक्रोऽत्रैव निर्जने गंगातटे लब्ध:, अतएवात्रैव शक्रस्याविर्भावादिदं स्थलं शक्रावतारसंज्ञया सत्यमेवाभिधीयते। इन्द्राणी शची अस्मिन्स्थले एव स्वविलुप्तपतिं शक्रं प्राप्य स्वकीयं सौभाग्यसुखं लब्धवती, अतएव कालान्तरे एतयो: (शक्रशच्यो:) नाम्नो: शक्रावतारशचीतीर्थेऽपि संज्ञिते प्रसिद्धिंगते। वृत्रवधाद् ब्रह्महत्याकारीन्द्र: यत्रवैराज्ञातवासञ्चकार, तदस्या: पौराणिकगाथाया आधारेणानयोस्तीर्थयो: प्राचीनताऽसंदिग्धैव।

इदं प्रतीयते यत्सद्यो विवाहिता: सधवा: वा, किन्तु पतिवियुक्ता: स्त्रियोऽत्रैव सिद्धकामा अभवन्। तीर्थयोरनयो: (दर्शनात्, स्नानात् वन्दनाञ्च) प्रभावादासां पतिवियुक्तानां पति-समागमायेमे महत्त्वपूर्णे मंगलकारिप्रियतीर्थे मन्येते स्म। महाकविकालिदासयुगीनभारतेऽनयोस्तीर्थयोर्महत्त्वं जनसामान्यै: सुविदितमासीत्; अतएव कविकुलगुरुरपिपतिवियुक्तया शकुन्तलयानयोस्तीर्थयोर्न केवलं दर्शनमपितु सलिलवन्दनं कारयामास।

शकुन्तलाया: कण्वाश्रमात् हस्तिनापुरगामिन: सरल-स्वाभाविक-मार्गादपि "शकरतार" नाम स्थलमिदं दूरं नास्ति। कण्वाश्रमात् हस्तिनापुरस्य दक्षिण-पश्चिमाभिमुखमृजु प्राकृतमार्गं विहाय वर्तमानकीरनपुरात् संभवत: 'रावली' नाम्नि स्थले गंगाया: पूर्विप्रतरेण[2] (बिजनौरात् क्रोशत्रयमुत्तरेण) कथमपि नौकया

---

1. महाभारते, वनपर्वणि, 101.16 तस्मिन्हते दैत्यवरे भयार्त्त:, शक्र: प्रदुद्राव सर: प्रवेष्टुम्। श्रीमद्भागवत पुराणे, 6.13.22 इदं महाख्यानमशेषपाप्मनां प्रक्षालनं तीर्थपदानुकीर्तनम् भक्त्युच्छ्रयं भक्तजनानुवर्णनं, महेन्द्रमोक्षं विजयं मरुत्वत:॥
2. लोकभाषायां 'घाट' इति शब्द: प्रयुज्यते, यस्याशयोऽस्ति 'नदी-संतरणस्थलम्'।

काष्ठखण्डैर्वा भागीरथीं तीर्त्वा गौतमीशार्ङ्गरवशारद्वतसहिता सशंकिता शकुन्तला शक्रावतार-शचीतीर्थेऽगमिष्यत् । रावलीस्थानस्य जनश्रुतिरपि तथ्यमिदं प्रमाणीकरोति, यत् शकुन्तलाऽत्र रम्योपवने किञ्चित्कालं विश्रामाय यापितवती ।

यद्यप्यनयोस्तीर्थयोः प्राचीनतासूचकः कोऽपि भग्नावशेषोऽत्र न प्राप्यते, तथापि कतिपयैस्तुङ्गकलशैर्मन्दिरैः शचीतीर्थमहिलाघाटस्थलेन च एतावत्तु कथयितुं शक्यते यन्महाकविकालिदासकालेऽवश्यमेवेमे तीर्थस्थले न केवलं सुप्रसिद्ध-पवित्र-तीर्थरूपेऽपितु सांस्कृतिकोत्कर्ष-पूर्णे आवासयुक्तनगररूपेऽपि विश्रुतेऽभविष्यताम् ।

अत्र समीपवर्तिस्थले ख्रीष्ट० 18–19 तमशताब्द्याः प्राचीनदुर्गो विद्यते, यस्तत्कालिकइतिहासे 'शकरतार-दुर्ग' इति नाम्ना उल्लिखितोऽस्ति; यस्मिन्नवाब-पदभाग् उद्दौला महाराष्ट्रशासकानां साहाय्येन राजमंत्रिणा गाजी-उद्दीनेन वन्दीकृतः । कालान्तरे स एव नवाबउद्दौला रुहेलखण्डीयशासकसाहाय्येनेतो विमुक्तोऽभवत् ।

## उपसंहारः

'शक्रावतार-शचीतीर्थयोरवस्थितिः रावलीस्थानस्य समीपे गङ्गायाः पारे (पश्चिमी तटे) वर्तमानमुजफ्फरनगरात् पंच-षट् क्रोश-दूरं पूर्वस्यां दिशि 'शकरतार' नाम्नः स्थानादभिन्नैव माननीया' इति उपर्युक्त सन्दर्भेण सम्भाव्यते ।

कतिपयैरनुसन्धायकैर्भ्रान्तिवशादिदं 'शकरतार'–('शकरताल' वा) स्थानं शुकताल[1] ('शुक्रताल' वा) नाम्ना स्थलेन समीकृतमितिदृष्टिरसमीचीनाप्रतिभाति अप्रासङ्गिकत्वात् ।

अतएव अभिज्ञानशाकुन्तले कालिदासवर्णितयोः शक्रावतार-शचीतीर्थयोरवस्थितिः गंगाया दक्षिणे तटे मुजफ्फरनगरजनपदेऽवगन्तव्या तथा शक्रावतारक्षेत्रस्य समीकरणं "शकरतार"—स्थलेन समं सर्वथा समीचीनमस्ति ।

आशासेऽनुसन्धायका विद्वांसस्तीर्थयोरनयोः सांस्कृतिकैतिहासिकपुरातात्त्विक-राजनैतिकधार्मिकक्षेत्रेष्वपि तत्परतापूर्वकं अनुसन्धानात्मकाध्ययने रताः समुद्धारं करिष्यन्ति ।[2] □

---

1. द्रष्टव्यम्-कल्याण-विशेषाङ्कः वर्ष 31, अंकः 1, गीताप्रेस गोरखपुरम्, पृ० 65 । पौराणिकगाथानुसारेण गंगातटीये 'शुकताल'–नाम्निस्थले महाराजः परीक्षितः महर्षिशुकदेवात् श्रीमद्भागवतं पुराणं श्रुत्वा तक्षकदंशात् सप्तदिवसेष्वेव मोक्षं लेभे । इदं स्थलमपि हस्तिनापुरात् 15 क्रोशमुत्तरस्यां, हरिद्वारात् 20 क्रोशं दक्षिण-पूर्वे, बिजनौरात् च 5 क्रोशं दूरं वर्तते ।
2. द्रष्टव्यो लेखकस्य विस्तृत शोधलेखः सागरिकायाः 15/3 अंके, सागरम्, पृ० 373–377 ।

# कालिदासस्य काव्ये राष्ट्रियभावना सांस्कृतिकचेतना च

विश्वकविषु, संस्कृतसाहित्यस्य महाकविषु कालिदासेनैव गौरवमयं स्थानं प्राप्तमस्ति। कविकुलगुरोः कालिदासस्य कान्तासम्मिता सुन्दरभावाभिव्यक्तिपूर्णा भारतीं राष्ट्रियभावनासांस्कृतिकचेतनाभ्यां समन्विता वर्त्तते; यस्याः मार्मिकानुभूतिः केन सहृदयेन न कृताऽस्ति। महाकवेरमरकृतिषु साहित्यिकविविधपक्षेषु न केवलं भारतवर्षेऽपितु विश्वस्यान्यदेशेष्वधिकं कार्यं सञ्जातम्, किन्तु तासु व्यक्तस्य राजनैतिक-धार्मिक-सांस्कृतिक-भौगोलिकादिशास्त्राणां व्यापकस्य ज्ञानस्य व्याख्या स्वल्पमेव सम्पादिता सुधीभिः। संक्षिप्तेऽस्मिन्निबन्धे समीक्ष्यतेऽत्र मया महाकवेरमरकृतिष्वभिव्यक्तं राष्ट्रिभावना सांस्कृतिक चेतना च।

महाकविना मनोहारण्याः भारतभूमेरनन्यया शोभया नेत्रनिर्वाणं लब्ध्वाऽस्याः भौतिकाङ्गानां सचेतनरूपे चित्रणं कृत्वा राष्ट्रस्याशेषाः मनीषिपुरुषाः तां प्रत्युद्बुद्धाः। तस्य पृथिव्याः मानदण्डः हिमालयो नाम नगाधिराजः 'देवतात्म'-रूपे मण्डितोऽस्ति—

"अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः
पूर्वापरौ तोयनिधि वगाह्य स्थितः पृथिव्या इव मानदण्डः ॥"[1] इति

विरही यक्षः रामगिरि[2]चेतनरूते दृष्ट्वा मेघं तस्यानुमतिं प्राप्तुं कथयति। महाकविकालिदासस्य रसिकता यथास्थानं स्वसाहित्यिकतायाः संस्पर्शं कुर्वती एषां राष्ट्रियप्राकृतिकरूपाणां माध्यमेन भारतभूमेः नयनाभिरामां शोभां प्रस्तौति।

कुत्रचित् पक्वाम्रफलैर्वृतः मेघखण्डमयसानुमानाम्रकूटः[3] कविना पृथिव्याः स्तन इवोत्प्रेक्षितः, क्वचिच्च सागरसलिलवसनादनावृतः सह्याद्रिस्तस्याः नितम्ब इव प्रतीयते[4]। नीचगिरेः शिलावेश्मभिः सोद्दामयौवनयुक्तया विलासवार्तया कविः

---

1. कुमारसम्भवे–1/1
2. पू० मेघदूते। 12 आपृच्छस्व प्रियसखममुं तुंगमालिंग्य शैलम् ........।
3. पू० मेघदूते। 18–'छन्नोपान्तःपरिणतफलद्योतिभिः काननाम्रै-
स्त्वय्यारूढे शिखरमचलः स्निग्धवेणीसवर्णे।
नूनं यास्यत्यमरमिथुनप्रेक्षणीयामवस्थां,
मध्ये श्यामः स्तन इव भुवः शेषविस्तारपाण्डुः ॥'
4. रघुवंशे–4/52, 58।

तत्कालीनाः सांस्कृतिकसामाजिकस्थितीः मुकस्वरेण घोषितवान्[1] । गंगासरय्वोरिव सरित्संगमाः कविना श्रेष्ठतीर्थरूपे मोक्षदायकाः परिकल्पिताः[2] ।

चित्रकूटे वक्रपर्वतीयमार्गेण प्रवाहिता मन्दाकिनी[3] पृथिव्याः मुक्तावलीव प्रतिभाति । मुक्ताफलप्रसविनीताम्रपर्णीसदृशाः[4] नद्योऽपि राष्ट्रस्यार्थिकसमृद्धौ नाल्पाः सहायिका आसन् । अयोध्यायाः[5] सरयूः मथुरायाः[6] यमुना, दशपुरस्य चर्मण्वती,[7] उज्जयिन्याश्शिप्रा,[8] पुष्पपुरस्य[9] गंगा, महिष्मत्याः[10] नर्मदादिनद्योऽस्य देशस्य नगराणामार्थिकव्यापारिकधार्मिकसांस्कृतिकैतिहासिकसमृद्धेर्न केवलं साक्षिण्य आसन्नपितु तस्याः परमपोषिका अपि वस्त्वर्थेऽभवन् । सलिलवसनाया वसुधाया एतानि जलीरूपाणि महाकविना राष्ट्रस्य प्राकृतिकसुषमारूपे तु दृष्टान्येव तेन समं सांस्कृतिकसमृद्धावपि एते सहायकाः स्वीकृताः सन्ति ।

कालिदासेन महाकविना नानाजलीयरूपाणामपि मानवीकरणमाध्यमेन चेतनवच्चित्रणं कृतम्–तस्य मनोहारिण्यो नद्योऽपि विलासिन्याः नायिकायाः रूपे क्वचिज्जलावर्ते गंभीरनाभिम[11] क्षीणधारायां स्निग्धवेणीं[12], सलिलवसनादनावृत्ते उपतटे पीननितम्बं[13], फेनिले जले कलहास्यं[14], तरंगेषु चारुभ्रूभङ्गम्[15], हंसध्वनौ नूपररवं[16] विहंगमानां कलनादे[17] कांचीरवं व्यक्तवत्यः दृश्यन्ते । नानावन[18]

1. पू० मेघो–27 नीचैराख्यं गिरिमधिवसेस्तत्रविश्रामहेतोः······ ।
2. रघुवंशे 8/95 तीर्थेतोयेव्यतिकरभवे जह्नुकन्या सरय्वोर्देहत्यागादमरगणनालेख्यमासाद्य सद्यः ।
3. रघु० 13/48 एषा प्रसन्नस्तिनितप्रवाहा·········मुक्तावली कण्ठगतेव भूमेः ।
4. रघुवंशे–4/50 ।
5. रघु० 9/30, 13/61, 62 ।
5. रघु०–6/48, 49 ।
7. पू० मेघे–49, 51 ।
8. पू० मे०–31 ।
9. रघुवंशे–6/48 ।
10. रघु०–6/43 ।
11. पू० मेघे–18 दर्शितावर्तनाभेः ······ ।
12. पू० मे०–29 वेणीभूतप्रतनुसलिलाः ······ ।
13. पू० मे०–45 ।
14. विक्रमोर्वशीये–4/28 तरंगभ्रूभंगा······ ।
15. पू० मेघे–24 सभ्रूभंगमुखमिव पयो······ ।
16. ऋतुसंहारे–3/1, विक्रमो० 4/17 ।
17. पू० मेघे–28 वीचिक्षोभस्तनित विहगश्रेणिकांचीगुणायाः ।
18. रघुवंशे–5/42, 42, 16/31, 32 ऋतुसंहारे–2/8 पू० मे० 17, 18 ।

नदनदी[1] पर्वतोपत्य[2] कासरोवराणां[3] प्राकृतिकसौन्दर्यसमन्वितैर्दृश्यैः कविरस्माकं नेत्रनिर्वाणमकारयत्। अनेन वयं भारतीयसंस्कृतौ निहितां व्यापिकीं चेतनामनुभवामः। यतः काव्यकलया समं एषु प्राकृतिकस्थलेषु राष्ट्रस्य प्राचीनगौरवमप्यस्याभिरनुभूयते।

तत्कालीनं सम्पूर्णं राष्ट्रं विविधेषु लघुगुरुराज्येषु विभक्तमासीत्तथापि महाकविरस्मिन्, विभक्ते रूपेऽपि राष्ट्रव्यापिन्या अखण्डताया एकतायाश्च शोभनोद्भावनां कृतवान् या द्वयोः रूपयोरस्माकं पुरत आयाति—

(1) रघुदिग्विजयप्रसंगे महाकविः, रघुणा राष्ट्रस्य बाह्यसीमासु यौद्धिकाभियानं कारयित्वा तस्य दिग्विजयमार्गवर्णनव्याजेन बृहत्तरभारतस्यादर्शसीमाः निर्धारितवान्। (द्रष्टव्यः रघुवंशस्य चतुर्थसर्गः)।

(2) इन्दुमत्याः स्वयंवरस्य व्याजेन रघुवंशे षष्ठसर्गेऽपि कविना देशस्यं दूरस्थकोणानां राज्ञोऽपि विदर्भसदृशे राष्ट्रस्य हृदयवत् केन्द्रवर्तिराज्ये एकत्रितान् चित्रीकृत्य तेषां सांस्कृतिक्येकता विवाहतुल्यरक्तसम्बन्धेन प्रतिपादिता। दृष्ट्यानया स्थान एव राष्ट्रियकविरूपे महाकविः महत्त्वशाली मन्यते मनीषिभिः। स्व० डॉ० वासुदेवशरणाअग्रवालमहोदयस्यापि[4] इयमेव सुविचारिता दृष्टिः वर्तते।

महाकविरुपर्युक्तेषु सन्दर्भेषु वर्णितानां[5] राज्यानामार्थिकधार्मिकराजनैतिक सांस्कृतिकसमृद्धि सलक्ष्या प तैः समं [6]पुलिन्दकिरात[7]वनेचर[8]नागा[9]नामनेकासामादिमजातीनामप्युल्लेखं कृतवान्। संभवतः इमे आदिमजातीयजनास्तस्मिन्युगे शक्तिसम्पन्नां राज्यानां प्रभुतां स्वीकृत्य राष्ट्रियसमाजस्य जनजीवनेन घनिष्ठरूपेण सम्बन्धिता आसन्।

महाकविः स्वकृतिषु स्वदेशस्य यानि नगराण्युल्लिखितवान्, तानि सप्राणायाः समृद्धिशालिन्याश्च भारतीयसंस्कृतेः सर्वेषां पक्षाणां शोभनां व्याख्यां प्रस्तौति।

---

1. कुमारसम्भवे–1/1-12, रघु० 2/68, पू० मे० 27।
2. अभिज्ञानशाकुन्तले, पंचमेऽङ्के–'हिमगिरेरुपत्यकारण्यवा सनः······।'
3. रघु० 18/31 'त्रिपुष्करम्'।
4. 'भारत की मौलिक एकता' नाम्नि ग्रन्थे, पृ० 154, प्रथमे संस्करणे।
5. द्रष्टव्यौ रघुवंशे चतुर्थषष्ठसर्गौ।
6. रघु० 16/19, 32।
7. रघुवंशे–4/76, कुमार० 1/6, 15।
8. कुमार–1/10, पू० मे० 20।
9. कुमार–1/20, रघु० 16/76, 80, 6/49।

[1]तस्योज्जयिनी[2]विदिशामथुरा[3]पुष्प[4]पुरायोध्या[5]दिनगर्यः धर्मार्थकामपुरुषार्थैः पूर्णाः भौतिकात्मिकसमृद्ध्योरन्तिमां सीमामधिगतवत्य आसन् । ताः धर्मराजनीतिशासन-कलावाणिज्यशिक्षादिविषयाणां केन्द्रीभूय देशविदेशेषु गौरवान्विता बभूवुः ।

कालिदासेनोल्लिखिता [6]ऋषिमुनीनामाश्रमास्तीर्थं[7]मन्दिरादीनि च प्राचीन-भारतस्याध्यात्मिकोत्कर्षपूर्णाया[8] उपलब्धेः कीर्तिमयीं कथां कथयन्ति । वस्तुतः परम्परारूपेण पावनाश्रमाणामेषां चित्रणं कृत्वा कविः करुणाक्षमादयापरोपकारत-पोमयभारतीयजीवनस्य समुज्ज्वलान्तःपक्षस्य मनोमोहिनीं छटां दर्शयित्वा भारती-यसंस्कृतेश्चरमादर्शं प्रति विश्वं विशेषेणोन्मुखीकृतवान् । सामान्यतया कविना वर्णिताः सर्वे आश्रमाः यज्ञतपःशिक्षास्थानरूपेष्वपि गृहस्थधर्मेभ्यः पराङ्मुखाः नासन्निति सुव्यक्तमेव तस्य कृतिषु । ते सम्पूर्णराष्ट्रस्य भौतिकाध्यात्मिकाभ्युदये महत्त्वपूर्णं योगमददुः । राज्यसंरक्षणं लब्ध्वाऽपि इमे स्वतन्त्रवातावरणे श्वसन्तो-ऽन्तर्मुख्यां साधनायां निलीयन्ते स्म ।

महाकवेः काव्यकृतिषु वर्णितैर्विविधमार्गैरपि तत्कालीनराष्ट्रव्यापिन्याः शोभनायाश्चेतनाया आर्थिकसमृद्धेश्च सम्यक् परिचयः प्राप्यते । रघुदिग्विजय-सम्बन्धि-मार्गेण[9] राष्ट्रस्यादर्शसीमा निर्धार्यते । तेन वयं विदेशिसीमावर्त्तिराज्येभ्यः राष्ट्रीयसीमां रक्षितुं शक्नुमः । वाल्मीकि-रामायणाद् गृहीतः रामस्य पुष्पक-विमानस्य यात्रामार्गो[10] दक्षिणे सेतुबन्धादुत्तरेऽयोध्यायपर्यन्तं व्यापकरूपे विस्तृतायाः राष्ट्रभुवः बाण इव समवेतरूपेण संमापनं कृत्वा राष्ट्रीयैकतां प्रत्युन्मुखीं कारयित्रीं चेतनामनुभावयति । मेघमार्गः[11] महाकवेः साहित्यिकप्रतिभायाः सुन्दरसंस्पर्शेन भारतीयवृष्टिसंस्थानस्योत्कृष्टं स्वरूपं प्रस्तौति । यद् राष्ट्रस्यार्थिकप्राकृतिक-

1. रघुवंशे–6/35, पू० मेघे–32 ।
2. पू० मेघे–26, मालविकाग्निमित्रे–5/10 ।
3. रघु० 6/48, 15/36 ।
4. रघु० 6/24–नेत्रोत्सवं पुष्पपुराङ्गनानाम् ।
5. रघु० 11/13, 12/10, 29, 15/38, 60, 16/25 ।
6. रघु० 1/35, 48, 2/67 (वशिष्ठाश्रमः); 5/1, 4, 20 (वरतन्तुः) 11/22-23 (वामनाश्रम) ।
7. अभिज्ञानशाकु० 1/13, तः परान्ते सोमतीर्थम् 5/31 शचीतीर्थशक्रावतारौ, रघु० 15/101 गोप्रतर ।
8. पू० मेघे–6, 34, 37, 40 ।
9. द्रष्टव्यः रघुवंश चतुर्थसर्गः ।
10. रघु० 13/1-14, 63 ।
11. द्रष्टव्यम्–पू० मेघदूतम्, 14-61 ।

समृद्ध्योः मूलाधाररूपे महत्त्वशालि वर्त्तते ।

महाकविः कालिदासः राष्ट्रस्य विराटस्वरूपात् सुपरिचित आसीत् । अतः सोऽस्य वैविध्यापूर्णां, मनोहारिणीं, तथ्यपूर्णां, स्वभाविकीञ्च शोभां प्रस्तुतवान् । कलिंगानां[1] प्राच्यसमुद्रतटस्य श्यामलं राजतालीवनं वा स्यात्, [2]महेन्द्रगिरेर्नागवल्लीनां नारिकेलानामासवस्य चित्रं वा स्यात्, मारीचवने [3]उद्भ्रान्तहारीतका चन्दनैलालतामयीमलयाद्रेः रम्योपत्यका[4] वा स्यात्, पाश्चात्यसीमान्तप्रदेशानां द्राक्षालताभिः कुंकुमकेशरस्य कविः कथां कथयेद्वा, नगराजहिमालयस्य[5] भूर्जपत्राणां मर्मरध्वनेः, कस्तूरीमृगाणां नाभिगन्धस्य, भागीरथ्याः सशीकरशीतलसमीरस्य च गौरवगीतिकानि वा गायेत्, लौहित्यमुत्तीर्य कामरूपाणां [6]गजानामगरुवृक्षाञ्च वैविध्यपूर्णं वर्णनं वा कुर्यात् सर्वस्मिन् राष्ट्रस्यैका समन्विता समृद्धिपूर्णा च रमणीयतव द्रष्टुं शक्यते । इत्थं प्रतिभाति यन्महाकविः मनः प्राणैरिवास्य देशस्य प्रतिकर्णं रेमे ।

संक्षेपेऽनेन तथ्येनोपसंहर्तुं शक्यतेऽयं लेखः यत् महाकवेः कालिदासस्य काव्य-कृतिषु समाहिते राष्ट्रियभावना सांस्कृतिकचेतना चात्यन्तं महत्त्वपूर्णोपादेये स्तः । अस्माभिराभ्यां स्वकीयस्य स्वर्णिमस्यातीतस्य सत्यं मूल्यांकनं कुर्वद्भिः नवजागर्तिः सांस्कृतिकचेतना चेति लब्ध्वा महाकवेः काव्यकृतीनां धार्मिककैतिहासिकराजनीतिकभौगोलिकपुरातात्त्विकादिदृष्ट्या व्यापकमध्ययनं करणीयम्[7] ।

□

1. रघुवंशे–4/34-44, 6/56-57 ।
2. रघु–4/42-43 ।
3. रघु०–4/45–"ससञ्जुरश्वक्षुण्णानामेलानामुत्पत्तिष्णवः ।"
4. रघु०–4/61, 67, 68 ।
5. कुमारसम्भवे–1/7, 15, 55 ।
6. रघु०–4/81-84, 7/17 ।
7. लेखकस्य दिल्ली द्वितीय विश्वसंस्कृतसम्मेलने प्रस्तुतं शोधपत्रम् । सागरिका 10/4 (विश्वसंस्कृतसम्मेलनाङ्के ) पृ० 367-402 प्रकाशितम् ।

# कालिदासकृतिषु नगरवर्णनम्

संस्कृत-साहित्यस्य महाकविषु कालिदासेनैव गौरवमयं स्थानं प्राप्तम्। कविकुलगुरोः कालिदासस्य कान्तासम्मिता ललितभावाभिव्यक्तिपूर्णा भारती भारतीयनगराणां वर्णने राष्ट्रियभावनासांस्कृतिकचेतनाभ्यां समन्विता वर्त्तते, यस्या मार्मिकानुभूतिः केन सहृदयेन नास्वादिता ? अस्मिन्निबन्धे "कालिदासकृतिषु नगरवर्णनम्" इति विषयो विविच्यते मया सोदाहरणम्।

महाकविना नगराणां वर्णनं वर्गचतुष्टयाधारे कृतम्, अतएव वर्णितानि नगराणि तत्कालीनसमृद्धराज्यानां शासनस्य केन्द्रीभूतानि ज्ञान-विज्ञानकलावाणिज्यादिक्षेत्रेषु विख्यातानि धर्मार्थकामप्रधानानि सन्ति। कालिदास एतेषां नगराणां पुरातनपृष्ठभूमिविषयकं माहात्म्यं निर्दिशन् भौगोलिकदृष्ट्याऽपि सम्यगवस्थितिमप्यभिव्यक्तवान्। शासनकेन्द्रीभूतनगरेषु तक्षशिलापुष्कलावतीहस्तिनापुरमथुरायोध्याशरावतीप्रतिष्ठानपुष्पपुरप्राग्ज्योतिष-मिथिलाकाशीमाहिष्मती-दशपुरोज्जयिनीकुशावतीकुण्डिनपुरोरगपुरालकौषधिप्रस्थादीनिगराणि कविनोल्लिखितानि सन्ति। धर्मार्थकामतीर्थरूपेषु बहूनामेतेषां वर्णनं वर्ण्यविषयेण सह कविना कृतम्।

तक्षशिला[1]-पूर्वगान्धारराज्ये वर्तमानरावलपिण्डीक्षेत्रे भरतपुत्रतक्षस्य राजधानी आसीत्। पुष्कलावती[2] काबुलसुवास्तुसंगमेऽवस्थिता पश्चिमीगान्धारराज्ये पुष्कलस्य राजधानी बभूव। महाराजदुष्यन्तस्य राजधान्या हस्तिनापुरस्योल्लेखोऽभिज्ञानशाकुन्तले[3] विद्यते। इन्दुमतीस्वयंवर-प्रसंगे शूरसेनाधिपस्य परिचयं ददती सुनन्दा मथुराया मनोहारिवर्णनमित्थं कृतवती–

"यस्यावरोधस्तनचन्दनानां प्रक्षालनाद्वारिविहारकाले।
कलिन्दकन्या मथुरां गताऽपि गंगोर्मिसंसक्तजलेव भाति॥

(रघु० 6।48)

1. रघु० 15।89।
2. रघु० 15।89।
3. अभिज्ञानशाकुन्तले, चतुर्थाङ्के (प्रियंवदोक्तिः)।

यमुनाजले विहरन्तीनां सुखेनान्तः पुरसुन्दरीणां धवलस्तनचन्दनप्रक्षालनात् यमुना प्रयागं विना मथुरायामेव शुभ्रगंगाजलसंयुक्तेव शोभते स्म । मथुरापार्श्ववर्ति वृन्दावनमपि कामतीर्थरूपे कविना नैसर्गिकैरुद्यानादिभिः परमरमणीयं वर्णितम्—

संभाव्यभर्त्तारममुं युवानं मृदुप्रवालोत्तरपुष्पशय्ये ।
वृन्दावने चैत्ररथादनूने निर्विश्यतां सुन्दरि यौवनश्रीः ।।

वस्तुतः वर्णनमिदं यथातथमेव । अद्यापि वृन्दावनं वर्षंतो स्वकरीरकुञ्ज-पुञ्जै रम्योद्यानैश्चातिशयं रमणीयं वर्तते ।

विक्रमोर्वशीये[1] वर्णितं पुरूरवसः शासनकेन्द्रं प्रतिष्ठानपुरं गंगा-यमुना-संगमसमीपे 'झूसी' स्थलेऽवस्थितमासीत् । परवर्तिपैठनेन[2] समीकृतं प्रतिष्ठानपुरं पुरूरवसः प्रासादैः प्रतिबिम्बितं भवति स्म संगमजले ।

सरयूतटेऽवस्थितायोध्या[3] साकेतं वा कोशलानां राजधानी बभूव । कोशल-विभाजने राप्तीतटस्थिता [4]शरावती (बौद्धकालीन-श्रावस्ती) सहेतमहेतेन समीकृता,[5] उत्तरकोशलेषु लवस्य राजनगरी, विन्ध्यश्रेणिषु स्थिता कुशावती च दक्षिणकोशलेषु कुशस्य राजधानी आसीत् । 'कुशावतीं श्रोत्रियसात्कृत्वा··· इतिवर्णनेन ज्ञायते यदत्र वैदिकधर्मानुयायिब्राह्मणानां न्यूनता नासीत् । [6]वाल्मीकि-रामायणमनुसृत्य कविनैतन्नगराणि वर्णितानि ।

मगधराज्यशासनकेन्द्रं पुष्पपुरं पाटलिपुत्रेण समीकर्तुं शक्यते । अत्र गवाक्षयुक्तानां प्रासादानामधिकतासीत् । तेषु विराजिता विलासिन्यः बाह्यदृश्य-मवलोकयन्ति स्म[7] ।

पूर्वसीमान्तकामरूपस्य राजधानी प्राग्ज्योतिषपुरं लोहित्य-(ब्रह्मपुत्र) पारे आसीत् । तत् कविर्वर्णयति—

---

1. विक्रमो० द्वितीयाङ्के (चित्रलेखोक्तिः), 2।14 चतुर्थाङ्के (विदूषकोक्ति) ।
2. "कालिदास की कृतियों में भौगोलिक स्थलों का प्रत्यभिज्ञान" लेखकस्य शोधग्रन्थे, 1969, कानपुर, पृ० 208, 209 ।
3. रघुवंशे—11।93, 14।10, 29, 15।38, 60, 16।25 साकेतं—रघु० 5।31, 13।79, 14।13, 18।36 ।
4. रघु० 15।97 ।
5. Cunnigham's Ancient Geography of India, 1934 Calcutta. P. 467.
6. वा० रामा० उत्तर० 108।5 श्रावस्ती पुरी रम्या श्राविता च लवस्यह ।
7. रघु० 6।24 प्रासादवातायनसंश्रितानां नेत्रोत्सवं पुष्पपुराङ्गनानाम् ।

"चकम्पे तीर्णलौहित्ये तस्मिन् प्राग्ज्योतिषेश्वरा: ।" (रघु० 4।81)

दक्षिणभारतस्य विख्यातनगरेषु अनूपराजकार्तवीर्यराजनगरीमाहिष्मती नर्मदावक्रधारया रशनयेवावृता प्रासादैः प्रतिबिम्बिता शुशुभे–

........................माहिष्मतीवप्रनितम्बकाञ्चीम् ।
प्रासादजालैर्जलवेणिरम्यां रेवां यदि प्रेक्षितुमस्ति कामः ॥

(रघु० 6।43)

वस्तुतो नर्मदाया नैसर्गिकशोभया माहिष्मती सम्प्रति महेश्वराद[1] भिन्न-जनपदे प्रेक्षणीयैवास्ति ।

"तेषां दिक्षु प्रथितविदिशालक्षणां राजधानीम्' इति मेघदूते वर्णिता शुङ्गशासनकाले सुप्रसिद्धा राजनगरी विदिशा राराजते[2] अधुना मध्यप्रदेशे । पुरा सा राजनैतिकव्यापारिकदृष्ट्या महत्त्वशालिनी आसीत् । अवस्थितिरस्याः वेत्रवत्यास्तटे नीचगिरेः पार्श्वे वर्णिता,[3] यत्र विदिशाया विलासिनः वाराङ्गनाभिः समं विहरन्ति स्म । [4]मालविकाग्निमित्रे विदिशाया उद्यानानां सार्थवाहप्रयुक्तानां दस्युबाधितव्यापारिकमार्गाणाञ्च वर्णनं विद्यते ।

रन्तिदेवशासनकेन्द्रं दशपुरं चर्मण्वत्यास्तटेऽवस्थितमाधुनिकमन्दसोराद-भिन्नमासीत्[5] । दशपुरवधूनां विभ्रमपूर्णदृष्टेः कविना मनोरमं वर्णनं कृतमस्ति–

"तामुत्तीर्य व्रज परिचितभ्रूलताविभ्रमाणां,
पक्ष्मोत्क्षेपादुपरिविलसत् कृष्णसारप्रभाणाम् ।
कुन्दक्षेपानुगमधुकरश्रीमुषामात्मबिम्बं,
पात्रीकुर्वन् दशपुरवधूनेत्रकौतूहलानाम् ॥

(पू० मे० 51)

अवन्तिराज्यस्य शिप्रातटवर्तिनी राजधानी उज्जयिनी महाकवेर्मनः-प्राणेषु समाहिता सर्वाधिकमहत्त्वपूर्णा विद्यते । अस्या वर्णनमैतिहासिकधार्मिकार्थिकदृष्टिभिः सर्वथा समीचीनमेवाऽस्ति । महाकविः महाकालनिकेतनमभिधानं प्रयुज्योज्जयिन्याः

---

1. सार्थवाहाः–डॉ० मोतीचन्द्र, पटना, 1953 पृ० 138 तथा लेखकस्य शोधग्रन्थे "कालिदास की कृतियों में भौगो० स्थलों का प्रत्यभिज्ञान", 1969 कानपुर, पृ० 215 ।
2. लेखकस्य शोधग्रन्थे, पृष्ठाङ्क 219 ।
3. पूर्वमेघदूते 25, 26 ।
4. मालविका० 5।10, अस्मात्पर्वं परिव्राजिकाकथनम् ।
5. Ancient India Dr. R. K. Mukerji, Allahabad, 1956. P. 223.

धार्मिकमहत्त्वं, विशालाभिधानेनास्याः आर्थिकोत्कर्षं, वासवदत्तोदयनप्रणयकथयैतिहासिकं महत्त्वञ्च प्रतिपादितवान्। यथा रघुवंशे महाकविर्वर्णयति—

"असौ महाकालनिकेतनस्य वसन्नदूरे किल चन्द्रमौलेः।
तमिस्रपक्षेऽपि सह प्रियाभिः ज्योत्स्नावतो निर्विशति प्रदोषान्॥"
(रघु॰ 6।34)

अनेन यूना सह पार्थिवेन रम्भोरु कच्चिन्मनसो रुचिस्ते।
सिप्रातरंगानिलकम्पितासु विहर्तुमुद्यानपरम्परासु॥
(रघु॰ 6।35)

मेघदूते महाकवेर्यक्षः मेघं प्रत्युज्जयिनीं वर्णयन् कथयति—

प्राप्यावन्तीनुदयनकथाकोविदग्रामवृद्धान्,
पूर्वोद्दिष्टामनुसर पुरीं श्रीविशालां विशालाम्।
स्वल्पीभूते सुचरितफले स्वर्गिणां गां गतानां,
शेषैः पुण्यैर्हृतमिव दिवः कान्तिमत्खण्डमेकम्॥
(पू॰ मे॰ 32)

कामिनीभिरुज्जयिन्यां शिप्रावातः प्रार्थनाचाटुकारः प्रियतम[1] इवानुभूयते। सुसमृद्धिस्तु तत्र विपणिषु एवमवलोक्यते शंखशुक्तिमणि विद्रुमैर्यत् समुद्रास्तोयमात्रावशेषाः[2] संलक्ष्यन्ते। महाकालमन्दिरे चण्डीश्वरस्य [3]सान्ध्यपूजा, चामरधारिणीनां वेश्यानां कटाक्षाश्च [4]वर्णिताः।+ □

---

1. पू॰ मेघदूते, 33. दीर्घीकुर्वन् पटुमदकलं कूजितं सारसानां......शिप्रावातः प्रियतम इव प्रार्थनाचाटुकारः।
2. पू॰ मे॰, 34–हारांस्तारांस्तरलगुटिकान्कोटिशः शंखशुक्तीः.....संलक्ष्यन्ते सलिलनिचयस्तोयमात्रावशेषा।
3. पू॰ मे॰ 36।
4. पू॰ मे॰ 37।

\+ आकाशवाण्याः लखनऊकेन्द्रेण लेखकस्य एतद्विषयकं संस्कृतवार्ता प्रतीता लेखकस्य शोधपत्रमिदं पुणेनगरेऽखिलभारतीयप्राच्यविद्यासम्मेलने (A. I. O. Conference) शोधसंगोष्ठयां प्रस्तुतमासीत् प्रकाशितञ्च सागरिकायाः 16/4, वि॰ स॰ 2034 वर्षीयाङ्क, पृ॰ 359–363।

# राष्ट्रियैकतासन्दर्भे कालिदासस्य मूल्याङ्कनम्

कविकुलचूड़ामणेः कालिदासस्य कान्तासम्मिता सुन्दरभावाभिव्यक्तिपूर्णा भारती भव्यराष्ट्रियैक्यचेतनया सांस्कृतिकैकता भावनया च सर्वथा समन्विता संलक्ष्यते सुधीभिः । महाकविना मनोहारिण्याः भारतभूमेरनन्यया शोभया नेत्रनिर्वाणं लब्ध्वाऽस्याः भौतिकाङ्गानां सचेतनरूपेण चारु चित्रणं कृत्वा राष्ट्रस्य अशेषमनीषिणः तां प्रत्युद्बोधिताः सद्भावभाविताश्च । भारतभूमेर्मानदण्ड इव किरीट इवापि च नगाधिराजः हिमालयो नाम 'देवतात्म'[1] रूपेणाऽभिमण्डितोऽस्ति; अनेक दाक्षिणात्या अपि श्रद्धान्विताः भवन्ति ।

विरह-व्यथितो यक्षो मेघदूते राम[2]गिरिमवलोक्य मेघं तस्यानुमतिं प्राप्तुं प्रार्थयति । महाकवेः रसिकता राष्ट्रियैक्यभावना च यथास्थानं स्वसाहित्यिकतायाः संस्पर्शं कुर्वत्यो रम्यराष्ट्रिय रूपाणामेषां माध्यमेन भारतभूमेर्नयनाभिरामां शोभां प्रस्तवीतः । कुत्रचित् पक्वाम्रफलैराच्छन्नः मेघखण्डमयः सानुमानाम्रकूटः कविना पृथिव्याः स्तन इवोत्प्रेक्षितः ।[3] क्वचिच्च सागर सलिलवसनावृतः सह्याद्रिस्तस्याः पृथुलनितम्ब इव प्रतीयते[4] । नीचगिरेः शिला[5]वेश्मभिः सोद्दामयौवनयुक्त्या विलासवार्तया कविः तात्कालिक लोक जीवनस्य सांस्कृतिक सामाजिक स्थितीः मूकस्वरेण उद्घोषितवान् । गंगा सरय्वोरिव नाना सरित्संगमाः कविना श्रेष्ठ तीर्थरूपेण सर्वेषां भारतीयानां मोक्षदायकाः परमपावनाश्च परिकल्पिताः । नाना प्राकृतिककतावर्धकरूपाणामपि मानवीयकरण माध्यमेन महाकविना चेतनवच्चित्रणं कृतम्, अनेन वय सर्वे भारतीय संस्कृतो संन्निहितां राष्ट्रव्यापिनीमेकतां भावात्मिकीं चेतनां चानुभवामः । एषु राष्ट्रिय प्राकृतिक स्थलेषु अखण्ड राष्ट्रस्य प्राचीन गौरव गाथानामनुभूतिरपि आधृता भवत्येव ।

---

1. कुमार० 1।1 अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः ।
2. पू० मे० 11 आपृच्छस्व प्रियसखममुं तुंगमालिंग्य शैलम् ।
3. पू० मे० छन्नोपान्तः⋯शेषविस्तारपाण्डुः ।
4. रघु० 4।52, 58 ।
5. पू० मे० 27 नीचैराख्यं गिरिमधिवसेस्तत्र विश्राम हेतोः ।

यद्यपि कालिदासयुगीनं सम्पूर्णं राष्ट्रं विभिन्नेषु लघुराज्येषु संविभक्त-मासीत्तथापि महाकविरस्मिन् विभक्तरूपेऽपि राष्ट्रे व्यापिन्या अखण्डतायाः तथैव भावात्मिकाया एकतायाश्च भव्यामुद्भावनां कृतवान्; याऽधोलिखितद्वयोः रूपयोरस्माकं पुरत आयाति—

(1) रघुवंशे चतुर्थसर्गे रघुदिग्विजय सन्दर्भे महाकविः रघुणा राष्ट्रस्य बाह्यसीमासु यौद्धिकाभियानं कारयित्वा दिग्विजयव्याजेन बृहत्तर भारतस्य आदर्श सीमाः निरधारयत् ।

(2) वैदर्भीन्दुमत्याः स्वयंवरव्याजेन रघुवंशे षष्ठसर्गेऽपि कविना देशस्य दूरस्थकोणानां राज्ञोऽपि विदर्भसदृशे राष्ट्रस्य हृदयवत्केन्द्रवर्ति राज्ये एकत्रितान् चित्रीकृत्य तेषां सांस्कृतिक्येकता (भावात्मकी एकताऽखण्डता वा) विवाहतुल्य सम्बन्धेन प्रतिपादिता । दृष्ट्याऽनया समीचीनमेव राष्ट्रीय कविरूपेण मूर्धन्य स्थाननिर्धारणं महाकवेः कालिदासस्य । स्व० डॉ० वासुदेवशरणाग्रवाल महोदस्य अपि इयमेव दृष्टिर्विद्यते विषयेऽस्मिन् ।[1]

कालिदासः उपर्युक्त सन्दर्भेषु वर्णितानां राज्यानामार्थिक, धार्मिक, राजनीतिक, सांस्कृतिक समृद्धि संलक्ष्य तैः समं पुलिन्द किरात वनेचर नागादि भारतीय जनाजातीनामप्युल्लेखं कृतवान् । संभवत इमे आदिमजातीय जनास्त-स्मिन् युगे लोकजीवने एकतामनुभूय राज्यानां प्रभुसत्तां स्वीकृत्य राष्ट्रिय समाजेन सह घनिष्ठरूपेण सम्बद्धाः आसन् । राष्ट्रिय सांस्कृतिकैकतायाः अभिनवाऽद्वितीया च दृष्टिरपीयं कवेः कालिदासस्य ।

महाकविः स्वर्गोपमस्य स्वदेशस्य यानि नगराण्युल्लिखितवान् तानि हि सप्राणतायाः समृद्धशालिन्याश्च भारतीय संस्कृतेः सर्वेषां पक्षाणां शोभनां स्थितिं प्रस्तुवन्ति । तस्योज्जयिनीविदिशा-मथुरा पुष्पपुरायोध्यादिनगर्यः धर्मार्थकाम पुरुषार्थैः परिपूर्णाः भौतिकाध्यात्मिक समृद्धीनामन्तिमां सीमामधिगतवत्यः आसन् । ताः धर्म, राजनीति, शासन कला वाणिज्य शिक्षादि विषयाणां समस्तराष्ट्रस्य केन्द्रीभूताः देशविदेशेषु गौरवान्विताः बभुवुः । कविकुलगुरुणा वर्णिताः ऋषिमुनी-नामाश्रमास्तीर्थं मन्दिरादीनि[2] च प्राचीन भारतराष्ट्रस्य आध्यात्मिक, सांस्कृतिको-त्कर्षपूर्णाया अखण्ड भावात्मकोपलब्धेश्च कीर्तिमयीं कथां कथयन्ति । सामान्यतः कविवर्णिताः सर्वे शान्तिमया आश्रमाः यज्ञ-तपः-शिक्षा संस्थान रूपेष्वपि समस्त-राष्ट्रस्य गृहस्थधर्मेभ्यः पराङ्मुखा नासन्निति सुव्यक्तमेव तस्य काव्यकृतिषु । राज्य संरक्षणं लब्ध्वापि ऐक्यभावनाविधायका इमे आश्रमाः स्वतंत्रवातावरणे श्वसन्तो-ऽन्तर्मुख्यां साधनायां विलीयन्ते स्म ।

---

1. 'भारत की मौलिक एकता' नाम्नि ग्रन्थे प्रथम संस्करणे, पृ० 154 ।
2. रघु० 2।67, 1।35, 48, 5।1, 4।20, 11।20-22 ।

कालिदासस्य काव्यकृतिषु वर्णितैर्विविध वायवीय जलीय स्थलीय मार्गैरपि तद्युगीनराष्ट्रव्यापिन्याः सांस्कृतिकैकतायाः भावात्मकराष्ट्रिय चेतनायाश्च सम्यक्परिचयः प्राप्यते। रघुदिग्विजयप्रसंगेन राष्ट्रस्यादर्शसीमा निर्धार्यते, येन वयं विदेशिसीमावर्तिराजेभ्यः राष्ट्रियसीमां रक्षितुं शक्नुमः। वाल्मीकीय रामायणाद्-गृहीतः पुष्पकविमानेन रामस्य प्रत्यागमन यात्रामार्गो[1] दक्षिणेनासेतुबन्धादुत्तरेणा-ऽयोध्यापर्यन्तं व्यापकत्वेन विस्तृतराष्ट्रभुवो वाण इव समवेतरूपेण समापन कृत्वा राष्ट्रियैकतां प्रत्युन्मुखीं कारयित्रीं चेतनामनुभावयति महाकविः कालिदासः। मेघमार्गस्तु[2] महाकवेः साहित्यिकप्रतिभायाः सुरुचियुता सुन्दर संस्पर्शेन भारतीया-खण्डवृष्टिसंस्थानस्योत्कृष्टं स्वरूपं प्रस्तौति; यद् राष्ट्रस्यार्थिकप्राकृतिक समृद्धयोः मूलाधाररूपेणातिमहत्वपूर्णवर्तते।

कविकुलगुरुः कालिदासः भारतराष्ट्रस्य विराट्स्वरूपेण सुपरिचितः आसीत्। अतः सोऽस्य वैविध्यपूर्णां एकताविधायिकां महोत्कर्षपूर्णां मनोहारिणीं तथ्यपूर्णां स्वाभाविकीञ्च वर्णानां कर्तुं समर्थोऽभूत्। क्वचिदिक्षुशालिक्षेत्रेषु गीतं गायन्तीनां ग्रामबालानाम्, कुत्रचिद् वन्यलताकुञ्जेषु विहाररतवनेचरवधूनां, क्वचिद् महाकाल[3] मन्दिरे नृत्यक्लान्तानां वारवनितानां, क्वचिद्रमणवसतिं रात्रौ गच्छन्तीनाऽभिसारिकाणां चित्रणं सम्पादयन् कविः लोकजीवनं जीवदेव सांस्कृति-कैकतापृष्ठभूमौ प्रास्तौत्। कलिंगानां प्राच्यसमुद्रतटस्य श्यामलं राजतालीवनं वा स्यात्; महेन्द्रगिरेर्नागवल्लीनां नारिकेलानामासवस्य चित्रं वा स्यात्; चन्दनै-लालतामयी मलयाद्रेरुपत्यका वा स्यात्; पश्चिमीय सीमान्तप्रदेशानां द्राक्षालताभिः कुंकुमकेशरस्य कविकुलगुरुः कमनीयां कथां वा कथयेत्; नगाधिराज हिमालयस्य भूर्जपत्राणां मर्मरध्वनेः कस्तूरीमृगाणां नाभिगन्धस्य, भागीरथ्याः सशीकरशीतल-समीरस्य वा गौरवगीतिकानि[4] वा गायेत् कालिदासः सर्वत्रैव राष्ट्रस्यैका समन्विता समृद्धिपूर्णा सांस्कृतिकरमणीयता चैव दरीदृश्यते। इत्थं प्रतिभाति यन्महाकविः कालिदासः मनः प्राणैरिवास्य राष्ट्रस्य भावात्मक एकता प्रतिपादने प्रतिकणं रेमे।

संक्षेपतः सुविचारितेनानेन तथ्येनैवमुपसंहर्तुं शक्यतेऽयं शोध लेखः यन्महाकवेः कालिदासस्य कृतिषु सांस्कृतिकैकतायाः सुदृढपृष्ठभूमौ राष्ट्रियतायाः अखण्डभव्यभावना विद्यते। अस्य राष्ट्रकवेः काव्य प्रतिपादिताः राष्ट्रियैकता

---

1. रघु० 13।1-14, 63।
2. द्रष्टव्यं लेखकस्य "कालिदास की कृतियों में भौगोलिक स्थलों का प्रत्यभिज्ञान" ग्रन्थः कर्णपुरम्, 1969, 'कवि कालिदासः' ग्रन्थः, 1983 कर्णपुरम्।
3. पू० मे० 32।
4. द्रष्टव्यम्—रघुवंश चतुर्थसर्गः (4।34-44; 68, रघु० 6।61-68)।

सांस्कृतिकोत्कर्षपूर्णा नवचेतनालोकादर्शाः लोकजीवनादिविविध[1] पक्षाश्चात्यन्त-मुपादेयाः महत्त्वपूर्णाश्च सन्ति ।

अतएव अस्माभिः कालिदासजयन्तीसमुत्सवे सहभाग्भिः स्वराष्ट्रस्य स्वर्णिमातीतस्य सत्यं मूल्याङ्कनम् कुर्वद्भिः नवामेकतामयीं चेतनां जागृतिञ्च सांस्कृतिकीमवधारणां चेति ध्यात्वा महाकवेः काव्यकृतीनां धार्मिकैतिहासिक-राजनीतिक भौगोलिक पुरातात्त्विकादिदृष्ट्या व्यापकमध्ययनं करणीयम् ।

साम्प्रतं स्वदेशे विघटनकारि धर्मभाषाजातिसम्प्रदायविष विषाक्तानां पृथकतावादिपुरुषाणां सन्मार्गनयनाय राष्ट्रियैकताप्रतिपादकाः कालिदासीयकृतय एव दिग्दर्शकाः भवितुमर्हन्ति[2] । इति शम् ।। □

---

1. द्रष्टव्यम् शोधप्रभा (संयुक्ताङ्कः) जुलाई-दिसम्बर, 1982 लेखकस्य शोध लेखः—"कालिदास के काव्य में लोक जीवन" पृ० 69-76 ।
2. एतद्विषयकशोधलेखः लेखकस्य 'संस्कृतविमर्शे' (राष्ट्रियसंस्कृत संस्थानशोध पत्रिकायां) 10।1, अंकेऽवलोकनीयः, पृ० 31-34, नवदिल्ली—27 ।
लेखकस्य संस्कृतवार्ताऽपि विषयेऽस्मिन् आकाशवाण्याः लखनऊकेन्द्रेण प्रसारिता ।

# आधुनिकसंस्कृतसाहित्ये राष्ट्रचिन्तनम्

समृद्धं संस्कृतसाहित्यं पुरातनकालादेव समाजराष्ट्रगतयथार्थदशा यथावत् चित्रीकृत्य चिन्तनाधारेण राष्ट्रजनान् सम्यङ्निदर्शयति। आधुनिकसंस्कृतसाहित्येऽपि पर्याप्तरूपेण राष्ट्रचिन्तनं प्राप्यते, यस्मिन् समाजस्य साम्प्रतिकसमस्यानां समयोचितसमाधानं, वर्तमानपरिस्थितीनां च सम्यगाकलनमपि संलक्ष्यते। अस्मिन् शोधपत्रे अर्वाचीनसंस्कृतसाहित्यान्तर्गतराष्ट्रचिन्तनविषयकविचारबिन्दवः संक्षेपेण मया प्रस्तूयन्ते, येऽधोलिखिताः सन्ति।

1. राष्ट्रस्य विराड्बाह्यस्वरूपचिन्तनम्।
2. राष्ट्रस्य अन्तःस्वरूपचिन्तनम्।
3. राष्ट्रियसमस्याचिन्तनम्।
4. परराष्ट्रगतराष्ट्रियसमस्याचिन्तनम्।
5. भाविभारतराष्ट्रस्य भविष्यचिन्तनम्।
6. विविधविषयकराष्ट्रिययथार्थचिन्तनम्।

अर्वाचीनसंस्कृतसाहित्यस्य महाकाव्यगीतिकाव्य-गद्यकाव्य-(उपन्यास)-नाट्यसाहित्य-चम्पूकाव्यादिषु सर्वासु विधासु व्यापकरूपेण राष्ट्रचिन्तनं वर्तते। अस्मिन् चिन्तने संस्कृतसाहित्यिकाराणां समयानुकूलजागरूकता, साहित्यिकदायित्वबोधता, वर्तमानकालिकयथार्थयुगदृष्टिश्च सर्वत्र विलसति।

(1) आधुनिकसंस्कृतसाहित्येऽखिलभारतराष्ट्रस्य बाह्यस्वरूप चिन्तनं चित्ताकर्षकमस्ति। अखण्डभारतभूमेर्विस्तारविषयकचिन्तनं चित्रणं च अर्वाचीनसंस्कृतसाहित्यस्य सामान्यतः सर्वविधासु स्वाभाविकमेव संलक्ष्यते। शिवराज्योदयमहाकाव्यकारः श्रीधरभास्करो वर्णेकरोऽस्य राष्ट्रस्य बाह्यस्वरूपस्य चित्रणं चमत्कारिरूपेण कृत्वा विशेषतः महाराष्ट्रान्तर्गतसह्याद्रेः पश्चिम रत्नाकररमणीयतायाश्च वर्णनेन राष्ट्रियगौरवं चिन्तयति। राष्ट्रस्य बाह्यस्वरूपचिन्तनं संस्कृतगीतिकाव्येष्वपि प्राप्यते।

राष्ट्रस्य ललितमनोहरवेशं डा० हरदत्तशर्मा एवं चित्रयति स्वकीयगीतकन्दलिकायाम्—

हिमकिरीटराजितशुभभालः । घृतशुविगंगायमुनामालः ।।
जलधिक्षालितचरणविशालः । कलितमनोहरवेशः ।
जयतु सदा मम देशः ।।[1] (गीतकन्दलिका, पृ० 2)

अर्वाचीन संस्कृतरूपकेष्वपि राष्ट्रस्य बाह्यस्वरूपस्य चारुचिन्तनं विविधरूपकरचनासु कृतम् । यथास्मदीये 'वसुमित्रविजये'[1] विशालराष्ट्रभारती एवं विस्तारमयी विचित्रिता वर्तते—

आसिंधुशैलेन्द्रसुशोभिते हे भागीरथीनीरतरंगिते हे ।
काशीपुरीपुष्पपुरैश्च रम्यां त्वां भारतीं भक्तिप्रदां भजामि ।।3।।

स्वराष्ट्रस्य बाह्यरूपनिर्धारणे संस्कृतरचनाकारस्य उत्तुंगशृङ्गमयवनाच्छन्नपर्वता विशालसलिलराशिना तीव्रप्रवाहिता नद्यः वैभवसम्पन्ना विविधभूप्रदेशाश्चापि चित्रिताः । पशुपालनकृषिवाणिज्यक्षेत्रे राष्ट्रस्यार्थिकस्रोतःस्वरूपिण्यो नर्मदादिनद्यः संस्कृतकविभिः सुचित्रिताः सन्ति । श्रीरेवाभद्रपीठकाव्ये सनातनकविरेखाप्रसादद्विवेदी रेवामेवं चिन्तयति—

"त्वत्तीरे हलिनोऽपि सन्ति विमला धर्मप्रिया भारते ।"[2]
वाणिज्यं करवाणि चेत् तव दृशोः पात्रीभवन्नप्यहं,
.................................. त्वां कामधेनुं वृणे ।
(श्रीरेवाप्रसादरचितरेवाभद्रपीठकाव्यम् 112)

(2) भारतराष्ट्रस्यान्तःस्वरूपचिन्तनमर्वाचीनसंस्कृतरचनाकारैः स्वकीयविविधासु रचनासु कृतमेव, यस्मिन् महाराष्ट्रस्यान्तरात्मा वैशिष्ट्यपूर्णसंस्कृतिनिरूपणेन समुपस्थापितोऽस्ति अस्माकं पुरतः । पुरातनसाहित्यिकसांस्कृतिकपृष्ठभूमौ आधुनिकसंस्कृतसाहित्य[3]कारैरपि धर्मदर्शनकलाविज्ञानपुरुषार्थसंस्काराश्रमवर्णव्यवस्थादिनानासांस्कृतिकतत्त्वचिन्तनेन राष्ट्रस्य अन्तःस्वरूपनिरूपणं कृतमस्ति । सामान्यतः सर्वास्वपि महाकाव्यगद्यकाव्यरूपकचम्पूकाव्यकृतिषु राष्ट्रस्य अद्वितीयाध्यात्मिकताशावादितार्मिकतापुनर्जन्मवादितासंस्कारपुरुषार्थपरायणता, आस्तिकतादिदिव्यसांस्कृतिकविचारान् समावेश्य अस्यान्तःस्वरूपः प्रकटीकृतमस्ति वर्तमानसंस्कृतरचनाकारैः । राष्ट्रियस्वाभिमानपूर्णसांस्कृतिकगौरवमभिलक्ष्य

---

1. यज्ञाश्वरक्षणम् पारिजात् 6/6, 1988 ई०, पृ० 19 (पुष्पपुरीयप्रासादे संगीतमयगीतध्वनिः ।
2. श्रीरेवाभद्रपीठकाव्यम् 102 (सागरिका 25/3 अंके प्रकाशितम्) ।
3. भारतस्य सांस्कृतिकनिधिः—डॉ० रामजी उपाध्यायः सागरिका संपादकः, सागर (म० प्र०) प्रथमसंस्करणम् ।

तारस्वरेण गायति नवगीतकारो-डा० चन्द्रभानु त्रिपाठी–

अणुरेष भारतीयः । सर्वोऽपि देशभूमेः कण एष भारतीयः ।
धर्माचरणपरो भव हे वीरराष्ट्रसेवी, गर्वेण वद सदा त्वं पुत्रोऽस्मि भारतीयः ।
अणुरेषु भारतीयः । (मंगल्या, 'अणुरेष भारतीयः' प्रयागं, पृ० 6)

गायति गीतकारो हरदत्तशर्मापि राष्ट्रस्यान्तः स्वरूपसौन्दर्यम् निम्नांकित-रचनायाम्–

महासंकटे कण्टके वा भ्रमामः, कदाचिन्न स्वत्वं निजं विस्मरामः ।
इयं धारणा सर्वदा धारणीया वयं भारतीया वयं भारतीयाः ॥
(गीतकन्दलिका, पृ० 23–24)

राष्ट्रस्यान्तःस्वरूपरक्षणाय संस्कृतिसंरक्षणमेवात्यन्तमहत्त्वपूर्णं कर्त्तव्यमस्माकमिति चित्रयति वैद्यः रामस्वरूपशास्त्री–.

देशस्य शत्रून् निष्कास्य वाङ्गलान् स्वतन्त्रतन्त्रं च करोति राष्ट्रम् ।
भूयोऽपि रक्षाकरणे समर्था, सा संस्कृतिः रक्षतु भारतं नः ॥
(पारिजातम्–सा संस्कृतिः रक्षतु भारत नः, 6/2 अंकः 1989 ई०, पृ० 13)

शोचनीयविषयोऽयं, यदस्माकं युवासन्ततिः स्वराष्ट्रस्यान्तःस्वरूपं विस्मृत्य स्वकीयपुरातनसांस्कृतिकसाहित्यैतिहासिकगौरवमपि नानुभवति । रामलीला-प्रहसने स्मारयति व्यंग्येन डा० कृष्णलालः राष्ट्रस्य नवयुवकान्–

"उभौ-साधु, साधु स्मृतमिदानीम् ।
अस्यां रामलीलाव्यवस्थायां रामकथेव विस्मृता ।

एवमेवापरैका व्यंग्यात्मकरूपकरचनावलोकनीया, यस्यां राष्ट्रियसामान्य-साहित्यिकज्ञानं विचिन्तितं रचनाकारेण विद्यार्थियुवकानां 'रामायणमाहात्म्यम्' इति नाम्नि रूपके–

"द्वितीयः–रामायणं कः अलिखत्[1] । तृतीयः–मन्ये त्वमेव न जानासि । कः न जानाति एतत् महाकविः कालिदासोऽलिखत् द्वितीयः-मूढ ! कालिदासः कथम् ? विश्वामित्रोऽलिखत् कालिदासस्तु महाभारतम् अलिखत्[2] ।

स्वकीयराष्ट्रस्य प्रकृतिचित्रणे, रम्यषड्ऋतूनां वर्णने च यत्रार्वाचीन-संस्कृतरचनाकारस्य बाह्यस्वरूपचिन्तनं प्रकटितं, तत्रैव राष्ट्रजनानां नानन्तरिकसद्गुणानां सुन्दरमुद्घाटनं कृत्वा राष्ट्रस्यान्तः स्वरूपमपि सम्यग्रूपेण संदर्शितम् ।

1. चमत्कारः, दिल्ली, 1985, रामलीला-प्रहसनम्, पृ० 26 ।
2. अर्घ्यम्, पुदुच्चेरी, प्रथम संस्करणम् पृ० 7 (रामायणमाहात्म्यम् रूपकम्)

यथा—श्रमपरायणकृषकजनाः कथं ग्रामेषु जीवनं यापयन्ति इति चिन्तयति श्रीनारायणशुक्लोऽस्मिन् पद्ये—

"कृषौ रताः कर्षकरा सभृत्या लुनन्ति शस्यानि मृदं कृषन्ति।
चयन्ति घासान् मृदुगायनास्ते गदन्ति हास्यानि मिथः सुखानि॥"

(उर्मिलीयचरितम्)

विकासपथगामिराष्ट्रयजीवने श्रमस्योपादेयतां प्रतिपादयन् श्रीधरभास्करः वर्णेकरः एवं विचिन्तयति स्वकीयश्रमगीतायाम्—

"आलस्याभिभवद् यानि न भजन्ते परिश्रमम।
तानि शीघ्रं विनश्यन्ति राष्ट्राणि सुमहान्त्यपि॥
अग्रेसराणि राष्ट्राणि सन्ति तान्येवभूतले।
योगक्षेमकरो यत्र सेव्यते सततं श्रमः॥"

श्रमशीलराष्ट्रियनारीणामादर्शभूता सीतापि चित्रिता सनातनकविना[2] सीताचरिते।

स्वयमकृत कटं पटं घटं सा, स्वयमसृजल्लघुपुत्तलांश्च साध्वी।
दिनकरकुलवर्धनौ ततस्तौ, शिशुवयसः स्वकृतिव्रतान्यशिक्षत॥

(सीताचरिते 6।36)

राष्ट्रियजीवनोत्कर्षाय सुकविर्विष्णुदत्तशुक्लः श्रममाहात्म्य सुविचिन्त्य प्रतिपादयति-"श्रमेण सिद्ध्यन्ति कार्याणि लोके श्रमेणैव लोकोत्तरत्वं सुलभ्यम्।
श्रमेणैव चोत्कर्षतां यान्ति लोकाः श्रमं साधयध्वं श्रमं साधयध्वम्॥

(गंगासागरीयम् 5।28)

स सीतां श्रमपराणामेवं प्रस्तौति कलात्मकपृष्ठभूमौ—

न केवलं समस्तार्वाचीनसंस्कृतमहा[3]काव्येष्वेव श्रममयकर्मवादस्य चिन्तनमपितु आधुनिकचम्पूकाव्येष्वपि श्रममयकर्मपरायणजीवनं सुविचारितमस्ति। डा०

---

1. श्रमगीता, डा० श्रीधरभास्करवर्णेकरः, नागपुरम् प्रथमसं०, पृ० 9।
2. सीताचरिते 6/34 किसलयशिशुसोदरेण सीता, कलमभुवः स्वकरेण मृद्नन्ती सा। कठिनकरकृतां स्वभूमिसेवां कृषकजनस्य सुदूरमत्यशेत।
3. बोधिसत्त्वचरितम्—डा० सत्यव्रतशास्त्री
ध्येयं समस्तजगतः श्रेयस्करं कुरुत कर्मगुणाभिरामम्।' बोधि० 12।13
नेहरूचरितम् पं० ब्रह्मानन्दशुक्लः खुर्जा (बुलन्दशहर) प्रथमसंस्करणम्
कर्मप्रधानोऽखिलजीवलोको यो यादृशं कर्म करोति जीवः।
सर्वेश्वरस्तादृशमेव तस्मै फलं ददाति प्रियमप्रियं वा॥ (नेहरूचरितम्)

रुद्रदेवत्रिपाठी स्वकीये 'श्रीचतुर्वेदचरितचम्पूकाव्ये' आत्मचिन्तनमस्मिन् विषये एवं प्रकटयति—

"श्रेयः कर्मसु योजितं नहि मनः कुत्रापि विभ्राम्यति ।"

निरलसतया तद्वन्नित्यं फलाच्छुभकर्मणाम् उदयमयते भाग्यं नृणां सदाशयशालिनाम् । (श्रीचतुर्वेदचरितचम्पू, दिल्ली, प्रथम सं० पृ० 76, 77)

यदि राष्ट्रे श्रमस्य कर्मणो वोपेक्षा बुद्धिजीविशान्तिदम्भान्नागरिकैः क्रियते तर्हि तस्य राष्ट्रस्य तेषां नागरिकाणां कदापि कल्याणं न भवति । ज्ञानदर्पान्धानां कर्महीनानामेतादृशानां नराणां नयनोन्मीलनाय डा० हरिनारायणदीक्षितो निर्दिशति गद्यकृतो गोपालबन्धौ—

"त्वदीयं तद्ज्ञानं तु केवलमुदरदरीपूरणार्थमेव, सद्भारतभूतं जातमस्ति ।"

ज्ञानं भारः क्रियां विना । शास्त्राण्यधीत्यापि
भवन्ति मूर्खा, यस्तु क्रियावान्
पुरुषः स 'विद्वान्'—तदैव फलति ज्ञानं
तद्रूपा क्रिया यदा इत्येता वाणी विरराम ।

(डा० हरिनारायणदीक्षितः गोपालबन्धुः दिल्ली 1988, पृ० 52)

राष्ट्रीयशिक्षानीतिरपि सुविचिन्तिताऽर्वाचीनसंस्कृतरचनाकारैर्यस्यां सविकारो गुरुशिष्यसम्बन्धः, शिक्षास्तरे ह्रासः दूषितपरीक्षाप्रणाली, स्वार्थमनदूषितप्रबन्धतन्त्रादि बहवो विषया विचारिताः । अस्मदीये गुरुमाहात्म्यशतके वर्तमानविकृतशिक्षापद्धतिरेवं विचिन्तिताऽधो लिखितपद्येषु—

शिक्षकरूपे गुरवः साम्प्रतन्तु सन्ति वेतनभोगिनः ।
दासवृत्त्या समाजे लभन्ते मानं न तादृशम् ॥98॥
शिष्याः परीक्षायान्तु प्रयुञ्जन्तेऽनुचितसाधनानि ।
शिक्षकाः सापमानं च, सहन्ते प्रताडनां तेषाम् ॥99॥
शिक्षणसंस्थाधिकाः प्रायः कुप्रबन्धकास्तासु सन्ति ।
बहवोऽध्यापकास्तत्र, शोष्यन्ते सर्वदा बहुधा ॥

(गुरुमाहात्म्यशतकम् 100 डा० कैलाशनाथद्विवेदी, कानपुर)

सुकविः सुधाकरशुक्लो 'गान्धीसौगन्धिके' महाकाव्ये विकारमयगुरुशिष्यसम्बन्धेन सह दूषितपरीक्षाप्रणालीमपि चिन्तयति । आन्ध्रप्रदेशीयाधुनिकसंस्कृतकविमल्लादि रामचन्द्रः शास्त्री एवं चिन्तयति विषयेऽस्मिन्—

चरित्रहीना ये छात्रा मन्दबुद्धिश्च देशिकः ।
द्वावेव शत्रू लोकेऽस्मिन् निश्चयेन हि मनीषिणाम् ॥



(संस्कृतभारती, स्वम्, पृ० 108)

डा० रामजी उपाध्यायः राष्ट्रे वरिष्ठानुमोदितादर्शशिक्षाविषयान् एव स्वीकरोति सत्यहरिश्चन्द्रोदये (पृ० 13)। पं० रामकुलेरमालवीयः शिक्षायाः (विद्यायाः) महत्त्वं राष्ट्रोन्नतये एवं विचारयति–

श्रियो हरेर्भिन्नमपूर्वधाम प्रह्लादनं ज्योतिरनैन्दवं तत् ।
अलौकिकं कारणमष्टसिद्धेरयौवनाख्यं जननं मदस्य ।।
(मालवीयकाव्ये 4।32)

विदेशिभाषांग्लीस्थाने महाकविमालवीयः राष्ट्रोन्नतये राष्ट्रभाषाहिन्द्या उपयोगिता एवं प्रतिपादयति–

न क्वापि हिन्द्या न च संस्कृतस्यं, कोऽपि प्रसारेऽभिरुचिं विधत्ते ।
एतस्य भाषाद्वितयस्य लोके, न मान्यता दीयत एव कैश्चित् ।।
(मालवीयमहाकाव्ये 14।28)

डा० रुद्रदेवत्रिपाठी राष्ट्रीयंशिक्षानीतिविषये एवं चिन्तयति शिष्यैः समादरपदं गुरवो लभन्ते। अध्यापनस्य मूलं फलं शिष्यमण्डलं भवति। गुरोः सकलस्य परिश्रमस्य परिणतिः शिष्ये प्रतिफलति[1]।' नवगीतकरो डा० हरदत्त[2]शर्मा दूषितराष्ट्रीयशिक्षामित्थं विचारयति–

शिक्षा सञ्जाता व्यापारः। द्रव्यार्जनहेतुसुखाधारः ।।
धनलिप्सूनामुद्योगगृहाः प्रचलन्ति सुखं शुचिभवने ते। किं किं
लक्षाधिपशोषणदक्षकराः। शिक्षालयचालनकर्मपराः ।।
धनमत्तनिरक्षरमूढजनैः स्वामित्वमकारि सुभवने ते। किं किं...
किं किं न भवति नहि किं घटते हा देवि सरस्वति भवने ते । किं किं
आन्दोलनमनशनमग्नियुतम् । त्रोटनहिंसास्फोटनमनिशम् ।।
उग्रत्वमुपद्रव एव सदा नहि शान्तिरिदानीं भवने ते ! किं किं ··
विषमा हि परीक्षा दुष्टप्रथाः। दारुणभयदुःखकरालकथा ।।
अनुकरणं हननं भयकरणं च चलन्ति परीक्षाभवने ते। किं किं···

1. श्रीचतुर्वेदीचरितचम्पू, लालबहादुरशास्त्री संस्कृतविद्यापीठम्, नई दिल्ली प्रकाशनम् प्रथम सं० 79-80
2. गीतकन्दलिका, श्रीगंगानाथझा केन्द्रीयसंस्कृतविद्यापीठम्. प्रयागप्रकाशनम्, 1983 ईस्वीयं प्रथमसंस्करणत्, पृ० 47-49







अनुनयमनुशासनहीनत्वम् । गुरुजनपरवशतादीनत्वम् ॥
यष्टिसुमुष्टिभिरायुधनिकरैर्दलयोधनभट्टा तु भवने ते । किं किं न भवति[1] ते भवने ते ।

आधुनिकसंस्कृतसाहित्ये विद्यमानविविधराष्ट्रीयसमस्यानां (शैक्षिकसामाजिकराजनैतिकार्थिकादिविषयाणामपि) चिन्तनं वर्तते । आन्ध्रसंस्कृतकविर्मल्लादि रामचन्द्रशास्त्री राष्ट्रविकासे संस्कृतभारतीं सहायिकां स्वीकरोति–

प्रमोददा व्यक्तिविकासदायिनी, प्रज्ञानदा भारतवैभवास्पदम् ।
समस्तकल्याणगुणप्रदा सुधा, भवेत्सदा संस्कृतदिव्यभारती ॥
(संस्कृतभारती, पृ० 59)

राष्ट्रेऽस्माकं समस्तसामाजिकसम्बन्धानां केन्द्रीभूता नारी सुविचारिताऽर्वाचीनसंस्कृतरचनाकारैः स्वकृतिषु । महाराष्ट्रकविः श्रीविश्वनाथकेशवछत्रे राष्ट्रोन्नतये स्वदेशकार्याय समाजे त्यागपरायणं नारीसहयोगमत्यावश्यकं मनुते । स एवं चिन्तयति स्वकीये सुभाषचरिते–

व्याख्यानतोऽप्याचरितः प्रचारः स्थले स्थले स्त्रीभिरुदारधीभिः ।
स्फूर्त्यावितार्याभरणानि तोषात्, स्वदेशकार्याय समर्पितानि ॥

समाजे शक्तिस्वरूपा दुर्गेव दृढा नारी सम्पूर्णराष्ट्रस्य प्रेरणादायिनीति प्रतिपादयति सुकविः सुबोधचन्द्रपन्तः 'झांसीश्वरीचरिते' महाकाव्ये–

राज्ञ्या भस्माल्यपतदणुभिर्नीलरमैरम्बराय,
शीघ्रं हृद्यं वितरितवती नीलवर्णाम्बरत्वम् ।
संकल्पानां निश्चयमकरोत्साहसैकव्रताना-
मुद्दीप्राभंध्वज इव सदा प्रेरणादायिनी सा ॥
(झांसीश्वरीचरिते 22।17 1979 ई० प्रयागसंस्करणम्)

स्वकीयोर्वशीनाटिकायामादर्शनारीं सौन्दर्यप्रतिमूर्ति चित्रयति चन्द्रभानुत्रिपाठी–

गतं शैववं क्रमशो जाताहं कमनीयकिशोरी,
तन्वी मञ्जुमुखी श्यामा मृगनयना चन्द्रचकोरी ।
रूपोद्यानलतानुरागललिता शोभाप्रवालोद्भवा
कारुण्योदकसेक पोषिततनुस्तारुण्यमूलाश्रिता ।

---

1. तुलनीयं गुरुमाहात्म्यशतकम् डा० कैलाशनाथद्विवेदी, कानपुर, 1981 पृ० 43-44 श्लोक सं० 98, 99, 100, 101, 102, तथा 103,

कामोल्लासवती सुदारुकुसुमा माधुर्यराजत्फला,
प्रांशोशालतरोरियं मृगयते शाखाकरालम्बनम् ।।

(उर्वशी पृ० 23, 42)

राष्ट्रे सम्पूर्णसमाजे नारीणां दलितजीवनमपि भृशं चिन्तनीयम् । डा० दीक्षित पुष्पा समासोक्त्या नारी जीवनस्य विडम्बनां चिन्तयति–

"भूतले परिमृतलतिका यः स्वयं समुपस्कोति ।
स द्रुमोऽपि तदीयहृदयं निर्दयं शूला करोति ।

(दुर्वा, किं करोमि, अंक 15, 1989 भोपाल)

राष्ट्रे दूषितसमाजिकप्रथाप्रपीडितनारीणां दुरवस्थामभिलक्ष्य युवाकथाकारः कविश्च केशवचन्द्रदासः विषण्णां वृन्दामेवं चिन्तयति 'पावकः' इतिशीर्षककथायाम्–

वृन्दाया चिन्ताकल्पे देवदासता एकाकुलीना कलापरम्परा । एतदर्थं नाना भर्त्सनां श्रुतवती, अपवादवचनानि च, अकुण्ठितभावेन अंगीकृतवती अन्ततः सर्वस्वं हारितवती ।" (पावकः दूर्वा 14 अंक 1989, पृ० 51-52)

समाजे यौतुकपिशाचपीडिता युवत्योऽर्वाचीनसंस्कृतकवीन् भृशं पीडयन्ति । चिन्ताकुलास्ते भारतीयनारीं यथार्थधरातले पश्यन्त स्वकीयसंशोधनपरायणस्वरमेव मुखरयन्ति श्री ओमप्रकाशठाकुरो "भारतीयनारी" तिशीर्षककवितायां सत्यमेव कथयति–

"भर्ता पश्यति धनसंभारम् श्वश्रूरालोकयते स्वर्गम् ।"

(दूर्वा चतुर्दशोऽङ्क 1989, पृ० 18)

आचार्य हीरालालपाण्डेयो राष्ट्रियसमस्यामिमामेवं चिन्तयति स्वकीये "युतकयाचने" रूपके "धनिकोऽपि दरिद्रः स्यात् यो भवेत् कान्यका पिताः ।।14।।" (श्रीगंगानाथझा केन्द्रीयसंस्कृतविद्यापीठ शोधपत्रिका, अंक 41 वर्ष 1988 ई० परिशिष्टे) पं० चन्द्रभानुत्रिपाठी एतत्सम्बन्धिजनान् सम्यगेव सम्बोधयति स्वकीयवधूरमूल्यारचनायाम् ।

हे नवयुवकजननि ! तव पुत्रो बाहुबलं नाश्रयते,
वधूरमूल्यां बुद्ध्वा भवती सुतमूल्यं कामयते ।
सम्प्रतिसुतसम्बधेऽन्विस्यति भक्ती यौतुकमात्रम्,
प्रतिगेहं गत्वा सम्पश्यति ललितं कन्यागात्रम् ।
हे नवयुवक ! शृणोतु किमर्थं बाहुबलं नाश्रयतें,
कन्या युवतिरमूल्या पुनरपि निजमूल्यं कामयते ।।

(मंगल्या प्रयागम् 1998, पृ० 32)

युवागीतकारो डा० हरदत्तशर्मापि राष्ट्रियसमस्यामिमामेवं चिन्तयति–

"पिताहं पञ्चपुत्रीणां यदा वरशोधने यातः।
न रूप्यकलक्षसंख्याकं विना वार्ताऽस्ति भो भ्रातः॥
प्रशीतकदूरदर्शनवीजनद्रुतयाननवनव्यैः।
भरतु भवनं हि तेनोक्तं समैरधुनातनैर्द्रव्यैः॥
अयि निर्दयनिर्धनते ब्रूहि कदा किं किं नो कृतं त्वया
किं किं नो कृतं त्वया।"

(गीतकन्दलिका, प्रयागम्, पृ० 33)

रूपककारो डा० कृष्णलालोऽपि कुप्रथामिमां व्यंग्येन विचिन्तयति "आश्चर्यमिति" नाम्नि रूपके–

"किं भवान् जानाति कियद् यौतुकमिष्यते वरपक्षीयैः!"
"किं कन्ये अविवाहिते स्थास्यत"!

(चमत्कारः दिल्ली प्रथमसं०, पृ० 63)

अर्थं विना अनर्थकारिणी अतिशोचनीयावस्थाऽस्मिन् राष्ट्रे। अर्थाभावेऽनेकापराधा वर्धन्ते समाजेऽहर्निशम्। चौरवृत्तिचौर्यप्रणत्वमूल्यसंवृद्धिपदार्थमिश्रण-महार्घतामुद्रास्फीतिमदिरापानभिक्षावृत्तिदस्युकाराप्रवञ्चनापहरणप्रभृत्यनेकार्थिकापराधान् प्रति व्याकुला वर्तमानसंस्कृतरचनाकाराः चिन्तपूर्णरचनाः प्रायः प्रस्तुवन्ति। यथा गीतकन्दलिकाकारः कथयति–

"श्रमजीवी जीविकाविहीनः। विविधाभावैर्व्यथितो दीनः।
चौरवृत्तिमवलम्ब्य वाणिजैरर्जितमधिकमकाले।"

(गीतकन्दलिका, पृ० 45-46)

"सुदीर्घा दृश्यते पंक्तिर्विपणिषु च सर्वकारस्य।
शख्या मादृशा भ्रष्टत्वचौर्यासत् प्रसारस्य॥
चणकगोधूमतण्डुलशर्कराघृतदुग्ध-भक्ष्याणाम्।
अभावैः कृत्रिमैः खिन्नाः सततमुपभोग्यपण्यानाम्॥
अयि निर्दयनिर्धनते ·······

(गीतकन्दलिका, पृ० 34)

सुरसासदृशोपचीयमानमूल्यसंवृद्धिजन्यमहार्घता संपीडितः संस्कृतरचनाकारः चिन्ताकुलः कथयति–

प्रभूता मूल्यसंवृद्धिर्नभश्चुम्बति महार्घत्वम् ।
दिनैर्लघुकैश्चिदल्पं वेतनं मे याति शून्यत्वम् ॥
ऋणं संगृह्य भासन्ते कथञ्चिद् यापिता दिवसाः ।
अभावैर्ग्रस्थमाना एव मे कौटुम्बिका विवशाः ॥
अयि निर्दय निर्धनते..............
स्वपत्न्या शाटिका क्रेया...............
विनामुद्रास्तु लज्जायै मुधा हट्टेषु संचारः ।

(गीतकन्दलिका, पृ० 33)

आर्थिकोन्मादवशादद्य आपणेसु सर्वत्र शुद्धपदार्थानामभावो दरीदृश्यते । मिश्रणसंस्कृतिमवलोक्य दुश्चिन्ताकुलः परमानन्दशास्त्री सत्यमेव कथयति—

"क्रीडती मुक्तं मिश्रसंस्कृतिर्हालाहलायते माधुर्यम्,
शुद्धं क्वापि पदं न पदार्थः प्रतिहट्टं दृष्टं चातुर्यम् ।
नगरे नगरे ग्रामे ग्रामे मिश्रितपण्यानां प्राचुर्यम्,
शुद्धं क्वापि पदं न पदार्थः प्रतिहट्टं दृष्टं चातुर्यम् ।

(दूर्वा 14 अंकं, पृ० 3०)

राष्ट्रे युवकानामुद्योगराहित्यं साहित्यकारैर्नोपेक्षितम् । साक्षात्काररूपकेषु यादृशो भ्रष्टाचारोऽधिकारिभिः प्रत्याशिनं[1] प्रति प्रायशः क्रियते तादृशं व्यंग्यमय-चित्रणमाधुनिकसंस्कृतरूपककारैरपि कृतमेवमेव । साक्षात्कारेऽयोग्यप्रत्याशिनश्चयने पक्षपातपूर्णभ्रष्टाचारस्य चित्रणं डा० हरदत्तशर्मणा 'त्रिपथगे' तिकृतौ साक्षात्का-रीयरूपके साधु कृतमस्ति ।

राष्ट्रे आर्थिकसमस्यामूलका अनेकाः सामाजिकसमस्या अपि सुविचारिताः संस्कृतरचनाकारैः । अर्थहीनतया विवशा बुभुक्षाकुला आबालवृद्धजनाः चौर्यापहरण-

---

1. प्रत्याशिनां चयने जातिवादमयारक्षणविधानमपि विडम्बनापूर्णमस्ति सुयोग्यजनाअपि तिररिक्रयन्तेऽनया विषममिश्रितसंस्कृत्य । चिन्तांकुलो भूत्वा पं० परमानन्दनशास्त्री कथयति—
प्रतियोगितोच्चकोटिगुणपरोऽप्यारक्षणतृणवयनमिश्रितः ॥
राष्ट्रास्मिता सुरसरिद्वाहः क्षेत्रजातिदलमलैर्मिश्रितः ॥
नगरे नगरे ग्रामे ग्रामे मिश्रितपण्यानां प्राचुर्यम् ।
शुद्धं क्वापि पदं न पदार्थः प्रतिहट्ट दृष्टं चातुर्यम् ।
(दूर्वा, पृ० 30 अंक 14

दस्युभिक्षादिनिन्द्यकर्माणि समाचरन्ति समाजे । युवागीतकारो हरदत्तशर्मा चिन्ताकुलो भूत्वा कथयति–

उदरभरणहेतोरविरामम् । भिक्षाटननिरतं लघुरामम् ।
कुण्ठितकुपथगामिसंत्रस्तः बालगणो ह्यपराधैर्ग्रस्तः ।।
स्वसमाजं दर्शयत्यमर्षम् देशे देशे सालकवर्षम् ।।

(गीतकन्दलिका, पृ० 28)

सामाजिककुप्रथासु युवकानां मदिरापानमपि चिन्तितं संस्कृतरचनाकारैः । अनर्थकारिणीं मदिरां त्यक्तुमुद्बोधयति रूपककारः कृष्णलालः 'आश्चर्यमिति' नामरूपके–

"त्यजतामेषा मदिरा राक्षसी । अनया मदिरया सर्वस्वमस्माकमपहृतम् ।"

(पंचालीकथनम् आश्चर्यरूपके चमत्कारः) पृ० 63

राष्ट्रे विषमताजनको जातिवादो वर्गवादो वापि विचिन्तितोऽर्वाचीनसंस्कृतरचनाकारैः सुकविः सुधाकरशुक्लः कथयति अस्मिन् विषये–

"इत्यप्यत्यहितदिशो दर्शनङ्कारयेस्तान्,
स्वातंत्र्यादो विदधतु न यद् दुर्धियम्वर्गवादाः ।
जातिस्तावन्न किमलमिदम्भारतीयत्वमेव,
व्युच्छेदाय व्यसनविषमाऽनेकता नोद्भवाय ।।

(देवदूतम् 68)

राष्ट्रे सर्वत्रातंकवादस्य हिंसायाश्च ताण्डवं चिन्ताजनकमस्ति । अर्वाचीनसंस्कृतरचनाकारा चिन्तनपरायणाः सन्तिविषयेऽस्मिन् । अस्मदीये 'वसुमित्रविजयरूपके' ऽवधारणास्तीयम्–

हिंसाप्रचण्डा जनप्राणहन्त्री, संगीतशून्यात्रुटतारतंत्री ।
गंत्री गता गर्त्तमये कुमार्गे सञ्चालयेमां गतिमाशु देवि ।।
आतंकवादं जननाशकं त्वं धर्मान्धतां तीव्रविषञ्च रुन्धि ।
हिंसानलं देवि विनाशने तु तेजोमयी तत्परता तवैव ।।

(पारिजातम् 6।6, 1988, पृ० 21)

समाजे सर्वत्र हिंसामूले तु मानवताघातकविनाशकार्यस्त्रशस्त्राणामुत्पादनं वैज्ञानिकाविष्कारैरत्यन्तं चिन्ताजनकं वर्तते । विषयेऽस्मिन् विचिन्तयति गीतकन्दलिकाकारः रेवमेव–

बमविषाक्तविस्फोटकद्रव्यैः । अणुशक्त्याविष्करणैर्नव्यैः ।
प्रलयंकरमभवद् विज्ञानम् । मानवते कुरु नवमभियानम् ।।



(गीतकन्दलिका, पृ० 13)

राष्ट्रे न केवलं सामाजिकार्थिकसांस्कृतिकक्षेत्रेष्ववमूल्यमपितु राजनैतिक-प्राशासनिकक्षेत्रयोर्ह्रासोऽपि चिन्ताजनकोऽस्ति। राष्ट्रनेतॄणां प्रशासकानाञ्च चारित्रिकापकर्षमेवं चिन्तयति सुकविः सुधाकरशुक्लः स्वकीये देवदूतकाव्ये–

नेतारश्चेदपधनधियो निष्क्रियोत्कोचजीवाः,
मिष्टावाचः कपटपटवो वञ्चकाः सञ्चिताशाः।
नाशाय स्युः स्वभुवि सुलभाः पेशलाः श्वेतवेषैः,
निःसिद्धान्ताः कथय न कथन्नङ्क्ष्यति त्वेष देशः॥

अपि च–नेता पुञ्जीकृतधनपशुः शासकश्चाधिकारी,
त्युद्योगेशोवणिगपि जनो हन्त कृष्णायणश्रीः।
खेलन्त्येतेऽप्यरिबलखलवद्दस्युदुर्वृत्तयो धिङ्,
निःस्वप्राणैर्जनमिह दहेत् किन्न दारिद्र्यमेतत्।
(देवदूतम् 69–70)

महाराष्ट्रकविः श्रीविश्वनाथकेशवछत्रेऽपि नेतॄणां कर्त्तव्यहीनतां भृशं चिन्तयति–

नेतारो न दिशन्ति मार्गमुचितं नः
केचिदित्याक्षिपेन् कार्यं समारभ्यताम्। (सुभाषचरितम् 6/5)

पं० चन्द्रभानुत्रिपाठी नेतॄणामाचारणमेवं चिन्तयति मंगल्यायाम्–

संयोगानां कलितकलनाः केवलं स्वार्थदृष्ट्या,
अन्योऽन्यं च प्रकटितरुषो जातवैरा विरुद्धाः।
पापाकृष्टाः विघटनपराः भ्रंशिताः भ्रामयन्तः,
अग्रेऽस्माकं पुनरपि मतं याचितारः स्थिताश्च॥
दण्डादण्डि प्रचलतु सदा वोऽस्तु वा वाग्विलासः,
केशाकेशि प्रशमयतु वा युष्मदीयं विवादम्।
हे नेतारः कुरुत सकलं रोचते यद् भवद्भ्यः,
स्वातंत्र्यं मे विधिरिदमिति प्रार्थये रक्षितुं वः॥
(मंगल्या प्रयागम्, पृ० 43–45)

राष्ट्रे शासकानां रक्षणदायित्वे व्यंग्यमेकं चिन्तनीयं वर्तते 'एकदा रंगमंचे' रूपके–

राजा–'अपि देशे सर्वं कुशलम् ?

महामंत्री–यदा भवान् साधूनां भक्षकोः देशे अमंगलं कुतः ।

(अर्घ्यम्, पुदुच्चेरी, पृ० 50) ।

राष्ट्रे धर्मराज्यसंस्थापनायै प्रशासकानां चरित्रे सत्यपरायणहरिश्चन्द्रस्य निदर्शनं प्रस्तौति डा० रामजीउपाध्यायः सत्यहरिश्चन्द्रोदयोपन्यासे–सत्यमयचारित्र्योदार्यनिदर्शनभूतः स्वचरितस्यौदार्येण कश्चित् पुरुषो महान् भवति धर्मराजे । (सत्यहरिश्चन्द्रोदये, पृ० 12)। प्रशासकानामहुंकारप्रकृति–परिमार्जनाय डॉ० कृष्णलालो व्यग्यात्मकरूपकरचनामेवं प्रस्तौतिः–

सुधीरः–एहि, भगवन्तं प्रार्थयावहे । अपसरस्तु क्रुद्धः सर्पादपि भयंकरो भवति । उभौ–(सस्वरं) भगवन् ! कृपां विधेहि, कुपितो न भूयादपसरः । भगवन् कृपां विधेहि । सुधीरः–पुनरपि अपसरः प्रार्थनीयो भविष्यति । दुष्करं खलु एतत् । अपसरमहिमानं स्त्रियोऽपि न जानन्ति ।

(अपसरमहिमा, चमत्कारः, पृ० 93, 103) ।

राष्ट्रे श्रमपरायणं ललितं लोकजीवनमपि विचिन्तितं संस्कृत रचनाकारैः रचनात्मकदृष्ट्या । श्रीपरीक्षितशर्मा धीवराणां श्रमपरायणसंगीतात्मकस्वरे एवं गायति–

आयाहि रे, आयाहि रे ! विहायसि सरागरश्मिचन्द्रमाः ।
तनोति सान्द्ररोचिमञ्जु चन्द्रिकाः ।।
सिन्धु रावघोषिता रोदसी कन्दराः । यान्तु यात्रपात्रचालकाः
सधीवराः । आयाहि रे, आयाहि रे !

(गीतसंस्कृतम् तिरुपतिः, पृ० 17)

राष्ट्रे परराष्ट्रगतनैकसमस्याः सार्वजनिकराष्ट्रियजीवनं कथं प्रभावयन्ति आधुनिकसंस्कृतरचनाकाराः सर्वथा जागतारिश्चिन्तनपरायणाश्च सन्ति । राष्ट्रियसीमान्ते विदेशिराज्येषु राजनीतिकपरिवर्तनेन अस्माकमार्थिकसामाजिकराजनीतिकसामरिकवैदेशिकाद्यवस्थाः कथं प्रभाविता भवन्ति, अस्मिन् विषयेऽपि विचारितवन्त विद्वांसः संस्कृतरचनाकाराः । डा० रामकृष्णशर्मणो नवीनानाट्यकृति बांगलादेशोदयमस्य श्रेष्ठं निदर्शनमस्ति । राष्ट्रस्य राजनैतिकनैतिकसमर्थनेन यद्यपि बांग्लादेशस्य आविर्भावोऽभवत् किन्तु समागतशरणार्थिजनानां महाभारेणाऽस्माकमार्थिकस्थितिरपि पर्याप्तरूपेण प्रभाविता जाता । बांग्लादेशोदयेऽस्य विषयस्य सुन्दरंचिन्तनं वर्तते । मयापि बङ्गदेशविमुक्तिविषयकरचानायामेवं विचिन्तितमस्ति–

"केचिद् बभूवुः शरणागतास्तु, केचिच्चमुक्तेर्बलिदानिवीराः ।
युद्धे पराजित्य नृशंसपाकान्, साहाय्यवन्तः खलु भारतीयाः ।।
(कुसुमाञ्जलिः, पृ० 39)

सम्प्रत्यपि राष्ट्रे सीमान्तपरराष्ट्रसमागतातंकवादितस्कराणां भयंकरीं समस्या चिन्ताजनकाः सन्ति शान्तिमयराष्ट्रियजीवने । आधुनिकसंस्कृतसाहित्ये विश्ववन्धुत्वस्य परमोदारदृष्ट्येमाः प्रति व्यापकचिन्तमेवं वर्तते । पं० चन्द्रभानुत्रिपाठी विचारयति मंगल्यायामेवम्–

"विश्व दृष्ट्वा विपन्नं बलिभिरनुदिनं दुर्बलान् शोषयद्भिः
विश्वात्माऽयंविषण्णोऽभवदुदितदयः पञ्चशीलव्रतस्य ।
स्वत्वं रक्षन्तु सर्वे प्रभुरतनुबलो न प्रवाद्येत् हीनम्,
राष्ट्राणामाश्रितानामिति दृढमकरोत् संघमात्मप्रभावात् ।।

प्रतिभाशालिराष्ट्रजनानां परदेशपलायनमपि परमचिन्ताजनकमस्ति । मेधावियुवकाः परदेशपलायनं न कृत्वा स्वदेशे (नगरे वा ग्रामे वा) एव निवसन्तु इति चिन्तयति श्रीविश्वनाथकेशवछत्रे स्वकीये सुभाषचरिते–

देशान्तरेषु वसतामपि जीवनार्थमूना न मातृभुविभक्तिरिरिति प्रतीतम् ।
ग्रामांतरे वसति नेत्रमहोत्सवाय, स्वग्रामत्रासिशुनकोऽपि नरः पुनः किम् ।
(सुभाषचरिते 9।19)

आधुनिकसंस्कृतसाहित्ये भाविभारतराष्ट्रस्य भव्यं चिन्तनं वर्तते । स्वकीयस्वर्णिमातीतमनुचिन्त्य चिन्ताशीलयुवकैर्भाविभारते ऽप्युज्ज्वलस्वप्नावतारणा कार्या । कविः कथयति–

"अधीत्य सम्यग् विगतेतिहासं भविष्यकालोज्ज्वलदिव्यरम्याः ।
स्वप्ना विलोक्या युवकैश्च यत्नैस्ते सत्यसृष्ट्यामवतारणीया ।।

स्वकीयं राष्ट्रं संसारे यथा राजतां तथैव भविष्ये स्थापूर्वकमाचरणीयमिति समुचितं विचारयति डा० चन्द्रभानुत्रिपाठी मंगल्यायाम्–

यथा भारतं राष्ट्रं राजेत तथा कृतिः कारणीया,
मत्या राष्ट्रप्रतिविनतयासद्गुणातिरनुसरणीया ।।
या स्वतंत्रता वीरैस्त्यागतपोबलिदानैः
तस्या रक्षा शेवधिवत्तत्कार्या प्राणप्रतिदानैः ।
जयलाभाय यदैक्यं दृष्टं भेदभावपरिहीणम्,
शौर्योदार्यसनाथं भूयात्तद्भ्रमभीतिविहीनम् ।
आत्मकल्याणं सुखमेव सत्यम् सूक्तिरियं स्मरणीया ।।

यथा सौख्यदा स्वतंत्रता स्यात् सा वीथी वरणीया ।
यथा भारतं राष्ट्रं राजेत तथा कृतिः करणीया ।।

(मंगल्या, पृ० 910)

भाविनो भारतस्य भव्यस्वरूपदृढीकरणाय राष्ट्रियैकतापरिहार्या स्वीकुर्वन्ति संस्कृतसाहित्यकाराः । 'विस्मृतभेदाः सन्तः' शीर्षककवितायामेवं चिन्तयति श्री महाबलेश्वरभट्टः–

भाषाधनमतजातिविभेदो हृदये मा भवतु ।
दुःखितदीनजनानुन्नेतुं हस्ताः प्रसरन्तु ।।
प्रवहति रक्तममक्तं मातुः भेदो मा भवतु ।।

(गीतसंस्कृत, पृ० 4)

भाविराष्ट्रविकासाय श्रीधरभास्करवर्णेकरः राष्ट्रहितमेव मत्वा प्रेरयति राष्ट्रजनान्–

गहनारण्ये घनान्धकारे बहुजना ये स्थिता गह्वरे ।
तत्र मया सञ्चरणीयम् । लोकहितं मम करणीयम् ।।

(गीतसंस्कृतम्, पृ० 2)

एवमेव डा० चन्द्रभानुत्रिपाठी चिन्तयति राष्ट्रियैकतायाः सुदृढपृष्ठभूमौ मंगल्यायाम्–

कुर्वन्त्येकीभूय समेता नव समाजनिर्माणम् ।
रुचिरो मानवधर्मः प्रसरतु गायत नूतनगानम् ।
हे नवयुवका उच्चैरुच्चरताऽऽकुमारिकाश्मीरम् ।
अरुणाञ्चलमापञ्चनदं भुवि भारतमेकशरीम् ।।

(मंगल्या, पृ० 8)

भाविभारते मातृभुवो गौरवरक्षायै अर्वाचीनसंस्कृतसाहित्यकाराः चिन्तनपरायणाः संलक्ष्यते ।

संकल्पसिद्धिगीतिनामकरूपकेऽस्मदीयाऽपि सन्दर्भेऽस्मिन्नवधारणास्ति–

रक्षा भवेदाष्ट्रभुवो भविष्ये, शान्तिः समृद्धिः सततं भवेच्च ।।
भूयात् सुकीर्तिः भरतावनेस्तु देशेषु देदीप्यो देश एषः ।।

(गीर्वाणसुधा, सितम्बर, 1987 अंक, पृ० 23 मुम्बईतः प्रकाशिता)

अर्वाचीनसंस्कृतसाहित्ये राष्ट्रियविविधविषय-सम्बन्धिचिन्तनमपि गम्भीरतापूर्वकं कृतमस्ति । विकासस्य प्रौन्नतिमार्गेतु वैज्ञानिकप्रगतिलाभाय

पुरातनराष्ट्रियविज्ञानविषया रचनात्मकदिशि पुनर्मूल्याङ्कनदृष्ट्या सुविचारिताः श्री विवेलणकरप्रभृति विद्वद्भिः। भारतीयभौतिकीरसायनज्यामितिगणितज्योतिष-चिकित्साद्यनेकविषयेषु श्रीवेलणकरः विचारपूर्णं विशदं विवेचनं कृत्वेमं गीर्वाणसुधामासिकपात्रिकायां खण्डे एकादशे 1-11 अंकेषु प्रकाशितवान् धारा-वाहिकरूपेण। राष्ट्रे क्रीडाक्षेत्रेऽनवरतं ह्रासमवलोक्य राष्ट्रियप्रतिभाशालिक्रीडा-प्रेमियुवकानां निर्देशनाय सम्यग्रूपेण चिन्तनं कृत्वा श्रीरुद्रदेवत्रिपाठी क्रीडातरंगिणी ग्रन्थस्य रचनां कृतवान्। एवं विविधविषयकराष्ट्रीयचिन्तनं वर्ततेऽर्वाचीनसंस्कृत-साहित्ये।[1] □

1. द्रष्टव्यो लेखकस्य विस्तृतशोधलेखः, सागरिका 27/3, वि० सं० 2046 वर्षीयाङ्कः, पृ० 73-90।

# अर्वाचीनसंस्कृतगद्यसमीक्षणम्

संस्कृत-साहित्ये वैदिककालदारभ्याधुनिककालपर्यन्तं गद्य-काव्य-परम्परा अविच्छिन्नावलोक्यते। संस्कृतगद्यस्य सुदीर्घपरम्परायामर्वाचीन संस्कृतगद्यमत्यन्तं समृद्धमधोलिखितरूपेणावाप्यते।

1. प्रबन्धकथात्मकं गद्यम्।
2. मुक्तककथात्मकं गद्यम्।
3. चरितप्रधानमाख्यानात्मकं गद्यम्।
4. अनूदितं गद्यम्।
5. प्रकीर्णं 'विविधविषयात्मकं' गद्यम्।

संक्षेपेण समीक्ष्यतेऽस्मिन् शोधपत्रेऽर्वाचीनसंस्कृतगद्यसाहित्यमत्र।

## प्रबन्धकथात्मकं गद्यम्

अर्वाचीनसंस्कृतगद्यसाहित्यं प्रायः प्रबन्धकथात्मकं 'उपन्याससमन्वितं' प्राप्यते। अधोलिखिताः कृतयोऽस्यां विधायां महत्त्वपूर्णाः सन्ति।

## मन्दारमञ्जरी

अलमोड़ा जनपदस्य पटियाग्रामवासिनः महाकवेः विश्वेश्वर-पाण्डेयस्य "मन्दारमञ्जरी" प्रबन्धकथात्मकगद्यसाहित्यस्य प्रतिनिधिरचना कथयितुं शक्यते, किन्तु कादम्बर्या गद्यशैलीमनुसृत्यापि भाषाभावयोरियं न तादृशी प्रभावशालिनी विद्यते। यथा–

"सरस्वतीवार्श्रितचतुराननना, श्रीरिव प्रोल्लसितपद्माकरा, देवसेनेव बहुलापत्याऱ्हा, पौलोमीवानुभूतशतमखा, लोपामुद्रेव कान्तागस्त्यानवेक्षोद्भवा, रतिरिव पंचबाण–संचरणभूमिः, सीतेवानधिगतयोनिसंकरा···।" चेति।

'मन्दारमंजर्यां श्लेषोपमोत्प्रेक्षारूपकाद्यलंकाराणां बाहुल्येन दीर्घसमासपूर्ण-दीर्घवाक्ययोजनामध्ये दुर्बलतन्तुमिव कथासूत्रं विलुप्तं भवति। अस्यां कृतौ सम-सामयिकप्रवृत्तीनामभावो वर्तते।

## सुशीला

तमिलनाडुप्रदेशे संस्कृताध्ययनस्य अधीक्षकस्य कृष्णमाचार्यस्य '1869-

1924 ई०[1] उत्कृष्टा उपन्यासकृतिः 'सुशीला' स्वसुबोधभाषाशैल्या स्त्रीः सदाचरणाय शिक्षयति। श्रीकृष्णमाचार्यस्य पातिव्रत्य-पाणिग्रहण-वररुचि-प्रभृतयोऽन्यगद्यकाव्यग्रन्थाः प्राप्यन्ते। सुशीलायामादर्शहिन्दुनारी-जीवनस्य शोभन चित्रणं हृदयावर्जकं विद्यते।

## मन्दारवती

रङ्गनाथाचार्यपुत्रः कविरत्नकृष्णमाचार्यः कादम्बरी "शैलीमनुसृत्य अष्टादशप्रकरणेषु मन्दारवतीं विरचितवान्। उपन्यासकृतिरियं तस्य लोकप्रिया रचनास्ति, यस्यां पुरातनतया सार्धमाधुनिकताया अपि प्रतिच्छविर्विद्यते। भाषा-शैली कृतेरस्या अत्यन्तं स्वाभाविकी सुन्दर-सालंकृतवाक्योजना सर्वत्र सहृदयमनो हरति। यथा–

"अथ भगवानम्बरमणिरभ्युदयोन्मुखः। अमाथिषुः कुलायान् पक्षति-विधूनानैरुत्पतनोद्यतानि शकुन्तकुलानि। अलमकार्षुगृहाङ्गणानि गोमयानुलेपना-दिभिः परिचारिकाः। अजृम्भिषत रथ्यासु पांसुक्रीडारतानामर्भकाणां कोलाहला-रावाः[2]"

## जयन्तिका

विंशशताब्द्यामस्यां कर्णाटकप्रदेशीयः जग्गु-अलवार-आयंगरः "जयन्तिका" नाम्नीमुपन्यासकृतिं विरचितवान्। जयन्तिकार्वाचीनकथा साहित्ये सर्वथाद्वितीया मौलिकी रचना, तथाप्यीयं कादम्बर्या प्रचुरं प्रभाविता परिलक्ष्यते।

## सौदामिनी

कर्णाटकप्रदेशीयो नरसिंहाचार्यः विंशशताब्द्याः सुविख्यातः संस्कृतगद्य-काव्यकार आसीत्। सौदामिनी अस्य सुप्रसिद्धोपन्यासकृतिरस्ति। तत्र मगधनरेशस्य शूरसेनस्य विवाहो विदर्भराजकुमार्या सौदामिन्या सह सम्यग् रूपेण वर्णितोऽस्ति।

सौदामिन्या अपरः प्रणयी विजयवर्मासीत्, यः शूरसेनराज्यं विजितवान् किन्तु अन्ते शूरसेनः स्वपराक्रमेण सौदामिन्या सह स्वराज्यमपि लब्धवान्। अस्योपन्यासस्य कथावस्तु रोचकं, भाषा-शैली च मनोहारिणी विद्यते।

## कुमुदिनीचन्द्रम्

भाषाशैलीदृष्ट्या 'कुमुदिनीचन्द्रम्" विंशशताब्द्याः सर्वोत्तमोपन्यासकृतिः मन्यते।

---

1. "संस्कृतसाहित्य का आलोचनात्मक इतिहास" डॉ० रामजी उपाध्यायः, प्रयाग पृ० 249। अर्वाचीन संस्कृत साहित्य–डॉ० श्रीधरभास्करः नागपुरम्, पृ० 209।
2. मन्दारवती, कृष्णमाचार्यः, वाणीविलासप्रेस, मद्रास, 1929, पृ० 39।

मेधाव्रताचार्योऽस्त्यस्या: कृते: लेखक: । उपन्यासेऽस्मिन् वीरवरकेशरीसिंहस्य पुत्र: चन्द्रसिंहोऽस्ति प्रधाननायक:, नायिका च कुमुदिनी अस्ति । केशरीसिंहस्य द्वितीयपुत्र: रणवीरसिंह उपनायकोऽस्ति रत्ना–प्रभाचोपनायिका विद्येते । क्रूरसिंह-योगीन्द्रविमलादिपुरुषनारीपात्राणां चारुचरित्रचित्रणमस्यां रचनायां मनोहरमस्ति । षोडशकलासु विभक्तं कथावस्तु वर्तमानयुग-प्रवृत्तिभ्य: पराङ्मुखीभायापि केवलं व्यंग्यरूपेण वर्तमानपरिस्थिती: संकेतयति । कृतौ प्रत्येककलाया: प्रारम्भे प्रासंगिक श्लोकबद्धा: सूक्तयो विराजन्ते । यथाहि–

"मृगेषु मैत्री मुदितात्मदृष्टौ कृपा मुहु: प्राणिषु दु:खितेषु ।
येषां न ते कस्य भवन्ति वन्द्या: कौशेयकौपीनभृतो मुनीन्द्रा: ॥"

कुमुदिनीचन्द्रम्, पृ० 4

प्रबन्धकथात्मकगद्यसाहित्ये श्रीमतीराजम्मारचितचन्द्रमौलि:, श्रीनारायण[1] शास्त्रिख्रिस्तेमहोदयस्य दिव्यदृष्टि:, आचार्य–श्रीशैलरचिता मेनका, म० म० हरिदास[2]–सिद्धान्तवागीशकृता सरलादिप्रबन्धात्मककथाकृतय उल्लेखनीया: सन्ति ।

## मुक्तकं कथात्मकं गद्यम्

मुक्तककथात्मकगद्यसाहित्येऽनेका कृतयो विद्यन्ते, याश्वधोलिखिता उल्लेखनीया: सन्ति ।

### कथामुक्तावली

अर्वाचीनकालस्य सुप्रसिद्धा संस्कृत–कवयित्री गद्यलेखिका च पण्डिता क्षमारावमहोदया कथामुक्तावल्या रचयित्री । कथा-मुक्तावली सरलप्रवाहपूर्णगद्ये विरचितानां रोचककथानां संग्रहोऽस्ति । कथापञ्चक–ग्राम्यज्योतिरन्ये तस्या: सुप्रसिद्धेमुक्तककथाकृती स्त: । रोचकताघटनावैचित्र्यादि दृष्ट्या क्षमारावरचिता: कथा हिन्दीकथानामिव लोकप्रिया: सन्ति ।

### कथासंवर्तिका

भागीरथप्रसादत्रिपाठी 'वागीश:' शास्त्री कथासंवर्तिकाया कर्तास्ति । मनोरमभाषाशैल्या: सरसास्त्रयोदशकथा: विलसन्ति कथासंवर्तिकायाम्, यासामाधारोऽस्ति दशार्णक्षेत्रस्य लोकजीवनम् इमा: कथा न केवलं बालकेभ्य: रुचिकरा: प्रत्युत प्रौढ़जनेभ्योऽपि शिक्षाप्रदा: सन्ति ।

### कौमुदीकथा कल्लोलिनी

पं० रामशरणत्रिपाठी रचयितास्ति कौमुदीकथाकल्लोलिन्या:, यस्यां

1. दिव्यदृष्टि: ना० शा० ख्रिस्ते, वाराणसी, 1936 अमरभारती-संस्कृत मासिकपत्रिका ।
2. सरला (हरिदास-सिद्धान्तवागीश:) 41 देवलेन, कलिकाता–14 ।

भारतीयसाहित्यपरम्परा पूर्णतयानुसृता। नरवाहनदत्तस्य सुप्रसिद्धकथाद्वारेण त्रिपाठिना काव्यात्मकरूपेण लघुकौमुद्याः सूत्राणां संज्ञान-प्रदानाय समीचीनं प्रयस्तवान्।

### शैवलिनी कुमुदिनी च

बंगलौर-सेण्ट्रलमहाविद्यालयस्य संस्कृतविभागाध्यक्षः चक्रवर्ती राजगोपालाचार्यः शैवलिनी कुमुदिन्यौ कथाकृती विरचितवान्, ययोः ग्राम्यकथाभिः सार्धं काल्पनिकेतिवृत्तानां विलासो विद्यते। विलासकुमारीसंगरनाम्न्योरपरे गद्यरचनेपि तस्य विख्याते वर्तेते।

इत्थं संस्कृतस्य मुक्तककथात्मकं गद्यमपि शिवदत्तशर्माचतुर्वेदिसम्पादिताभिनवकथाकुंजादिनानाकृतिभिः पर्याप्तं समृद्धमवलोक्यते।

### चरितप्रधानमाख्यानात्मकं गद्यसाहित्यम्

प्रबन्धात्मकविधायां चरितप्रधानमाख्यानात्मकं गद्यसाहित्यमप्यत्यन्तं समृद्धं संलक्ष्यते। तत्र निम्नलिखितकृतय उल्लेखनीया सन्ति।

### श्रीकृष्णाभ्युदयम्

श्रीशैलदीक्षित-(तिरुमलाचार्य)-प्रणीतं श्रीकृष्णाभ्युदयं गद्यकाव्यं प्रणेतुः प्रतिमायाः श्रेष्ठं निदर्शनमस्ति।

अस्मिन् गद्यग्रन्थे श्रीकृष्णस्य जीवनचरितं रमणीयतरं वर्णितमस्ति। चरितप्रधानेऽस्मिन्नाख्यानग्रन्थे गद्यकाव्यशैली वर्ण्यविषयानुसारिणी अत्यन्तमुदात्ता वर्तते। भारतीविलासः कावेरीगद्यञ्च अन्ये गद्यकाव्यरचने श्रीशैलदीक्षितस्य स्तः।[1]

पंचदशाध्यायेषु प्रवाहपूर्ण-प्रसादगुणमयीभाषायां ह्वी० अनन्ताचार्यः रोचकाख्यानम् "उदयनचरितम्" विरचितवान्। ऐतिहासिकपृष्ठभूमावियं गद्यकृतिः सर्वथा सफलैवास्ति।

### शिवराजविजयम्

अर्वाचीनसंस्कृतगद्यसाहित्ये चरितप्रधानाख्यानात्मकंकृतिषु रचनेयं मूर्धन्या मन्यते।

ऐतिहासिकेऽस्मिन्नुपन्यासे छत्रपतिशिवराजजीवनवृत्तसम्बन्धिकथानकं निपुणतया निबद्धमस्ति। रचयितुरस्य अम्बिकादत्तव्यासस्य उत्कृष्टभाषाशैल्याः परिचयः पदे-पदेऽस्मिन्नाख्याने प्राप्यते। ओजःपूर्णप्रवाहमय्यां भाषायां पदलालित्यं संवादसौष्ठवं, परिवेशानुकूलं चारुप्रकृतिचित्रणञ्च सर्वत्र सलक्ष्यते। यथा–

---

1. संस्कृतसाहित्य का आलोचनात्मक इतिहास, डॉ० रामजी उपाध्यायः, प्रयागम्, पृ० 256।

"महाराष्ट्रदेशरत्नम् यवनशोणितपिपासाकुलकृपाणः, वीरतासीमन्तिनीसीमन्त-न्तसुन्दरसान्द्रसिन्दूरदानदेदीप्यमानदोर्दण्डः, मुकुटमणिर्महाराष्ट्राणां, भूषणं भटानाम्, निधिर्नीतीनाम्, कुलभवन कौशलानाम्, पारावारः परमोत्साहानाम् स्वधर्माग्रहग्रहिलः इति ।"[1]

वस्तुतोऽभिनवबाण इति विख्यातो महाकविव्यासः छत्रपतेः शिवराजस्य गौरवमयं भव्यञ्च चरित्रचित्रणे सर्वथा सफलोऽस्ति ।

## लोकमान्यतिलकचरितम्

लोकमान्यतिलकस्य जन्मशताब्दमहोत्सवावसरे 1956 ई० वर्षे श्रीकृष्ण-वामनः चितले महोदयोऽष्टदशपर्वसु लोकमान्यतिलकचरितम् सरलप्रवाहपूर्णललित-भाषया लिखितवान् । लेखकस्य भाषासारल्यस्य निदर्शनं प्रस्तुतेऽवतरणेऽव-लोकनीयम् ।

"जलसन्तरणमेतेषामतीव प्रमोदायाभवत् । वाराणसीक्षेत्रे परमपवित्र-भागीरथ्या विस्तीर्णप्रवाहो लोकमान्यैः सुखेनोत्तीर्ण इति बहुभिर्जनैः कथ्यते ।"[2]

लेखकः श्रीचितलेमहाशयो लोकमान्यतिलकस्य जन्मनः मृत्युपर्यन्तमैतिहासिकं सांगोपागं जीवनमस्यां कृतौ वस्तुतः चित्रीकर्तुं सफलोऽस्ति ।

## द्वासुपर्णा

चरितप्रधानेष्वाख्यानात्मकगद्यग्रन्थेषु डॉ० रामजी उपाध्यायरचिता 'द्वासुपर्णा' ग्राम्यजीवनाधारि-कृष्णसुदाम्नोः पौराणिकीं कथामभिनवरूपेण चित्रयति ।

श्रीनारायणशास्त्रिखिस्ते विरचिता विद्वच्चरितपंचकम्, आचार्यशेषशायी-कृताष्टावक्रीयम्, भगवताचार्य–चारुदेवशास्त्रिप्रणीते गान्धीचरिते प्रभृतिगद्यकृतयो महात्त्वपूर्णा उल्लेखनीयाश्च सन्ति, यासु सरल-सरलं प्रसादात्मकं प्रवाहपूर्णं च संस्कृतं प्रयुक्तमस्ति ।

## अनूदितं गद्यसाहित्यम्

भारतीयाभारतीय–भाषाभ्योऽनूदितं गद्यसाहित्यमपि समृद्धं विद्यते । विभिन्नभाषाभ्योऽधोलिखिता अनूदिताः कृतय उल्लेखनीयाः सन्ति ।

## लावण्यमयी

श्रीमदप्पशास्त्री सुनृतवादिनीति संस्कृत–साप्ताहिके वंकिमचन्द्रस्यलावण्य-मय्या वंगलोपन्यासस्य सरलसंस्कृतेन रोचकं रूपान्तरणं कृतवान् ।

---

1. शिवराजविजयम्, पं० अम्बिकादत्त व्यासः, वाराणसी, 1969, पृ० 30 ।
2. लोकमान्यतिलकचरितम्, चितले, सुबोध–संस्कृतलोकमान्यतिलकचरित–प्रकाशन, बम्बई ।

संसारचक्रम्–जुमन्जुभाषिणी पत्रिकायाः सम्पादकः, रामानुजो हिन्द्या उपन्यासस्य संसारचक्रस्य सरलमनुवादं कृतवान् ।

अनूदितगद्यसाहित्ये श्रीशैलताताचार्येण संस्कृतरूपान्तरिते रचने वंगलोपन्यासदुर्गेशनन्दिनी क्षत्रियरमणो च, श्री हरिचरणरूपान्तरिता वंकिमचन्द्रस्योपन्यासकृतिः कपालकुण्डला, सोमयाज्यनूदिता टालस्टायकृतिः "कणः लुप्तः गृहं दहति" प्रभृतयः कृतयः महत्त्वपूर्णाः सन्ति ।

प्रकीर्णं (विविधविषयात्मकं)–गद्यसाहित्यम्–अर्वाचीनं प्रकीर्णं विविधविषयात्मकं गद्यसाहित्यमत्यन्तं समृद्धं वर्तते, यस्मिन् धार्मिकसामाजिक-सांस्कृतिक-वैज्ञानिक साहित्यिकयात्रावृत्तादि-विविधविषयका गद्यग्रन्था उपलभ्यन्ते । विधायामस्यामधोलिखिताः कृतय उल्लेखनीयाः सन्ति–

## प्रबन्धमंजरी

पं० हृषीकेशभट्टाचार्योऽर्वाचीनसंस्कृतगद्यलेखकेषु सुप्रसिद्धोऽस्ति । प्रबन्धमञ्जरी तस्य महत्त्वपूर्णा रचनास्ति, प्रबन्धमञ्जर्याः प्रांजल–प्रवाहपूर्णभाषाया उदाहरणं प्रस्तूयतेऽस्मिन् गद्यावतरण–

"भीषणभस्मच्छुरितजूटघटित–सरस–कुसुमस्तबक–शोभिस्निग्ध धम्मिलशोभोद्भावितं भयंकराशीविषघटितार्धं–मौक्तिकसरसमुज्ज्वलशोभाच्छादितावयवमर्धनारीश्वररूपं हि केवलं संस्कृतभाषायामेवाविर्भावितमस्ति ।"[1]

## सेतुयात्रावर्णनम्

यात्रावृत्तसाहित्येऽत्यन्तं महत्त्वपूर्णमिदंगणपतिशास्त्रिणा पाण्डित्यपूर्णं सरलं यात्रावर्णनं लिखितवान् ।

श्रीशैलदीक्षितेन (तिरुमलाचार्येण) कावेरीगद्ये कुर्गप्रदेशीयतलिकावेरीनाम्नः तीर्थस्य यात्रावर्णनं कृतम् ।

श्रीकृष्णोपाध्यायप्रणीत–कवीन्द्रचन्द्रचन्द्रोदया गद्यग्रन्थ उत्तमकोटिकोऽस्ति यस्मिन् शाहजहाँकालिक–विदुषां प्रशस्तीनां संकलनमस्ति, याः कवीन्द्राचार्याय समर्पिता आसन् ।

संस्कृतगद्येन इतिहास–लेखने म० म० पं० रामावतारशर्मा सुप्रसिद्धोऽस्ति । अस्यां विधायां स "भारतवर्णनम्" सरलललितसंस्कृतभाषाया विरचितवान् ।

श्रीद्विजेन्द्रनाथ[2]शास्त्री, हंसराजो[3]ऽग्रवालः, प्रभृतिभिः विद्वद्भिः संस्कृत-

---

1. प्रबन्धमञ्जरी, हृषीकेशभट्टाचार्यः, (संस्कृत–भाषाया वैशिष्ट्यम्) काव्यकुटीर–कार्यालय : चाँदपुर (बिजनौर) पृ० 207 ।
2. संस्कृत साहित्य–विमर्शः, द्विजेन्द्रनाथः शास्त्री, 1956, पृ० 680 ।
3. संस्कृतसाहित्येतिहासः, (द्विभागात्मकः), हंसराज–अग्रवालः, फीरोजपुरम् 195

साहित्येतिहासग्रन्थाः सरससंस्कृतभाषया विरचिताः।

संस्कृतगद्यस्य नवीनविधायां समीक्षात्मकनिबन्धानां प्रणेतृः म० म० पं० गिरधरशर्मणः महत्त्वपूर्णं स्थानं विद्यते। 'चतुर्वेदिसंस्कृतरचनावलिः' (भागद्वयं) वैदिकपौराणिकभाषाशास्त्रीयधर्मशास्त्रीयकाव्यशास्त्रीयदार्शनिकादिविविधविषयकान् निबन्धान् सप्रस्तौति स्म। गीता-पुराण-समीक्षा तेन "पुराणपारिजाते" नाम्नि ग्रन्थे कृता।

अर्वाचीनसंस्कृतगद्यलेखेषु विविधविषयसम्बन्धिसंस्कृतनिबन्धकाराः प्रबन्ध-प्रकाशकारः डॉ० मंगलदेवशास्त्री, प्रस्तावतरंगिणीकारः पं० चारुदेवशास्त्री भारतस्य[1] सांस्कृतिकनिधिः, महाकविकालिदासः संस्कृतनिबन्धावलिः प्रभृतिग्रन्थानां कर्ता डॉ० रामजी उपाध्यायः, मानव शिल्पी[2] कालिदासादिग्रन्थानां रचयिता डॉ० रेवा-प्रसाद द्विवेदी, निबन्धवैभवस्य लेखकः आचार्यकेशवदेवशुक्लः संस्कृतनिबन्धशतक-कारः डॉ० कपिलदेवद्विवेदी, संस्कृत–निबन्धाञ्जललिकारः डॉ० रामकृष्ण आचार्यः संस्कृतनिबन्धनवनीतकारः डॉ० पारसनाथद्विवेदी, संस्कृतनिबन्धादर्शकारः डॉ० राममूर्ति शर्मा, कालिदासीयम्–निबन्धनिचयकर्ता डॉ० कैलाशनाथ द्विवेदी, प्रबन्ध-रत्नाकरस्य रचयिता डॉ० रमेशचन्द्रः शुक्लः, डॉ० शिवप्रसादभारद्वाजः डॉ० वासु-देवकृष्णचतुर्वेदि–प्रभृत्यनेके संस्कृतगद्यलेखका उल्लेखनीयाः सन्ति।

आधुनिकसंस्कृतगद्यसाहित्यं संवर्धयन्त्यः संस्कृतपत्र-पत्रिका संलक्ष्यन्ते। अस्यां दिशि संस्कृतं भवितव्यम् (नागपुर) गाण्डीवम् (वाराणसी) संगमनी (प्रयागम्), सागरिका (सागरम्), अजस्रा (लक्ष्मणपुरम्) अर्वाचीनसंस्कृतम् (दिल्ली), दूर्वा (भोपालं), गुञ्जारवेः (अहमदनगरं), गर्वाणी (चित्तूर), संस्कृतामृतम् (दिल्ली), भारतोदयं (हरिद्वारं), ब्रजगन्धा (मथुरा), सर्वगन्धा (लक्ष्मणपुरम्), सरस्वती सुषमा (वाराणसी), संस्कृत-विमर्शः, संस्कृत प्रतिभा (दिल्ली), शारदा (बम्बई), गुरुकुलपत्रिका (हरिद्वारम्), दिव्यज्योतिः (शिमला), भारती–(जयपुरम्) प्रभृतिपत्रपत्रिकासु संस्कृतगद्यं समालोचनात्मक-रूपेण समृद्धं संदृश्यते।

अर्वाचीनसंस्कृतगद्यसाहित्यस्य उपर्युक्तविवेचनेन कथयितुं शक्यते, यत् प्राचीनसंस्कृतगद्यकाव्यमिव अस्मिन्नलंकारवर्णनै जटिलता दुरूहता वा नावाप्यते, अपित्वस्मिन् सरलप्रसादपूर्णभाषया प्रवहमाणा कथाकल्लोलिनी स्वाभाविकी समुल्लसति। ग्रीकगद्यकाव्यप्राचीनभारतीयगद्यकाव्यमिव अर्वाचीन संस्कृतगद्य-

1. ग्रन्थोऽयं उ० प्र० शासनेन पुरस्कृतः प्राप्तिस्थानम् सागरिका-समितिः सागरम्)
2. सागरिकासमितिः, सागरविश्वविद्यालय, सागरम् (कालिदासविशेषाङ्के साग-रिकायां प्रकाशितम्।

साहित्येऽपि नगरवर्णनं, प्रकृति-चित्रणं, नारीसौन्दर्यवर्णनं, पशुपक्षिपादपलतामय-संसारस्य रागविरागमयव्यवहारस्य च चित्रणं दृश्यते। उभयोः साम्यमवलोक्य पीटर्-सनमहोदयेन प्रोक्तम् "भारतीयगद्यकाव्यं ग्रीकगद्यकाव्यस्य अधमर्णमिति"[1] वितथं निराधारम्प्रकल्पनम्।

प्राचीनगद्यस्य अपेक्षयार्वाचीनगद्ये विविधविधा विद्यन्ते, यासु प्राचीनगद्य-कवीनां मध्ये महाकवेः सुबन्धोर्न तादृशः प्रभावः परिलक्ष्यते, यादृशः दण्डिबाणयोः प्रभावः। बाणभट्टस्यप्रभावस्तु विश्वेश्वरपाण्डेय–कृष्णाचार्यशैलदीक्षिताम्बिकादत्त-व्यासादिलेखकानां गद्यसाहित्ये विद्यते एव।[2] □

---

1. संस्कृतसाहित्येतिहासः, (द्वितीयोभागः), हंसराज–अग्रवालः फीरोजपुरम् 19ↄ1, पृ० 10।
2. द्रष्टव्यो लेखकस्य विस्तृतशोधलेखोऽर्वाचीनसंस्कृतते 4/3 अंके, पृ० 21-32, 1981, नव दिल्ली।
सागरिका, 20/4 अंकः, पृ० 91-100, सागरम्।

# समीक्षानिकषे मृच्छकटिकम्

सुविशालसंस्कृतवाङ्मयाकाशे जाज्वल्यमानो ज्योतिषां प्रकाशपुञ्ज इव सस्थितो महाकविः शूद्रकः कस्य संस्कृतसाहितीजुषो विदुषो न विदितः। मुकुटमणिरिव राराजते मृच्छकटिकं नामास्य प्रकरणं संस्कृतरूपकसाहित्ये यत् सहृदयैः सुतरां प्रशंसितमस्ति। स्वदेशे विदेशेषु च नैकशः प्रयुक्तम्। व्यक्तं नामास्य तादृशं वैशिष्ट्यं यत् सहृदयावाहरतीति प्रकृतोऽस्माकं विषयः।

## भाषासौष्ठवम्

प्रथमं तावत्तद् भाषामाश्रित्य समीक्षायां किञ्चिदुच्यते। संस्कृत रूपकेषु यथापात्रं संस्कृतप्रकृतप्रयोगो नानानाट्यग्रन्थेषु निर्दिष्टः, प्राकृतानि खलु नैकानि निरीक्ष्यन्ते। तेषामपि यथापात्रमत्र विनियोगो विद्यते। अत्र हि चतुर्दशप्रकाराणां प्राकृतानां प्रयोगः परिलक्ष्यते। नैतावती सङ्ख्या कुत्राप्यन्यत्र संस्कृतरूपके इति यत्सत्यं वैलक्षण्यस्येति नापेक्ष्यते बहुवचः।

## संवाद-सौष्ठवम्

महाकविः शूद्रकः प्रसङ्गानुकूल्येन लघुदीर्घवाक्यानि यथातथं प्रयुङ्क्ते। मैत्रेयशकारयोः प्रथमाङ्कगतहास्यपूर्णप्रश्नोत्तरेषु पञ्चमाङ्कगतकुम्भीलकमैत्रेययोः शकारचेटयोश्च कथोपकथनेषु सर्वत्र लघुवाक्यानां प्रयोगो दरीदृश्यते। यत्र तत्र स्वगतभाषणानामपि पाटवेन प्रयोगः कृतो नाट्कारेण। परं न तानि वाक्यति दीर्घाणि उद्वेजकानि च। स्थितिरियमेव संवाहकं रक्षितुं प्रवृत्तस्य दर्दुरकस्य, वसन्तसेनागृहात् प्रस्थितस्य संवाहकस्य संकेतस्थले चारुदत्तस्योद्याने शकटस्थापनात् पूर्वं स्थावरकस्य च कथनेष्वपि वर्तते। न कुत्रापि वैरस्य मतो हेतोः प्रकरणेऽस्मिन्। दीर्घस्वगतभाषाणेष्वपि शूद्रकः रङ्गमञ्चसङ्केतैः वैरस्यं परिहरति। अस्मिन् विषये तृतीयाङ्कगतशर्विलकस्य चौर्यवर्णनं विशेषेण उल्लेखमर्हति।

## वर्णना-नैपुण्यम्

तत्र दक्षचौर्यकलायाः रोचकं वर्णनं तदनुगतक्रियाव्यापारस्य वर्णनस्य एकरसत्वं सर्वथा दूरीकरोति। दृश्यमिदं च चित्ताकर्षकं विदधाति। पञ्चमाङ्कगतवृष्टि-वर्णनं, पौनः पुन्येन निर्धनतायाश्च वर्णनं यद्यपि घातप्रतिघातगतिमये नाटकीयक्रियाव्यापारे न विशेषेण सहायके तथापि नायकस्वात्यन्तसुकुमारप्रकृतित्वात्

कथानके तयो: सहजं महत्त्वमस्त्येव। सर्वत्रैव एभि: सरसरवगतभाषणै: शूद्रक: उपायान्तरै: अप्रकाश्यं पात्रस्य मनोनिहितं भव्यं भावमभिव्यक्तुमीहते। परन्तु प्रवीणतया पात्रप्रकृतिपरिस्थितीनामौचित्य विचार्यैव तत्प्रयोगे प्रवर्तते, प्रकरण-रचनायां सर्वथा साफल्यं च लभते। प्रशंसितोऽस्ति प्रकरणकार: पौरस्त्यपाश्चात्य-विद्वद्भि:। रूपककार: शूद्रक: कथावस्तु घटनाक्रमेणैव वर्णयति। एवं कृतित्वं कुर्वन् स काञ्चित् घटनानामेककालावच्छेदेन अथवा विशिष्टस्थानभेदेन तथा घटयति यथा क्षिप्रमेव दृश्यान्तरणमावश्यकं भवति। प्रकरणे इदं प्रबन्धकाठिन्यं शूद्रक: प्रायेण साधु निर्वहति। तथा हि प्रथमाङ्कगतं तृतीयं दृश्यं साक्षादनुवर्तते। अस्ति द्वयोर्मध्ये द्वितीयदृश्यावस्थिति:। नाटककारो महाकवि: शूद्रक: अतिचातुर्येण चारुदत्तं ध्यानमग्नस्थितावुपस्थाप्य अतिस्वाभाविकरूपेण द्वितीयदृश्यमुपस्थापयति। एवमेव पञ्चमाङ्केऽपि सोऽतिचातुर्येण मदनिकाशर्विलकाभ्यो: परस्परालापाय वसन्तसेनायै च प्रच्छन्नरूपेण तयो: मधुर प्रेमालाप-श्रवणाय अवसरं प्रददाति। अष्टमाङ्केऽपि प्रथम परिव्राजकस्यावतरणं दर्शयित्वा पुनस्तत्रैव शठशकाराय क्रूरकर्मानुष्ठानायावसरं प्रदातुं पुण्यात्मपरिव्राजकं चीवरक्षालने नियोजयति। इत्थं घटनाक्रमे एकत्र सत्त्वेऽपि न प्रकरणेऽस्मिन् किञ्चिदस्वाभाविकं प्रतिभाति। तथैव अष्टमाङ्कस्यान्तिमदृश्ये अस्वस्थां वसन्तसेनां स परिव्राजक: कञ्चित् कालं यावत् स्वास्थ्यलाभाय विहारे स्थापयति। स्वस्था सती सा सुन्दरी पुन: चारुदत्तदर्शनाय गन्तुं व्यवस्यति। मध्य काल एवाधिकरणिकनिर्णयं चारुदत्तवधस्य घोषणा, तस्य वधस्थानं प्रति प्रस्थानञ्चेति सर्वं घटते।

कथावस्तु घटनाक्रमेण समुपस्थापयितुं शूद्रको बहुधा दृश्यानाम् आकस्मिकं परिवर्तनमपि करोति। तथा हि शकारेणानुगम्यमाना वसन्तसेना चारुदत्तस्य गृहं प्रविशति स च तां सेविकां मन्यमान: तां स्वपुत्रप्रावारकेणाच्छाद्यान्त: प्रवेशयितुं काङ्क्षति। सुघटित घटनेयं चारुदत्तभवनस्य बहिर्भागे घटते, तत्पूर्ववर्ति घटना तु तद्गृहद्वारस्य बही राजमार्गे दृश्ययोजनाया इदं काठिन्यं षष्ठाङ्के विशेषेणनुभूयते, यत्र घटना एकैकश: क्वचित् चारुदत्तभवनस्यान्त:, क्वचित्तदर्बहि: क्वचिच्च तत्संलग्नरम्यराजमार्गे घटन्ते। एवमेव तृतीयाङ्केऽपि महत्त्वपूर्णा घटना: कालक्षेपं विनैव चारुदत्तगृहाभ्यन्तरे तद्बहिर्भागे च घटन्ते। मृच्छकटिके ईदृशानां दृश्यानां बाहुल्यं प्रमाणीकरोति यत् तदा एवंविधानां रङ्गमञ्चानां प्रबन्धं आसीद् येष्वेवं-विधानां चारुदृश्यानां प्रदर्शनं सारल्येन कर्तुमशक्यत तत्र रसिकानां मनोरंजनाय।

## अर्थोपक्षेकाणां स्थिति:

मृच्छकटिके विषकम्भक–प्रवेशकानां सर्वथाभाव: सूचयति यत् शूद्रक: केवलं नाट्यदष्ट्या महत्त्वपूर्णानि दृश्यान्येवोपस्थापयितुमिच्छति अनपेक्षितानि दृश्यानि

च सर्वथा प्रकरणे परिहरति । यदावश्यकं तद् रङ्गमञ्च एव दर्शयति, पात्रमुखेन वा सूचयति । कदाचित् स 'नेपथ्ये' इति संकेतेन तत्प्रकटयति । तथाहि वसन्तसेनायाः चारुदत्तगृहे प्रवेशः, तत्र रात्रिव्यतियापनम्, चारुदत्तस्य तया सह पुष्पकरण्डकोद्याने विहारनिश्चयः, वसन्तसेनायाः स्वास्थ्यलाभं यावद् विहारे स्थितिः, पालकेन आर्यकस्य बन्धनं, शर्विलकेन तस्य मोचनं, पालकस्य वधः, आर्यकस्य च सिंहासनाधिरोहणमिति सर्वमिन्दं न प्रकरणेऽस्मिन् साक्षात् प्रदर्शितं शूद्रकेण, अपि तु कथोपकथनद्वारेणैव सूचितम् मृच्छकटिके मनोहारिप्रकरणे । कतिपय प्रवेशका अनुद्दिष्टा एव ।

## उत्कृष्टदृश्ययोजना

प्रकरणेऽस्मिन् दृश्ययोजनास्वपि शूद्रकस्य कौशलं सर्वोपरित्वेन परिस्फुरति । स प्रायेण परस्परविरोधिभव्यसंवलितानि दृश्यानि क्रमेण तथा संयोजयति यथा दर्शकानां रुचिविघातो न जायते । गम्भीरहास्यदृश्यानि तेन परस्परमन्तरेण योजितानि सन्ति । तथाहिप्रथमाङ्के विलासिना शकारेण वसन्तसेनायाः अनुसरणम्, द्वितीयाङ्के च संवाहकस्यानुसरणं, दर्दुरकेण च तस्य मोचनम्, तत्रैव कर्णपूरकघटना, षष्टाङ्के चन्दनक-वीरकलहश्च । इदमेव विरोधि–प्राकृतिकपात्राणां चित्रणेऽपि महाकविशूद्रकेण साधु संयोजितम् । चारुदत्तशकारयोः, दर्दुरकसंवाहकयोः, शकारविटयोः वीरकचन्दनकयोश्च एकत्र संयोजनं दर्शकानां प्रमोदाय एव प्रतिभाति प्रकरणे मृच्छकटिके ।

## रसानुसारिसंशयानुभूतिः

प्रकरणे मृच्छकटिकेऽन्यद् विशिष्टं समुलेख्यं नाट्यतत्त्वं संशय (Suspense) रूपमस्ति । यस्योत्कर्षापकर्षाभ्यामानाट्यान्तं दर्शकानां रसास्वादो वरीवर्ति । प्रथमपञ्चमाङ्कयोस्तु स संशयः प्रकरणेऽस्मिन प्रयत्नसाध्य एव प्रतिभाति परन्तु तदनन्तरमेव तस्य प्रबलतरः प्रवाहो दर्शनपथमवतरति । प्रथमस्यानुभवः प्रथमाङ्के शकारेण तत्पुरुषैश्चानुगम्यमानाया वसन्तसेनाया विषये भवति एव । परन्तु वसन्तसेनायाः चारुदत्तभवन प्रवेशेन स तत्रैव परिसमाप्तिमुपगच्छति । तादृश एव संशयो द्वितीयाङ्के संवाहकविषयेऽपि प्रभावी भवति । पञ्चमाङ्क–परिसमाप्ति यावत् नान्यत्र प्राकट्येन संशयोऽनुभूयते यद्यपि अप्रकटरूपेण वसन्तसेनायाश्चारुदत्तविषयकप्रेमपरिपुष्टो शकारवत् औत्सुक्यं तु सर्वत्रानुभूयते एव । वास्तविकसंशयस्तु प्रकरणस्य षष्ठाङ्कादारब्धो भवति । घटनाक्रमेण स शीघ्रम् उत्कर्षापकर्षौ प्राप्नुवन् सहृदयैश्चरमकोटिमाटीकमानः प्रतिभाति, स्थाने-स्थाने स तात्कालिकशान्ति गच्छति, अन्ते पुनः सर्वथैव शान्तिमाप्नोति ।

## समन्वितवस्तु-घटनाविकासः

महाकवेः शूद्रकस्य नाट्यकलायाः अन्यो विशेषोऽस्ति वस्तुविशेषाणां घटनाविशेषाणां च प्रकरणस्य कथावस्तुविकासे चातुर्येण संयोजनरूपः। जातीकुसुमसुगन्धितप्रावारकस्य, सुवर्णभाण्डस्य रत्नावल्याश्च प्रयोगः खल्वेवंविधः। इमे पदार्था हस्ताद्धस्तान्तरं गच्छन्तः कथावस्तु स्वाभाविकरूपेण अग्रे प्रसारयन्ति। किमन्यत्, प्रावारकसंलग्नः पुष्पगन्धोऽपि न निष्प्रयोजनः प्रतिभाति। कर्णपूरस्य सामान्यसाहसेन प्रसन्नश्चारुदत्तस्तमुपहाररूपेण तस्मै ददाति। वसन्तसेना च त तद् गन्धेनैव प्रत्यभिजानाति। सा चारुदत्तस्यैवायमिति च निश्चिनोति। अयमेव प्रथमाङ्के वसन्तसेनाया औत्सुक्यं चारुदत्ताय तरलयति। मूलतोऽपि प्रावारकश्चारुदत्तमित्रेण जूर्णवृद्धेन तस्मै उपायनरूपेणादीयत। पश्चाद् वसन्तसेनां रदनिकेति चिन्तयन् स तस्या उपरिक्षिपति, सा च प्रेम्णातं परिदधाति। पुनः प्रावारकः तत्रैव तिष्ठति, काले च उपहाररूपेण कर्णपूरकं गच्छति।

पूर्वानुभूतविमोहनगन्धेनैव एव परिणाय वसन्तसेना कर्णपूरकात् इमं स्वयं गृह्णाति। वर्तते इयमेव सरसा कथा रत्नावल्या अपि। चारुदत्तपत्न्या धूतया स्वमातुः स्नेहोपहाररूपेणासौ लब्धा। रत्नावलीं तां सा पतिव्रता धूता चारुदत्तचारित्ररक्षणाय मैत्रेयद्वारा तं प्रति प्रहिणोति।

## कथावस्तुनः क्रमिकविकासः

कथावस्तुघटनायां कालान्तरे रत्नावली नायिकां वसन्तसेनां गच्छति। पुनश्च तथैव चारुदत्तं प्रत्यागच्छति। प्रथमत इयं (रत्नावली) धूतायाः पतिभक्ति प्रकटीकरोति। पुनश्च चारुदत्तस्य चारित्र्यं वसन्तसेनायाश्च प्रेम्णो विकासं प्रकटयति। वसन्तसेनायै च चारुदत्तदर्शनार्थं गमनायावसरं प्रददाति। अन्ते चेयं पञ्चमाङ्के चारुदत्त-वसन्तसेनयोः प्रेम्णः परिपाके तयोः संगमेन च साहाय्यं विदधाति।

प्रकरणे यद्यपि रत्नावली प्रावारकौ कथावस्तुनः विकासे, चारुदत्तवसन्तसेनयोः प्रेम्णः परिपाके तयोः संगमने च सहायकौ परं प्रथमाङ्के पुरःस्थापितसुवर्णभाण्डं तु दशमाङ्कं यावत् घटनानां कथावस्तुनश्च परिवर्तने विशेषेण महत्त्वपूर्णम्। सुवर्णभाण्डस्य न्यासः साभिप्रायः सकारणश्च। इदमेव व्याजेन वसन्तसेनायै पुनर्दर्शनायावसरं प्रयच्छति। तृतीयाङ्के च तस्यापहरणेन एकत्रैव बहूनां भावानामभिव्यक्तिर्जायते। चारुदत्तस्य औदार्यं, धूतायाः पतिभक्तिश्च प्रकाश्यते एतन्माध्यमेन। नूनम् इदमेव हि कारणमस्ति मदनिकाशर्विलकयोः संगमने। यतो हि तस्य प्रतिदानमेव मदनिकाया दास्यमोक्षे साधनभूतम्, प्रच्छन्नरूपेण तयोः सरसां वार्तां श्रुत्वैव वसन्तसेना मदनिकामूल्यत्वेन स्वीकरोति सेविकां तां प्रियेण संगन्तुं चानुमन्यते। इत्थमेकतः प्रियजनौ उदारतया संगमयति एतद्, अन्यतश्च वसन्तसेनायाः

चारुदत्तगतस्नेहं साधु द्रढयति । पञ्चमाङ्के वसन्तसेना तत् सुवर्णभाण्डं तथैव संदेश-पूर्वं तस्मै परावर्तयति । यदा नायकाय चारुदत्ताय तद् अद्भुतं रहस्यम् उद्घाटितं भवति, तथा सर्वेषु अमन्द आनन्दः प्रसरति वसन्तसेनाचारुदत्तयोः प्रेम्णः परिपाकश्च जायते प्रकरणेऽस्मिन् शूद्रकस्य ।

इत्थं प्रकरणस्य प्रथमार्धे इदं सुवर्णभाण्डमानन्दस्य अमन्दं स्रोतः प्रियजनयोश्च संगमनीयम् संलक्ष्यते । षष्ठाङ्कात् परं तस्य रूपे परिवर्तनं जायते, यदा भूषणानीमानि वसन्तसेनाया मातृत्वे बाधकानि संजातानि तदा सा इमानि शरीरापू दूरीकृत्य बालरोहसेनं प्रसादयितृकामा तस्मै सुवर्णशकटनिर्माणार्थमुदारतापूर्वकं प्रयच्छति । प्रत्यक्षमिमान्येव हृदयहारिसुवर्णाभूषणानि चारुदत्तस्य विपत्तिकारणानि । शकारः वसन्तसेनाम् उद्याने नृशंसमारयित्वा तदपराधं चारुदत्ते शाठ्येन समारोपयति । चारुदत्तस्य गृहात् तानि सुवर्णाभूषणानि गृहीत्वा वसन्तसेनागृहं प्रस्थितस्य मैत्रेयस्य कुक्षितः तेषामुपलब्धिः सर्वथाकस्मिकी, परं सा चारुदत्तं वसन्तसेनाया बधाय अपराधिनं कल्पयति । इत्थं सुवर्णभाण्डस्य घटना आदितोऽन्तं यावत् साभिप्राया विशेषेण महत्त्वपूर्णा च । महाकविः शूद्रकोऽस्याः अर्थवत्याः कलितकल्पनायाः कृते सुनरां प्रशंसार्होऽस्ति साहित्यमनीषिभिः । प्रकरणे संवाहककर्णपूरकशर्विलकानां चारुघटनाः शूद्रकेण साधिप्रायं नियोजिता इति तु स्पष्टमेव । परन्तु सूक्ष्मातिसूक्ष्मत्वेन प्रतीयमानानामपि घटनानां तत्रास्ति विशिष्टं महत्त्वम् । इदमेव महाकवेः शूद्रकस्य अनुपमेयं रचनाचातुर्यं, यत्र नास्ति किञ्चिदपि निरभिप्रायं निष्प्रयोजनं च । किमन्यत् पात्राणां भ्रान्तियोगोऽपि प्रकरणेऽस्मिन् न प्रयोजनरहितः । प्रथमाङ्के सकामः शकारो रदनिकां वसन्तसेनाभ्रान्त्या मदनपरवशत्वेन गृह्णाति, चारुदत्तश्च वसन्तसेनां रदनिकेति अभ्युपैति । परमुभयत्रापि भ्रमोऽयं फलावह एव । तृतीयाङ्के निद्रायमाणो मैत्रेयश्चौरं शर्विलक निजमित्रं कल्पयन सुन्दरं सुवर्णभाण्ड तस्मायर्पयति । आनुसंगिकी प्रवहणविपर्ययघटना तु विशेषेण वर्तते फलावहा । चारुदत्तस्य ध्यानम्, दर्दुरकस्य जर्जरपटाः प्रतिमाविरहितो देवालयः, संवाहकस्य नामारुधिरम् यज्ञोपवीतम्, गवाक्ष आर्यकस्य बन्धनश्रृङ्खला, प्रवहणस्यावगुण्ठितत्वम्, चन्दनकवीरकयोः कलहः, वसन्तसेनायाः शरीरे आभूषणानामभाव, शुष्कपर्णानि, सिक्तवस्त्राणि एतत्सर्वं श्रेष्ठरूपककारस्य शूद्रकस्य सिद्धहस्तत्वं नाट्यकौशलं चोद्घोषयति ।

## संकलनत्रय-समावेशः

प्रकरणे घटनाविषयकं वर्णनं संक्षेपेण परिसमाप्य सम्प्रत्यस्माभि; सङ्कलनत्रय (Three Unities)[1] विषये किञ्चिद् वक्तव्यमस्ति । सङ्कलनत्रयं हि

1. As for the three unities, the playwriter observes all of them (unity of place, unity of time and unity of plot.)
Keith, Sanskrit Drama, P. 137–138.

वस्तुसङ्कलनम् देशसङ्कलनम्, कालसङ्कलनम्, च । वस्तुत: इयं पाश्चात्यालोचनपद्धति: । अनया पद्धत्या बहूनि भारतीयनाटकानि सदोषाणि भविष्यन्ति, पर भारतीयाचार्याणां कृते सङ्कलनत्रयस्य न तावन्महत्त्वं यावद् सर्वातिशायिता रसस्य वर्तते । रसनिर्भरमानस: सहृदय: कालस्थलादिभेदं निरस्य रसयास्वादयन् तस्य परिपाकं प्रतीक्षमाण: समुत्सुक: तिष्ठति । यद्यपि सङ्कलनत्रयं न विशेषेण महत्त्वावहं भारतीयसमीक्षादृष्ट्या, तथापि मृच्छकटिकेऽस्य साभिप्रायं संयोजनं दृश्यते । अत एव केचन पाश्चात्यालोचका: प्रकरणमिदं ग्रीकप्रभावान्वितं मन्यन्ते । अत्र हि स्थलसङ्कलनं पूर्णरूपेण परिपालितमस्ति । सर्वा: घटना उज्जयिन्यामेव घटिता: भवन्ति । विशेषेण चारुदत्तवसन्तसेनयो: भवनं परितो निकषा वा, उज्जयिन्या राजमार्गे, पुष्करण्डकोद्याने, न्यायालये दक्षिणश्मशानभूमौ च कथावस्तुन: घटना घटिता: सन्ति । स्थलस्य सङ्कलनस्येयमेव प्रवृत्ति: शूद्रकम् आर्यकाहरणादिघटनानां बहिष्काराय प्रेरयति, अन्यच्च पाश्चात्यनाटकेष्विव संस्कृतनाटकेषु अङ्कानां दृश्येषु प्रविभागो न परिलक्ष्यते । अङ्कविशेषे घटितानां महत्त्वपूर्णदृश्यानां स्थानभेदो न विचार्यते । ज्ञायते पुरा ईदृशानां रङ्गस्थलानां निर्माणं भवतिस्म ये बहुषु भागेषु संविभक्ता आसन् यत्र च बहूनां दृश्यानां कालातिक्रमविनैव क्रमेण रूपकप्रदर्शनं सम्भाव्यतेस्म; येन खलु सहृदयदर्शकानां सरसचित्तेषु कथावस्तुन: यथातथामवगमने न किञ्चित काठिन्यं क्लेशो वाऽनुभूयेत । नि:सन्दिग्धं नाटककार-शूद्रकनिरूपितस्य स्थलसङ्कलनस्य संस्कृतनाटकसाहित्येऽद्वियीयं स्थानम् ।

महत्त्वपूर्णे कालसङ्कलनविषयेऽपि मृच्छकटिकमद्वितीयपदमधिरोहति । एतद्विषये भारतीयनाट्याचार्याणां मतानुसारेण यद्यङ्के सर्वदिवसावसानकार्यं नोपपद्यते तदा अङ्कच्छेदं कृत्वा तत् प्रवेशके विधेयम् । अन्यथा मासकृतं वर्षसञ्चितं वापि सर्वम् अङ्कच्छेदं कृत्वा कर्तव्यं वर्षादूर्ध्वं तु न क्वचित् । कर्तव्यम् । मृच्छकटिके नास्ति काऽप्यङ्को यत्र दिवसावसानकार्यं नोपपद्यते । न च शूद्रक: दीर्घकालव्यापिनीनां घटनानां प्रदर्शनेन द्वितीयं नियममतिक्रामति । वस्तुतस्तु प्रकरणस्यास्य सम्पूर्णवृत्तं चतुर्षु दिवसेष्वेव जायते । प्रकरणमृच्छकटिकस्य समयसंकेतानां विश्लेषणेनेदं सर्वं स्पष्टं भवति । श्री कीथरेडरप्रभृतिपाश्चात्यविदुषां महोदयानां मते तु सर्वमुत्तरार्धकार्यमेकस्मिन्नेव दिनेस घटते । तत्र तृतीयाङ्ककालस्य विषये विद्वत्सु तीव्रं वैमत्यमस्ति, केचन द्वितीयतृतीयाङ्कयोर्मध्ये पक्षरूपकालक्षेपं मन्यन्ते अन्ये च नेदं स्वीकुर्वन्ति । परं प्रबलप्रमाणाभावे निश्चयेनात्र न किञ्चिदपि वक्तुं शक्यते ।

प्रकरणे वस्तु-सङ्कलन-विषयेऽपि शूद्रकस्य कौशलं दरीदृश्यते । विविधसरसकथासूत्राण्यादाय एकस्मिन् प्रधानकथानके सर्वं स तथा सङ्ग्रथनाति, यथा सर्वाणि स्वकीयं पृथगस्तित्वं विहाय एकीभूतानि प्रत्यक्षीभवन्ति । चारुदत्तवसन्त-

सेनाप्रेमविषयकप्रधानकथानके संवाहकशर्विलककर्णपूरककथानकानां संग्रथनं सप्रयोजनमिति तु स्पष्टमेव । परन्तु प्रधानप्रेमपूर्ण कथानकगौणराज्यद्रोहकथानकयोरपि परस्परम् आन्तरिकः सम्बन्धः संलक्ष्यते प्रकरणेऽस्मिन् सरसे । एकस्य साफल्ये अन्यस्य स्थितिः अपरिहार्या इति समीक्षकैः अस्वीकर्तुं न शक्यते । येषां मते कथानकयोः परस्परं निरपेक्ष भावत्वात् नाट्यद्वयस्यात्र सामग्रीति, तन्न युक्तम् प्रतिभाति । यतो हि तत्र न निरपेक्षत्वमपितु सर्वतोभावेन सापेक्षत्वमेव संलक्ष्यते । न केवलमुत्तरार्धेऽपि प्रकरणस्य प्रथमार्धेऽपि वयं राज्यविद्रोहस्य विषये विविधसङ्केतान् प्राप्नुमः । द्वितीयाङ्के दर्दुरककथने चतुर्थाङ्के शर्विलककथने, एवमेव चतुर्थषष्ठाङ्कयोः आर्यकस्य बन्धपलायन घटनयोः राज्यद्रोहकथावस्तुनः पूर्वसंकेतः स्पष्टतया सम्प्राप्यते एव सरसे प्रकरणेऽस्मिन्, परं धन्यं महाकवेः शूद्रकस्य रचनाचातुर्यं यत् द्वयोरपि कथानकयोः सममेव युक्तियुक्त उपसंहारः दर्शितः । ततोऽप्यधिकं गौणकथावस्तुनः कुत्रापि प्रकरणेऽस्मिन् प्रभुत्वं न परिलक्ष्यते, अपितु तत् प्रधानकथानके एव अन्तर्हितो भवति । आर्यकापहरणवृत्तान्तं विना नायकस्य चारुदत्तस्य तन्माहात्म्यं न सम्भाव्यते यत् शूद्रकस्य नाट्यकौशलेन तेनार्जितम् । सर्वदा परेषां परोपकारदत्तचित्तः निर्धनश्चारुदत्तः धनाभावेन न किञ्चिदपि परोपकारं कर्तुं शक्नोति परं हृदयं तु तस्य महात्मनः परोपकाराय व्याकुलं भवति सर्वदा । आर्यकवृत्तान्तः तस्य स्वमनोरथस्य पूर्तौ सुतरां सहायः संलक्ष्यते । अस्माकं सामान्यसम्मानभावः चारुदत्तं प्रति विशेषेण वर्धते, यदा वयं तं संकटसंभवेऽपि विपिन्नमार्यकं स्वप्रवहणग्रहणाय विवशं कुर्वन्तं पश्यामः । अधिकरणेऽपि स आर्यकस्य विपत्तिभयात् स्वजीवनसंकटेऽपि न तन्नामसङ्कीर्तनं करोति । अनेनैव चारुदत्तगौरवस्योत्कर्षो संजायते । स्नेहकर्तव्ययोः संघर्षे कर्तव्यमेव विजयते । मानवत्वं च महीतले महीयत ।

## चरित्रचित्रणे नैपुण्यम्

प्रकरणस्य पात्राणां चरित्रचित्रणे महाकविः शूद्रकः अतिशयेन प्रशंसनीयं साफल्यं प्राप्नोति । तत्रापि नगरश्रीर्वसन्तसेना शीलनैपुण्य-दाक्षिण्यादिभिः स्पृहणीयं-गृहिणीपदं लभते । साधुकल्पवृक्षः चारुदत्तः यो जीवितसङ्कटेनापि चारित्र्यं रक्षन् मानवानामादर्शभूतः, क्रूरकर्मनिरतः नृशंसतायाः फलहीनवृक्षः शकारः योऽन्ते स्वकर्मफलं भुङ्क्ते, कर्त्तव्यपरायणः स्वाभिमानी सत्प्रणयी सुहृत् कर्मनिष्ठः शर्विलकः, कृतज्ञः शाक्य-श्रमणः, संवाहकः, विदग्धः, विनोदी, सर्वकालसुहृत् मैत्रेयः, कार्यनिष्ठः विटः, आत्मगौरवशाली स्पष्टवादी धर्मशील: चेटः स्थावरकः, परहृदयग्रहणपण्डिता वारवधूः, विश्वस्ता सेविका मदनिकाः, पतिव्रता सद्गृहिणी, वात्सल्यमयी माता धूता, स्पृहणीयबालस्वभावो रोहसेनः + एते सर्वे संभूय श्रेष्ठं प्रकरणमिदं लोकहृदयग्राहिपदे प्रतिष्ठापयन्ति । महाकविः शूद्रकः यया सूक्ष्मेक्षिकया

प्रधानपात्राणां चित्रणं करोति तथैव गौणपात्राणामपि सावधानतया चित्रणं करोत्येव ।

अतएव महाकवेः शूद्रकस्य साधारणात् साधारणं पात्राण्यपि नोपेक्षणीयानि। सर्वत्रैव शूद्रकस्य चरित्र-चित्रणचातुर्यं सुतरां परिस्फुरतीव सरससामाजिकानां मनःसु ।

## पात्रानुसारिनाट्यनिर्देशनम्

सामान्यतः संस्कृत-नाट्य-ग्रन्थेषु असूचितपात्रस्य प्रवेशो नैव युज्यते। प्रकरणेऽस्मिन् मृच्छकटिकेऽपि पात्राणां प्रवेशः पूर्वसूचना पूर्वकमेव क्रियते । प्रायेण तत्रैव प्रविश्यमानपात्रस्य विस्तृतः परिचयोऽपि दीयते । नाट्यसङ्केतेषु प्रायेण 'निष्क्रम्य', 'पुनः प्रविश्य', 'नाट्येन प्रविश्य' इत्यादीनां निर्देशात्मकः प्रयोगः क्रियते। इमे निर्देशात्मकाः सङ्केताः प्रायेण सर्वेषु संस्कृत-नाटकेषूपलभ्यन्ते । कदाचित् पात्रस्य प्रवेशः 'नेपथ्ये' इति सङ्केतेन क्रियते ।

## हास्यरसोत्कर्षः

यद्यपि साहित्य-समीक्षा-लोके शब्दसाम्यवशाद् हासे भासस्यैव प्रसिद्धिः, परं वस्तुतः हासस्य यावानुत्कर्षः मृच्छकटिके प्रकरणे तावान् विरल एवान्यत्र,[1] तत्र हास-परिहास-प्रहास-मृदुहास-अट्टहासेसि, सर्वविधहासानां मनोहरं प्रदर्शनं जायते । व्यङ्ग्यविनोदवाक्यान्यपि यत्र तत्र प्रकरणे दृष्टिपथमुपयान्ति । मृच्छकटिके हासस्योत्पत्तिः पात्रस्थिति–श्लेष–विचित्र–प्रश्नोत्तरादितो जायते। शकारमैत्रेयोः महाकवेः शूद्रकस्य प्रियहास्यपात्रे । तैश्च बहुविधमनोविकासिहास उद्भाव्यते। शकारस्य हासः प्रथमं विनोदं जनयति परं शनैः-शनैः प्रसरन्नन्ते विकृतिमाप्नोति परं मैत्रेयस्य हासः सर्वथा शुद्ध एव, प्रथमाङ्के शकारेण सह तस्य प्रश्नोत्तरम् विशिष्टाकृतिमयः शब्दानामव्यवस्था–यथा "किं भणसि चौरं कर्तयित्वा सन्धिर्निष्क्रान्तः ?" इत्यादि सर्वथा सुष्ठु हास्योत्पादकम् । स्वस्य ताडितगर्दभेन, गणिकायाः पादुकान्तरप्रविष्टया लोष्टिकया, गायकस्य शब्दसुमनोदामवेष्टितवृद्धपुरोहितेन सह तेन प्रदर्शित साम्यं कस्य सहृदयस्य हास्यं न जनयेत् ।

इत्थमेव नास्ति अवस्थागतः हासोऽपि सरसे प्रकरणेऽस्मिन् न्यूनः। संवाहकस्य पृष्ठतः प्रतिमाशून्यमन्दिरेऽपसरणं, तत्र आत्मनः प्रतिमास्थाने प्रतिष्ठापनं, अन्यद्यूतकरैस्तस्य रहस्योपलब्धिः, तत्रैव द्यूतक्रीडाया आरम्भः अन्ते च बलात् संवाहकस्य हास्यं सर्व स्वाभाविकमेव। तथैव च दर्दुरकस्य विवशत्वात् माथुरकस्य

---

1. द्रष्टव्यो लेखकस्य शोधलेखः "मृच्छकटिकेहास्यरसस्यवैचित्र्यम्" सागरिका–27/4, वि० सं० 2046, वर्षीयाङ्कः, पृ० 27–34 ।

अक्ष्णोर्धूल्युत्क्षेपणम् । चन्दनकवीरकविवादेऽपि तथैवो मनोरञ्जकः प्रकरणे प्रश्नोत्तररूपेण मैत्रेयशकारयोः मैत्रेयकुम्भीलकयोः अथवा शकारविटयोः, शकार-भिक्षुकयोः शकारचेटयोश्च अथवा चारुदत्तशर्विलकयोः सम्भाषणान्यत्र विशेषे-णोल्लेखमर्हति ।

## पंचसन्धीनां सम्यक् समावेशः

सुदीर्घ-संस्कृत–नाट्यपरम्परानुसारेण प्रकरणेऽस्मिन् पञ्चसन्धीनां समीचीनो निर्वाहः संलक्ष्यते सर्वत्र । प्रथमाङ्के मुखसन्धिः द्वितीयात् चतुर्थपर्यन्तं प्रति मुखसन्धिः, पञ्चमे गर्भसन्धिः षष्ठात् नवमाङ्कपर्यन्तं विमर्शसन्धिः, दशमे च निर्वहणसन्धिरिति पञ्चसन्धीनां तत्र शोभनक्रमः वर्तते प्रकरणेऽस्मिन् ।

## काव्यात्मक-नाट्यकौशलम्

प्रकरणकृतः महाकवेः शूद्रकस्य काव्यप्रतिभापि तथैव चारुतया दीव्यति यथा तस्य नाट्यकौशलम् । विविधच्छन्दोलङ्काराणां प्रयोगः परमसाफल्येन तेन क्रियते । मृच्छकटिकस्य उत्कृष्ट काव्यसौन्दर्यं दृष्ट्वा रेडर (Ryder) महोदयस्तु इदं प्रकरण काव्यमेव स्वीकर्तुंमना प्रतीयते । अत्यन्तहृदयग्राहिणी हि महाकवेः शूद्रकस्यवर्णनापद्धतिः ।

यथा हि दारिद्र्यवर्णने–

दारिद्र्यात्पुरुषस्य बान्धवजनो वाक्ये न संतिष्ठते,
सुस्निग्धा विमुखीभवन्ति सुहृदः स्फारीभवन्त्यापदः ।
सत्त्वं ह्रासमुपैति शीलशशिनः कान्तिः परिम्लायते,
पापं कर्म च यत्परैरपि कृतं तत्तस्य संभाव्यते ।।

मृच्छ० 1/36

चेतोहारिचन्द्रोदयवर्णने यथा–

उदयति हि शशाङ्कः कामिनीगण्डपाण्डुः
ग्रहगणपरिवारो राजमार्गप्रदीपः ।
तिमिर-निकरमध्ये रश्मयो यस्य गौराः
स्नुतजल इव पङ्के क्षीरधाराः पतन्ति ।।

(मृच्छ० 1/57)

कामोद्दीपके सुरम्यवृष्टिवर्णने यथा–

एता निषिक्तरजतद्रवसंनिकाशा
धारा-जवेन पतिता जलदोदरेभ्यः ।
विद्युत्प्रदीप-शिखया क्षणनष्टदृष्टा
श्छिन्ना इवाम्बरपटस्य दशाः पतन्ति ।।

(मृच्छ० 5/4)

## रसनिष्पत्तिचारुता

रसनिरूपणेऽपि शूद्रकस्यैतादृशमेव कौशलम्। करुणस्य निरूपणे नैपुण्यं पश्यन्तु सुधियः प्रकरणेऽस्मिन्।

दाक्षिण्योदकवाहिनी विगलिता याता स्वदेशं रतिः
हा ! हालंकृतभूषणे सुवदने व्रीडारसोद्भासिनि।
हा सौजन्यनदि प्रहासपुलिने हा मादृशामाश्रये
हा हा नश्यति मन्मथस्य विपणिः सौभाग्यपण्याकरः॥

(मृच्छ॰ 8/38)

तथा च दारिद्र्यवर्णने दर्शयति कारुण्यं महाकविः

सुखं हि दुःखान्यनुभूय शोभते घनान्धकारेष्विव दीपदर्शनम्।
सुखात्तु यो याति नरो दरिद्रतां धृतः शरीरेण मृतः स जीवति॥

(मृच्छ॰ 1/10)

## उपसंहारः

महनीयं मृच्छकटिकं नाम तादृशं प्रकरणरत्नं, यत्र समाजस्य साक्षाद्यथायथं चित्रणमस्ति। अनेन हेतुना, घटना–घटन–पाटवेन, पात्रचरित्रवैचित्र्येण, हासादिना मनोरञ्जकत्वेन, संशय (Suspense) बाहुल्येन चान्यैश्च गुणगणैरियं श्रेष्ठरचना संस्कृत-नाट्यवाङ्मयमूर्धाभिषिक्तं स्थानं लब्ध्वा तद्रचयितुः महाकवेः शूद्रकस्य सुयशो दिक्षु विदिक्षु च प्रख्यापयतीतिशम्।[1]

**लेखसन्दर्भाः**

1. मृच्छकटिकम् 5/15

मूढे ! निरन्तरपयोधरया मयैव,
कान्तः सहाभिरमते यदि किं तवात्र ?
मां गर्जितैरति मुहुर्विनिवारयन्ती
मार्गं रुणद्धि कुपितेव निशासपत्नी।
एतैरेव यदा गजेन्द्रमलिनैराध्यातलम्बोदरै-
गर्जद्भिः सतडित्वलाकशबलैर्मेघैः सशल्यं मनः।
तत् किं प्रोषितभर्तृबध्यपटहो, हा हा हताशो वकः,
प्रावट्प्रावृडिति ब्रवीति शठधीः क्षारं क्षते प्रक्षिपन्।

---

1. लेखकस्य विस्तृत शोधलेखोऽस्मिनविषये द्रष्टव्यः सागरिकायाः 25/4, 26/1 (रजतजयन्ती विशेषाङ्कः), वि॰ सं॰ 2044, सागरम् वाराणसी।

यदि गर्जति वारिधरो गर्जतु तन्नाम निष्ठुराः पुरुषाः ।
अयि विद्युत् प्रमदानां त्वमपि च दुःखं न जानासि ॥

मृच्छ० 5/18

भो मेघ गम्भीरतरं नद त्वं तव प्रसादात् स्मरपीडितं मे ।
संस्पर्शरोमाञ्चितजातरागं कदम्बपुष्पत्वमुपैति गात्रम् ॥

मृच्छ० 5/47

धन्यानि तेषां खलु जीवितानि ये कामिनीनां गृहमागतानाम् ।
आर्द्राणि मेघोदकशीतलानि गात्राणि गात्रेषु परिष्वजन्ति ॥

मृच्छ० 5/49

२. एतत्तु मां दहति ·····करिणः कपोलम् ।

मृच्छ० 1/12

सत्यं न मे विभवनाशकृताऽस्ति चिन्ता···

मृच्छ० 1/13

दारिद्रयात् पुरुषस्य····सम्भाव्यते ।

मृच्छ० 1/36

३. शूद्रकः—पं० चन्द्रबली पाण्डेयः (इदं तन्नाटकं यत् स्वर्णे नैवाऽपि तु शीले प्रचलति । अनेनेदं स्वपृथक्चरित्रं निर्माति) । पृ० 67

महाकविः शूद्रकः—डॉ० रमाशंकर : त्रिपाठी (मृच्छकटिकस्य व्यञ्जनापूर्णमभिधानम्) पृ० 350

मृच्छकटिक भूमिका—डा० रांगेय राघव, पृ० 12-13

संस्कृत ड्रामा—कीथ—The claim, however, can hardly be admitted. The Mricchakatikam as a whole is a drama redolent of Indian thought and life and none of the three characters adduced have any special claim to be more eosmopolitan some of the creations of Kalidasa. P. 138-139

Ryder, The little clay cart P. XVI

४: तथा अस्मात् पूर्वं मैत्रेयकथनम्—वयस्य मा मैवम् ।
गृहस्थस्य नित्योऽयं विधिः—
तपसा मनसा वाग्भिः पूजिता बलिकर्मभिः ।
तुष्यन्ति शमिनां नित्यं देवताः किं विचारितैः ॥

मृच्छ० 1/16

५. न भीतो मरणादस्मि केवलं दूषितं मनः ।
विशुद्धस्य हि मे मृत्युः पुत्रजन्मसमोभवेत् ।।

मृच्छ० 10/27

६. गुणप्रवालं विनयप्रशाखं विश्रम्भमूलं महनीय-पुष्पम् ।
तं साधुवृक्षं स्यगुणैः फलाढ्यं सुहृद्विहंगाः सुखमाश्रयन्ति ।।

मृच्छ० 4/32

घोणोन्नतं मुखमपाङ्गविशालनेत्रं···विजहाति वृत्तम् ।

मृच्छ० 9/16

७. दीनानां कल्पवृक्षः स्वगुणफलनतः···चान्ये ।
छायार्थं ग्रीष्मसन्तप्तो····पत्रैः शाखा वियोजिता ।

मृच्छ० 4/18

८. अयं हि पातकी विप्रो न वध्यो मनुरब्रवीत् राष्ट्रादस्मात्तु
निर्वास्यो विभवैरक्षतैः सह ।

मृच्छ० 9/39

शून्यमपुत्रस्य गृहं, चिरशून्यं नास्ति यस्य सन्मित्रम् ।
मूर्खस्य दिशः शून्याः सर्वं शून्यं दरिद्रस्य ।।

मृच्छ० 1/8

आलाने गृह्यते हस्तो, वाजी वल्गासु गृह्यते ।
हृदये गृह्यते नारी, यदीदं नास्ति गम्यताम् ।।

मृच्छ० 1/50

९. द्रष्टव्यम्—नाट्यशास्त्रोयानुसन्धानम्, डा० रामजी उपाध्यायः, वाराणसी, प्रथम संस्करण, नाटक समीक्षा—डॉ० इन्द्रपाल सिंह इन्द्रः, कानपुर १९७७ । पृ० ११०-१४९

The play rich in its poetry, its verses in number of metres and embellished with number of figures of speech lend charm to it (Samsk. Drama. P. 137) □

# मृच्छकटिके हास्यरसस्य वैचित्र्यम्

सामान्यत: मृच्छकटिकप्रभृतिसंस्कृतरूपकेषु हास्यरसस्य यत्र-तत्र शोभना निष्पत्तिरवलोक्यते। हास्यरसोऽयं द्विविधो वर्तते—आत्मस्थ: परस्थश्च। नाट्यशास्त्रकारभर[1]तानुसारेण यदाभिनेता स्वयं हसति, तदात्मस्थ:। यदा तु परं हासयति तदा परस्थो हास्य: ज्ञेय:। डॉ० रामजी उपाध्या[2]यमतानुसारं संस्कृतरूपकेषु सामान्यत: परस्थो हास्यो भृशायते। अतएव प्रहसनादिरूपकेषु रंगपीठे पात्राणि स्वयं न हसित्वा स्वकीयविकृतवेशालंकारधार्ष्ट्यलौल्यकुहकासत्प्रलापव्यंग्यदर्शनदोषोदाहरणादिभि: सामाजिकान् प्रेक्षकान् वा हासयन्ति। भरतो हास्यरसमेवं परिचाययति नाट्यशास्त्रे—

"विकृताचारैर्वाक्यैरङ्गविकारैश्च विकृतवेशैश्च।
हासयति जनं यस्मात्तरस्माज्ज्ञेयो रसो हास्य:॥"

(ना० शा० 6/50)

पाश्चत्त्यविचारकारस्तूमहोदयोऽपि काव्यं (नाट्यकथावस्तु वा) गम्भीरं हास्यात्मकं च द्विविधं मनुते। हास्योत्पत्तये निम्नतरजनाना[3]माचरणप्रदर्शनं प्रभापूर्णं परिलक्ष्यते। मृच्छकटिकश्रृतिसंस्कृतरूपकेषु हास्यरसस्य विस्तारो भूयो भूयो विलसति, यथा नाट्यशास्त्रकारो भरतो निर्दिशति—

(अ) श्रृंगाराद् हि भवेत् हास्य:।(ना० शा० 6/39)

(ब) श्रृंगारानुकृतिर्या तु स हास्यस्तु प्रकीर्तित:।

(ना० शा० 6/40)

भरतमान्यतातिरिक्तं नाट्यशास्त्रटीकाकारोऽभिनवगुप्ताचार्य: एवं विचारयति विषयेऽस्मिन्—

(अ) करुणाद्याभासेस्वपि हास्यत्वं सर्वेषु मन्तव्यम्। अनौचित्यप्रवृत्तिकृतमेव हि हास्यविभावत्वमववेयम्।

---

1. नाट्यशास्त्रम् 6/48–49।
2. नाट्यशास्त्रीयानुसन्धानम्, वाराणसी, सं० 2041 वि०, पृ० 445।
3. अभिनवनाट्यशास्त्रम् पं० सीतारामचतुर्वेदी, काशी, सं० 2008, पृ० 108 (प्रथम भागे;)।

(ब) शान्तभासो हास्य एव प्रहसनरूप: ।

(1) श्रृंगारमूलकहास्यरसवैचित्र्यं–मृच्छकटिकेऽनेकस्थलेषु विलसति । यथा–प्रतिमुखसन्धिमध्ये रदनिकां प्रति विदूषकस्य श्रृंगारजन्यहास्यरससमन्वित: संवादो: विचारितोऽस्ति डॉ० एस० एन० शास्त्रिणाप्येवम्–

Joke (Narma) a humorous speech presents the feature of Narma in Pratimukh Sandhi as available copiouslo in the jestar's remarks to Radanika in the third act of Mricchakatika-[1]

पाश्चात्यविद्वान् ए० मैक्डॉन[2]लमहोदयोऽपि प्रकारान्तरेण श्रृंगारमूलकं हास्यरसमेवं प्रतिपादयति । तदीयावधारणाऽस्ति यत् नायकनायिकयो: गहननिराशावसरे हास्यरसस्य भूमिका महत्त्वपूर्णा भवति विदूषकमाध्यमेन । विदूषक[3]स्तुमृच्छकटिके हास्यरसस्य प्रधान उन्नायक: स्वरूपेण, नेपथ्येन, वचसा, कर्मणा च नाट्यशास्त्रदृष्ट्या । विदूषकस्य श्रृंगारमूलकस्य श्रेष्ठहास्यस्य निदर्शनं नितान्तं वैचित्र्यपूर्णमस्मिन् संवादे–

"युष्माकं खलु प्रेमनिर्मलजले मदनसमुद्रे स्तननितम्बजघनान्येव पानपात्राणि मनोहराणि ।" (मृच्छकटिकम्, पृ० 182) एवं श्रृंगारजन्योऽपरविचित्रोहास्यरसोऽनुशीलनीयोऽस्ति पद्येऽस्मिन्–

परगृहललिता: परान्नपुष्टा: परपुरुषैर्जनिता पराङ्गनासु ।
परधननिरता गुणेष्ववाच्या गजकलभा इव बन्धुला ललाम: ।।

(मृच्छ० 4/28)

(2) विभिन्नपात्रप्रयुक्तहास्यस्य वैचित्र्यम्–न केवलं विदूषको मृच्छकटिके हास्यरसस्य वैचित्र्यपूर्णां सृष्टिं करोति, अपि तु सूत्रधारशकार-चेट-माथुर-द्यूतकार-

---

1. The Laws and Practice of Sanskrit Drama, Vol I, Varanasi, 1947, P. 112.
2. In the Sanskrit Drama the jester usually plays a prominent part, while his hero and heroine are often in the depths of despair. The character of the विदूषक too is a close parallel to the fool in Shakespeare A History of Skt. Literature. 1966, P. 294–296.
3. "विकृतांगवचोवेशैर्हास्यकारी विदूषक: ।"
कुसुमवसन्ताद्यभिध: कर्मवपुर्वेषभाषाद्यै: ।
हास्यकर: कलहरतिर्विदूषक: स्याद् स्वकर्मज्ञ: ।। (साहित्यदर्पणम्)

शर्विलकाद्यनेकपात्राण्यपि प्रकरणेऽस्मिन् स्थले-स्थले सुन्दरहास्यरसस्य वैचित्र्यं व्यक्तीकुर्वन्ति। नीचपात्राणामपि विकृतभाषामयसंवादोऽपि विचित्रं हास्यरसं प्रस्तौति। यथा पंचमाङ्के चेटविदूषकयोः संवादे विकृतशब्दमयभाषाप्रयोगो यदा चेटः[1] वसन्तसेनां 'सेनावसन्ते' इति सम्बोधयति, तदा हास्यरसस्य चारुतानुभूयते।

माथुरस्यापि शृंगारमूलकविचित्रहास्यरसोऽत्रास्वादनीयः—

कस्य त्वं तनुमध्ये, अधरेण रतदष्टदुर्विनीतेन।
जल्पसि मनोहरवचनमालोकयन्ती कटाक्षेण॥

(मृच्छ० 2/16)

पापिनो नृशंसस्य शकारस्य कथनमिदं कीदृशं विचित्रहास्यजनकमस्ति नवमाङ्के—

"स्नातोऽहं सलिल जलैः पानीयैरुद्यान उपवनकानने निरूपणः।
नारीभिः सह युवतीभिः स्त्रीभिर्गन्धर्वैः सुविहितैरङ्गकैः॥"

(मृच्छ० 9/1)

प्रकरणेऽस्मिन् पात्राणां पौराणिकतथ्याज्ञानताऽपि प्रभूतं विचित्रहास्यरसम् उत्पादयति। यथा शकारः स्वकीयपौराणिकाज्ञानमेवं प्रकटीकरोति पद्येऽस्मिन्। येन विचित्रहास्यरानुभूतिर्भवति सहृदयहृदयेषु—

चाणक्येन यथा सीता मारिता भारतयुगे
एवं त्वां मोटयिष्यामि जटायुरिव द्रौपदीम्॥"

(मृच्छ० 8/35)

ईदृशानां हास्यरसजनकविभिन्नपत्राणां कालप्रकृतिगतभिन्नतादि, विषये विचारयन् विद्वद्वर्यः श्री एस० एन० शास्त्री सत्यमेव कथयति—

"Yet a humorous character may be a high personage at times, a middling or a base person. The mode of expressing humour is, therefore bound to differ in nature." The Laws and Eractice of Sanskrit Drama, P. 283.

(3) प्राणिनां प्रवृत्तिगतहास्यरसस्य वैचित्र्यम्—प्रकरणेऽस्मिन् विविध-प्राणिनां प्रवृत्तिगतहास्यरसस्य वैचित्र्यमवलोक्यते यथास्थानं संवादेषु। यथा

---

1. चेष्टोऽपि विदूषक इव हासयति सामाजिकान् एभिर्वचनैः—
वंशं वादयामि सप्तच्छिद्रं सुशब्दं, वीणां वादयामि सप्ततंत्री नदन्तीम्।
गीतं गायामि गर्दभस्यानुरूपं, को मे गाने तुम्बरुर्नारदो वा॥
(मृच्छ० 2/12)

विदूषक: स्वकीयसंवादे शृंगालानां[1] प्रचुरमांसभक्षणप्रवृत्ति प्रकटयति एवम्—"विदूषक: दास्या: पुत्रि, वरमीदृश: शूनपीनजठरो मृत एव"—

सीधुसुरासवमत्ता एतावदवस्थां गता हि माता ।
यदि म्रियतेऽत्र माता भवति शृगालसहस्रपर्याप्ता ।।
(मृच्छ० 4/30)

क्षुधितकृष्णसर्पाणां प्रवृत्ति: सामान्यत: मण्डूकमूषकभक्षणे भवति । विदूषकस्य संवादेऽस्मिन् कालसर्पाणां मण्डूक भक्षणप्रवृत्या विचित्रहास्यस्य सृष्टिर्भवति एवम् "विदूषक—तस्मान्मण्डूकलुब्धस्य कालसर्पस्य मूषिक इवाभिपततो बहव इदानीं भविष्यामि । त्वमिह उपविष्ट: किं करिष्यसि ?" (मृच्छ०, पृ० 22)

गर्दभकुक्कुराणां प्रवृत्तिरियमपि पर्याप्तहास्यरसोत्पादिका शकारस्य संवादेऽस्मिन् यदा शकार: कथयति विचित्रं हास्यरसमुत्पादयन्—

एवं दूरमतिक्रान्त उद्दाम इव गर्दभ: ।
आनीत: खल्वहं बद्ध: कुक्कुरोऽन्य: इव दुष्कर: ।।
(मृच्छ० 10/53)

एवं मृच्छकटिके नैकप्राणिनां विचित्रचेष्टाप्रवृत्तिभिरसाधारणहास्यरसस्य सृष्टिर्भवति सामाजिकहृदयेसु विचित्रसंवादै: । विटप्रभृति पात्राणां मूर्खतापूर्ण विचित्रभाषावेष-कार्यादि प्रवृत्तिरपि हास्यरसोत्पादिका ।

(4) **सामाजिकानामाजीविकभाषया हास्यरसस्य वैचित्र्यम्**—प्रकरणे प्रयुक्तया सामाजिकानामाजीविका विषयकविशिष्टभाषयाऽपि विचित्रहास्यरस: प्रादुर्भवति । समाजे द्यूतकाराणां[2] व्यावसायिकी विशिष्टभाषा प्रकरणेऽस्मिन् प्रेक्षकान् हास-

---

1. शकारस्य संवादेऽस्मिन्नपि शृंगलानां मृतपुरुषमांसभक्षणप्रवृत्त्या विचित्रहास्यरसस्य शोभना निष्पत्तिर्भवति—

यत् चुम्बितमम्बिका मातृभिर्गतं न देवानामपि यत् प्रणामम् ।
तत्पातितं पादतलेन मुण्ड वने शृगालेन यथा मृताङ्गम् ।।
(मृच्छ० 819)

सामान्यप्राणिनां मांसभक्षणे लुब्धवृत्तिरेवं विचित्रहास्यं जनयति—

यदीच्छसि लम्बदशा विशालं प्रावारकं सूत्रशतैर्युक्तम् ।
कर्तुं चुह्न चुह्न चुह्न चुह्न इति ।। (मृच्छ० 8।22)

मांसं च खादितुं तथा तुष्टिं किं सशक्रो बालिपुत्रो महेन्द्रो रम्भापुत्र: । मृच्छ०

2. द्यूतकाराणां परस्परकलहेन कीदृशमेषां हास्यजनकस्थितिर्जायतेऽस्मिन् संवादेऽत्र माथुर: प्रकटयति—माथुर:—तस्य द्यूतकरय मुष्टिप्रहारेण नासिका भग्नाऽऽसीत् । तदेहि रुधिरप्रवाहः सरति । (मृच्छ० द्वितीयांके, पृ० 88)

यत्येव। यथा–"नवबन्धनमुक्तयेव गर्दभ्या ताडितोऽस्मि गर्दभ्या।" (मृच्छ० 2।2) गर्दभी पशुविशेष एवेति प्रेक्षका जानन्ति, किन्तु अत्र गर्दभी 'वराटिका' नामेति द्यूतकराणां बोधनीया भाषा। अत्यच्च दर्दुरकस्यापि वचनं हास्यं जनयति–

'त्रेता हृतसर्वस्वः पावकपतनाच्च शोषितशरीरः।
नर्दितदर्शितमार्गः कटेन विनिपातितो यामि॥" (मृच्छ० 2।9)

एवमेवेमानि शर्विलकस्य[1] चोरोचितनमस्कारवचनानि विचित्रहास्याय सन्ति–

'नमो वरदाय कुमारकार्तिकेयाय, नमः कनकशक्तये ब्रह्मण्यदेवाय। देवव्रताय, नमो भास्करनन्दिने, नमो योगाचार्याय, यस्याहं प्रथमः शिष्यः॥'

व्यापारिणां भाषामाध्यमेनापि विचित्रहास्यरसोऽत्रानुभूयते प्रेक्षकैः–

विदूषकः–इदानीं विक्रीतपण्य इव वणिक् अहं सुखं स्वप्स्यामि।

शर्विलकः–महाब्राह्मण! स्वपिहि वर्षशतम्! कष्टमेव मदनिका गणिकार्थे ब्राह्मण-कुलं तमसि पातितम्।" (मृच्छ० तृतीयाङ्के, पृ० 165)

विदूषकं प्रति चारुदत्तस्यापि व्यापारिकविषयवचनमिदं सुन्दरं हास्यं जनयति। तद् यथा–

"वणिज इव भान्ति तरवः पण्यानीव स्थितानि कुसुमानि।
शुल्कमिव साधयन्तो मधुकरपुरुषाः प्रविचरन्ति॥" (मृच्छ० 7/1)

एवं भिक्षुणां भाषाऽपि हास्यकारिणी भवति मृच्छकटिके। यथा–

शिल मुंडिदे तुंड मुंडिदे चित्तण मुंडिद कीश मुंडिदे।
जाह उण अ चित्त मुंडिदे शाहु शुहु शिल ताह मुंडिदे॥ (मृच्छ० 8/3)

(5) **विविधरूपैर्हास्यरसस्य वैचित्र्यम्**–प्रकरणेऽस्मिन् विविधरूपैरपि हास्य-रसस्य विचित्रानुभूतिर्भवति प्रेक्षकानां। क्वचिच्छकारस्य ग्रामभाषया, मूर्खतया, विषमकार्य[2]पद्धत्या च, क्वचिद्दर्दुरकप्रभृति पात्राणां पारुष्येण[3], (विनाकारणं

1. शार्विलकोऽपि विदूषक इव स्वाचारविचारविचित्रभाषाभिर्हासयति प्रेक्षकान् यथा–"मार्जारःक्रमेण मृगः प्रसरणे श्येनो ग्रहालुञ्चने। (मृच्छ० 3।20)
2. शकारः–"शृणुभाव! एषा वसन्तसेना मां श्रान्तोऽसीति भणति।" (सुणाहि भावे। एशा वसन्त०···) "शृणोमि गन्धं श्रवणाभ्याम्।" अन्धकारपूरिताभ्यां नासापुटाभ्यां सुष्ठु न पश्यामि। मम वशमनुयाता रावणस्येव कुन्ती। (मृ० 1।21), द्रौपदीव पलायसे रामभीता। मृ० 1।25 अश्वत्थामा धर्मपुत्रो जटायुः। (मृ० 147), केशवृन्दे परामृष्टा चाणक्येनेव द्रौपदी। (मृ० 1।49) शकारः–नथा कर्दमं प्रक्षिपतु, यथा पानीयं पंकाविलं न भवति। अथवा पानीयं पुंजीकृत्य कर्दमे क्षिपतु मृ० अष्टमाङ्के।
3. मृच्छकटिके द्वितीयाङ्के माथुरः संवाहकमाकृष्य घोणायां मुष्टिप्रहारं ददाति, (पृ० 116–120) एवं षष्ठांके चन्दनकः–"शीर्णशिलातलहस्तः पुरुषाणां कूर्चग्रन्थिसंस्थापनः ... [illegible] ... सेनापतिर्जाता॥ (मृच्छ० 6।22)

ताडनेन रोषभाषणेन वा) क्वचिन्नेपथ्यवैरूप्यात्[1], क्वचिद्युक्तियुक्तप्रलापेन[2], क्वचिन्मिथ्या[3]भाषणेन, क्वचिदज्ञानवशाद् भाषणेन क्वचिदनुक्रोशानर्हेऽप्यनुक्रोशेन[4], क्वचित् कुकाब्येन[5], क्वचित् प्रकृतेरस्थैर्येण[6] चादिविविधरूपैरस्मिन् प्रकरणे हास्यरसस्य वैचित्र्यमवलोक्यते ।

समीक्षा–मृच्छकटिकस्य हास्यरसे वस्तुतः वैचित्र्यमेव परिलक्ष्यते । हास्यरसोऽयं विभिन्नास्ववस्थास्वस्विपि विभिन्नेनैव भावेन[7] व्यभिचारिणा प्रकाशतामापद्यते । विविधामुखभंगी, अवस्थाया विपर्य्ययः, परिहासकौतुकयुक्तप्राकृतजनदौर्बल्यानि च सामान्यतः हासस्य कारणामुपयान्ति । प्रोक्तहेतुसमूहजायमानानां हास्यानां कारणभेदेन हासस्यापि भिन्नत्वं प्रतीतिसिद्धमेव । तथाहि–विकृतमुखभंगीदर्शनेन यादृशं हास्यमाविर्भवति, तत्तु व्यक्तिविशेषस्य दौर्बल्यजनितहास्याद्विभिन्नमेव, तथा परिहाससमुत्थमवस्थाविपर्य्ययदर्शनोत्पन्नश्च हास्यं कारणान्तरजायमानहास्यापेक्षया पृथग्विधमेव । मृच्छकटिके सुव्यक्तकौतुकात्तु यथाविधं हास्यं समुत्पद्यते, प्रच्छन्नकौतुकजनितात् तस्मात्त्वेतदधिकतरमेव रमणीयम् विलक्षणश्च वर्तते ।

---

1. दर्दुरकः स्पष्टेन हास्यमुत्पादयति । तद्यथा–"अयं पटः सूत्रदरिद्रतां गतो··· । मृ० 2।10 पुनः शर्विलको यज्ञोपवीतस्योपयोगेन हासयति–एतेन मापयति भित्तिषु कर्ममार्गम् । मृ० 3।16 ।
2. मृच्छ० 2।8 द्रव्य लब्ध द्यूतेनैव ।, 2।11–पादेनैकेन गगने·· भास्करः । 2।12 यः स्तब्धं ।
3. मृच्छ० चतुर्थाङ्के मदनिका मिथ्याभाषणेन वसन्तसेनां हासयति । एवमस्मिन्नेवाङ्के चारुदत्तस्य यथायोग्यं मिथ्याभाषणं वसन्तसेनां हासयति । "वसन्त०–कथं चौरेणापहृतमपि शौण्डीरतया द्यूतेहारितमिति भणति ।"
4. 'शर्विलको निराशो गत इति' चारुदत्तस्य हार्दिकी चिन्ता सामाजिकान् हासयति । (पृ० 175)
5. मृच्छ० 8।8 बहुकुसुमविचित्रता च भूमिः···पनसफलानीव वानराललम्ब्नि ।
6. मृच्छ० शकारः–आम्, आत्मीयैषा भूमिः । तद्यत्र मह्यं रोचते तत्रोपविशामि । (श्रेष्ठि प्रतिनं, एवं उपविशामि । (शोधनकं प्रति) नन्वत्रोपअिशामि । एष उपविशामि इति अस्थैर्यवचनं हास्यं जयति । (पृ० 189) ।
7. Humorowness develops into comic sentments. The object of ridicule is Alambana of this sentiment. The urtoware movements, the unbridled speech and absurd activities promote laughter. Smile tickled appearance, sxhibetion of teeth and similar fatures are the ensuanto. (The Laws and practice of Sanskrit Drama, S. N. Shastri. P. 283.)

तत्रोदाहृणभूनस्तु न्यस्तालंकरणवृत्तान्त[1] एवेति वक्तुं शक्यते । प्रकरणस्य चतुर्थाङ्के यदा वसन्तसेना स्वभूषणापहरणस्य प्रकृतवृत्तान्तं जानन्त्यपि कामपि वाचमनभिधाय शर्विलकादलंकरणजातं विदूषकाच्च रत्नमालामगृहीत्, तदानीन्तनं वसन्तसेनायाः मनोगतं भावमवबुध्य, वयमेतस्मादीषदप्यतीव हृदये कौतुकमनुभवामः, तद्धि सुभोजनलम्पटस्य विदूषकस्य मुखभंगीशतैरंगभंगीसहस्रैश्च विबोधयितुं नैव शक्यते ।

अतएव, उपसंहारे कथयितुं शक्यते, यत् प्रकरणे मृच्छकटिके हास्यरसस्य विकासः केनचिदभिनवेन नाट्यपरिशीलननैपुण्यसमुत्थेन विचित्रभावेनाभिव्यक्तः, स च चिरप्रचलितप्राचीनपद्धत्यनुशीलनजनितपथप्रतिकूलतामुपगतोऽपि सचेतसां सामाजिकानां विदुषामतीव प्रशंसनीयः । ईदृशैः स्वस्थशिष्टहास्यमयश्रेष्ठरूपकैरस्माकं समाजस्य सर्वथा सर्वविधपरिष्कारो भवतीति[2]शम्– □

---

1. In a spontaneous gesture of whin sically and understanding she takes off her gewells and places them in the childs toy clay cart. The plot would hinge on this cacual gesture as become clear later on (K. Chaitanya A New Hist. of Sansk.) it. 1962, P. 310
2. लेखकस्य एतद्विषयक विस्तृत शोधलेखः द्रष्टव्यः सागरिकायाः 2046 वि० संवत्सरीय: 2/4 अंकः सागर, वाराणसी, पृ० 27–35 ।

# संस्कृतसाहित्ये हरिश्चन्द्राख्यानं सत्यहरिश्चन्द्रोदयसमीक्षणम् च

भारतीयसाहित्ये सुप्रसिद्धं हरिश्चन्द्राख्यानं विविधविधासु स्वल्परूपे समुल्लसति। वैदिकवाङ्मये ऐतरेय ब्राह्मणस्य सप्तमपञ्चिकायास्तृतीयेऽध्याये हरिश्चन्द्राख्यान मूलरूपे विद्यते, यस्मिन् नायकस्य चरितस्य विकासः सत्यवादिदान धर्मकर्त्तव्यनिष्ठादिरूपे न परिलक्ष्यते। ऐक्ष्वाको हरिश्चन्द्रश्शतजायायुतोऽपि पुत्र-रहितः ऋषिपर्वत नारदप्रेरणया प्राणभूतं वरुणराजमुपसृत्य 'पुत्रो मे जायतां तेन त्वा यजे' इति प्रतिज्ञाते रोहितं पुत्रं प्राप्नोति। रोहितसुतान्वितोऽपि हरिश्चन्द्रः सत्यनारायणकथायाः साधुवैश्यवद् वाग्व्यभिचारवशात् पूर्वं प्रतिज्ञातयागकर्मणो विरमति। अतएव वरुणदेवस्य कोपेन स जलोदररोगेन पीडितो भवति।

गृहीतारण्यशरणः रोहितः ब्राह्मणवेशधारिण इन्द्रस्य प्रेरणा[1]भिरजीगर्तपुत्रं शुनःशेपं सम्प्राप्य हरिश्चन्द्रं प्रत्यागत्य राजसूययज्ञायं कथयति। अन्ततः हरिश्चन्द्रः राजसूययागं सम्पादयति, विश्वमित्रस्य वत्सलतया करुणया च शुनःशेपोऽपि संरक्ष्यते।

श्रीमद्भागवतपुराणे नवमस्कन्धे सप्तमाध्याये त्रैशङ्कवस्य हरिश्चन्द्रस्याख्यानमैतरेयब्राह्मणानुसारमेव[2] विलसति, यस्मिन् कुत्रापि हरिश्चन्द्रस्य सत्यपरत्वं,

---

1. नानाश्रान्ताय श्रीरस्तीति रोहित शुश्रुमः।
   पापो नृषद्वरो जन इन्द्र इच्चरतः सखा ।।1।।
   पुष्पिण्यो चरतो जङ्घे भूष्णुरात्मा फलेग्रहिः।
   शेरेऽस्य सर्वे पाप्मानः श्रमेण प्रपथे हतः ।।2।।
   आस्ते भग आसीनस्योर्ध्वस्तिष्टतः तिष्ठतः।
   शेते निषद्यमानस्य चराति चरतो भगः ।।3।।
   कलिः शयानो भवति संजिहानस्तु द्वापरः।
   उत्तिष्ठंयस्त्रेता भवति कृतं सम्पद्यते चरन् ।।4।।
   चरन् वै मधु विन्दति चरन्तुस्वादुमुदुम्बरम्।
   सूर्यस्य पश्य श्रेमाणं यो न तन्द्रयते चरन् ।।5।। ऐत० ब्रा० 7/13
2. श्रीमद्भागवतपुराणे 9/7/7-23

दानं कर्त्तव्यनिष्ठादि न गीतानि ।

वाल्मीकिरामायणेऽपि शुनःशेपं रक्षितुं विश्वामित्रस्य सफलप्रयत्नो[1] वर्णितः, किन्तु कुत्रापि हरिश्चन्द्रोल्लेखं न कृतवानादिकविः वाल्मीकिः आश्चर्यस्य विषयोऽयं यदयोध्याकाण्डे[2] राज्ञी कैकेयी काकुत्स्थशैव्यालर्कत्रिशङ्क्वम्बरीषसगरादि सूर्यवंशीयसत्यवादिदानिनृपाणां स्मरण महाराजाय दशरथाय दापयति, किन्तु वदान्य-सत्यपरायण हरिश्चन्द्रस्योल्लेखं न कृतवती कथाप्रसंगेन ।

महाभारतेऽपि हरिश्चन्द्राख्यानस्य पर्याप्तंविकासो न विद्यते । तद्युगेऽपि हरिश्चन्द्रस्य प्रतिष्ठा सत्यशीकसम्राट्रूपे नासीत् यतः त्रैशङ्कवस्य पराक्रमेण सम्राट् हरिश्चन्द्रस्योल्लेखो मात्रदानशीकराजसूयकर्तृरूपे[3] वर्तते न तु सत्यशीकरूपे ।

देवीभागवतपुराणस्य सप्तमस्कन्धेऽष्टादशतः सप्तविंशत्यध्याय पर्यन्तं हरिश्चन्द्राख्यानं समन्वितरूपेण सम्प्राप्ते, यस्मिन्नंतरेय ब्राह्मणस्य कथया सार्धं सत्यवादिवदान्य धर्मपरायणप्रजापालकादिगुणविभूषितस्य हरिश्चन्द्रस्य वेदोत्तर-कालिकी कथा मार्कण्डेयपुराणामिव मनोहारिणी वर्तते । मार्कण्डेयपुराणान्तर्गत-हरिश्चन्द्राख्याने नायकस्यादर्शनिदर्शनभूतं चारुचरितं चमत्कारि चेतोहरञ्च । यथा–

"हरिश्चन्द्रेति राजर्षिरासीत् त्रेतायुगे पुरा ।
धर्मात्मा पृथ्वीपालः प्रोल्लसत् कीर्तिसत्तमः ॥
न दुर्भिक्षं न च व्याधिर्नाकालमरणं नृणाम् ।
नाधर्मरुचयः पौरास्तस्मिन् शासति पार्थिवे ॥
वभूवुर्न तथोन्मत्ता धनवीर्यतपोमदैः ।
नाजायन्त स्त्रियश्चैव काश्चिदप्राप्तयौवना ॥

मार्कं० पु० 7.1-3

मृगयाविहारकालेऽज्ञातपुरुष संत्रस्तस्त्रीणामार्त्तस्वरं श्रुत्वाऽभयदायक वीरोचितोच्चैः स्वरेण स सत्त्वनिष्ठः कथयति–

---

1. रामायणे वालकाण्डे, 61-62 सर्गौ ।
2. रामा०, अयोध्या० 12/43-43 समयं मानृतं कार्षी पूर्ववृत्तमनुस्मरन् ।
3. महाभारते, सभा० 12/11 स वै राजा हरिश्चन्द्रो त्रैशङ्कव इति स्मृतः ।

स राजा वलवानासीत् सम्राट् सर्वमहीक्षिताम् ।
स निर्जित्य महीं कृत्स्नां सशैलवनकाननाम् ।
आजहार महाराज राजरूपं महाक्रतुम् ।
प्रादाच्च द्रविणं प्रीत्या याचकानां नरेश्वरः ।। 12.12-13

'कोऽयं वध्नाति वस्त्रान्ते पावकं पापकृन्नरः ।
बलोष्णतेजसा दीप्ते मयि पत्यावुपस्थिते ॥
कोऽद्य मत्कार्मुकाक्षेप विदीपितदिगन्तरैः ।
शरैर्निभिन्नसर्वाङ्गो दीर्घनिद्रां प्रवेक्ष्यति ॥'

मार्क॰ पु॰ 7।12-13

क्रुद्धं विश्वामित्रं सत्यधनो धर्मनिष्ठः हरिश्चन्द्रः स्वयमेव कथयति कोपशमनाय–

दातव्यं रक्षितव्यञ्च धर्मज्ञेन महीक्षिता ।
चापञ्चोद्यम्य योद्धव्यं धर्मशास्त्रानुसारतः ॥

मार्क॰ पु॰ 7।18

उच्यतां भगवन् यत्ते दातव्यमविशंकितम् ।
दत्तमित्येव तद् विद्धि यद्यपि स्यात् सुदुर्लभम् ॥
हिरण्यं वा सुवर्णं वा पुत्रः पत्नी कलेवरम् ।
प्राणा राज्यं पुरं लक्ष्मीर्यदभिप्रेतमात्मने ॥

मार्क॰ पु॰ 7।23 24

सम्पूर्ण राज्यं विश्वमित्राय दत्त्वाऽकिञ्चनो विनीतः हरिश्चन्द्रः दक्षिणायै एवं निवेदयति नम्रस्वरेण–"अवशिष्टमिदं ब्रह्मन् नाद्य देहत्रयं मम ।"

काश्यां पुर्यां सर्वेषां विक्रयं चाण्डालसेवन श्मशाने, रोहितमरणं शैव्या विलपनं कराय शाटिकायाः शवाच्छादकार्द्धवस्त्रग्रहणं चेति वर्णनानि अत्यन्त कारुणिकानि सन्ति । हरिश्चन्द्रस्य दानशीलता, सत्यवादिता कर्त्तव्यपरायणता, धार्मिकता, प्रजावत्सलताप्रभृतिसद्गुण सहृदयहृदयहारिणो वर्तन्ते प्रजापालकः पृथ्वीपतिः स स्वर्गमपि परित्यजति प्रजाहितकामनया–

मच्छोकमग्नसः कोसलानगरे जनाः ।
तिष्ठन्ति तानपोह्याद्य कथं यास्याम्यहं दिवम् ॥
बहुकालोपभोग्यं हि फलं यन्मम कर्मणः ।
तदस्तु दिनमप्येकं तैः समं त्वत्प्रसादतः ॥

मार्क॰ पु॰ 8।256-257

अत्यन्तं महत्त्वपूर्णं हरिश्चन्द्रचरितं रेखांकितं कुर्वन् प्राज्ञः पुराणकारः कथयति–

"हरिश्चन्द्रसमो राजा न भूतो न भविष्यति ।
यः शृणोति स्वदुःखार्तः स सुखं महदाप्नुयात् ॥

अहो तितिक्षामाहात्म्यमहो दानफलं महत् ।
यदागतो हरिश्चन्द्रः पुरीं चेन्द्रत्वमाप्तवान् ॥

मार्कं० पु० 8।266-268

विचारणीयो विषयोऽयं यत् वैदिकाख्याने वर्णित रामायणेऽनुतो खितो हरिश्चन्द्रो दक्षिणासंकल्पे वाग्व्यभिचारी, यागदानेऽविश्रुतश्चापि भूत्वा परवर्ति-पुराणसाहित्ये लोकजीवने च वदान्यसत्यवादिरूपेण कथं प्रसिद्धि गतः ? लौकिक-संस्कृतसाहित्येऽस्य महापुरुषस्य चरितं स्वल्पमेव चर्चितं चित्रितञ्च । कथमभवत् यदेकं महाकाव्यमपि तमधिकृत्य न विरचितं संस्कृतमहाकविभिः ।

प्रतीयते, प्रारम्भिके जीवने प्राकृतपुरुषाणामिव हरिश्चन्द्रोऽप्यदानः, मिथ्यावाद्यनुदात्तचरितश्चासीत्, किन्तु कालान्तरे कयाचिल्लौकिकमार्मिकघटन-याऽस्य मनसि परमाद्भुतं मनोवैज्ञानिकं परिवर्तनमभवत्, येन सोऽप्रतिमप्रजापाल-कसत्यदाननिष्ठो भूत्वा संसारे जनमानसे श्रद्धाप्रेमपूर्णन्स्थानमधिगतवा ।

संस्कृतस्य शास्त्रीय (लौकिक साहित्ये स्वल्पविधासु स्वल्पेव हरिश्चन्द्र-चरितं चित्रितं लक्ष्यते । इस्वीय दशमशताब्द्यां राजशेखरस्य समकालीननाटककारः क्षेमीश्वरः हरिश्चन्द्राख्यानमधिकृत्य पञ्चाङ्कात्मकं 'चण्डकौशिकनाटकं' विरचितवान यस्मिन् न तादृशी प्रौढ़ता, प्रभावशालिता च परिलक्ष्यते, यादृशी पूर्ववर्ति भास-शूद्रक कालिदासभवभूति-प्रभृति नाटककाराणाम् नाट्यकृतिषु । ईसवीयद्वादश-शताब्द्यां रामचन्द्रोऽपि सत्यहरिश्चन्द्रनाटकमरचयत् । 'चण्डकौशिकवदिय रचनाऽपि रसाभावात् साहित्यरसिकैः समादृता नाभवत् ।

ई० षोडशशताब्द्यां सुकविर्भास्करो हरिश्चन्द्राख्यानमधिकृत्य "हरिश्चन्द्र-चम्पूकाव्यं प्रणीतवान् । चम्पूविधायामियमद्वितीयैव रचनाऽर्चिता वर्तते ।

ई० अष्टादशशताब्दे तञ्जौरराज्यमन्त्री घनश्यामोऽभिरामां श्लेषमयी हरिश्चन्द्रकथां रचितवान् । एकोनविंशतिशताब्द्यां बंगीयसंस्कृत कविः विधुशेखर-भट्टाचार्यः हरिश्चन्द्रचरितकाव्यमरचयत्, यस्य साहित्यिकवैशिष्ट्यं महत्त्वाभावात् लोकप्रियतां नालभत ।

ई० विंशतिशताब्द्याअन्तिमे चरणे कार्तिकपूर्णिमायां 2043 विक्रमाब्दे भारतस्य सांस्कृतिकनिधि–प्राचीनभारतीयसाहित्यस्य सांस्कृतिकभूमिका–महाकवि-कालिदास-नाट्यशास्त्रीयानुसन्धानदशरूपकतत्त्वदर्शनद्वासुपर्णाद्यनेकग्रन्थानां रचयिता सागरिकासम्पादकसागरविश्वविद्यालयस्य पूर्वसंस्कृतविभागाध्यक्षः प्रो० डॉ० रामजी उपाध्याय उपेक्षितप्रायं हरिश्चन्द्राख्यानमाश्रित्य सत्यहरिश्चन्द्रोदयनाम्नी-मौपन्यासिककृति सप्तदशप्रकरणेषु प्रणीतवान् । रचनेयं सागरिकायां 25।2 अंके प्रकाशितमभवत् ।

वैदिकपौराणिकलौकिकसंस्कृतसाहित्ये समुपलब्धां सुविकसितां समन्वितां सञ्जीविताञ्च सरसघटनां कथावस्तुनि-हरिश्चन्द्रोदय, सुन्दरवनयात्रा वरप्राप्तिः रोहितापहारः—विश्वविजयः स्वरूपनिर्णय नैमिषारण्यदर्शन्, विश्वविजय, हरिश्चन्द्र-परीक्षासंकल्पः विश्वामित्राय लक्षदानप्रतिश्रुतिः काशीप्रस्थानाय परिवारामंत्रणं, पौरजानपदयामंत्रण काशीप्रगमनं, काश्यां सम्मानयोजना, काशीप्रपत्तिः, भृतिनियोगः, श्मशानमहिमा,हरिश्चन्द्रोदय प्रभृति प्रकरणानि प्रसादमाधुर्य गुणोपेतानि विलसन्ति ।

सुनिबद्धसरसकथायां हरिश्चन्द्रस्य न केवलं सत्यनिष्ठा दानशीलता वाऽपितु नानाऽसामान्यगुणा आदर्शरूपेणाङ्किताः कविना । यथा—'त्रेतायुगे प्रजापतिरिव प्रजानन्दनः सर्वविद्यावदाती ब्रह्मकोशस्य गोप्ता, उदारधीः, यशस्वितमः, मनीषी सत्यवतीपुत्रश्चन्द्रनिधोः हरिश्चन्द्रो नाम राजर्षिः प्राभवत् । तस्य नित्यमापूर्यमाणेन गुणौघेन निमज्जिता अपि प्रजा···जीवनसौरभं वितरन्ति स्म ।'

(सत्यहरिश्चन्द्रोदय पृ० 1-2)

अस्मिन् ललिते उपन्यासे नायकस्य चारुचारित्र्यस्य चरमोत्कर्षः श्मशान-स्थले सलक्ष्यते, यत्र सभायां[1] सहकर्मिणः सम्बोधयन् कथयति—"गगाशिवयोरौ-दात्यानुरूपं मनसि वचसि काये पुण्यपीयूषपूर्णमस्माकं सामग्र्यं भवतु । शिवसंकल्पेन सर्वेषां नित्यं सेवा, तापत्रयहरणं च समीहितमस्माकं भवतु ।"

आदर्शप्रतिव्रता, महिषीरत्नं, व्रतनियमानुष्ठानपरायणा साध्वी पत्नी शैव्या, वात्सल्यकेन्द्रविन्दुः परमानन्ददायकपुत्रः रोहितः, हरिश्चन्द्रपरीक्षाबद्धपरिकरो दृढव्रतः नायको वर्णितः विश्वामित्रप्रभृतिपात्राणामपि चारुचित्रणमुपन्यासे[2] कृतमस्ति कविना ।

सरसेऽस्मिन्नुपन्यासे सर्वथा लोकसंस्कृतेः समुज्ज्वलपक्षाणां पूर्ववर्तिसाहित्यिक-कृतिच्छायाविजृम्भितानि चारुचित्राणि चित्रितानि । यथा—विश्वविजयस्वरूपे सार्वभौमिकधर्मराज्यस्थापना—धर्मेणाधर्मः पराभवनीयः ततो धर्मस्य राज्यं भवति, येन भूतग्रामः परस्परं रक्षति रक्ष्यते च । धर्मराज्ये 'वसुधैव कुटुम्बकम्' इति सत्यं लोकानां सदाचारेण परस्परसद्व्यवहारेण च प्रत्यक्षीभवति । धर्मराज्ये सर्वे लोका न स्वार्थसमीहितुमपि परार्थं साधयितुमेवात्मानमुद्योजयन्ति । (पृ० 12)

नृपहरिश्चन्द्रस्य पूर्वजानां नैमिषारण्य संक्षय-स्मरणं, कविकुलगुरोः कालिदासस्य[3] वानप्रस्थानां रघुवंशिनां नृपाणां स्मरणं परस्करोति ।

---

1. सत्यहरिश्चन्द्रोदयम् काशी सं० 2043 वि० पृ० 39-40 ।
2. " " तस्यपत्नी महिषीरत्नं पृ० 3, निष्पन्नजातकर्मोचितकर्मा······ रमयति स्म, पृ० 24 ।
3. रघुवंशे 1।8, 3।70 अथ स विषयव्यावृत्तात्मा: कुलव्रतम् ।

आश्रमारण्यतीर्थनगराणां सांस्कृतिकप्रतिष्ठा-सम्यग्रूपेण सम्प्राप्यते ऽस्यां कथाकृतौ । यथा–

'आनाकमेकधनुसा भुवनं विजित्य पुण्यैर्दिवः क्रतुशतैर्विरचय्य मार्गम् ।

इक्ष्वाकवः सुतनिवेशितराजभाराः, निःश्रेयसायवनमेतदुपाश्रयन्ते[1] ।

ऋषितपोवनदर्शनम्–तपोवनानां पावनतां रमणीयतञ्च वर्णयन् कथाकारः कथयति–"तपोधनानां रम्याः क्रियाः समवलोकयंश्च मासमेकमुवास तस्मिन्नवधौ स तपोवनस्य परिसरे परिवार्यमाणान् तीर्थभूतानाश्रमान् मुनिभिः सह पद्भ्यां विचरन् सश्रद्धं ददर्श[2] । इति वृत्तान्तोऽभिज्ञानशाकुन्तलस्य कण्वाश्रमदर्शनोत्सुकं दुष्यन्तं स्मारयति ।

रघुवंशीयदिलीपस्याभियाने[3] जानपदीयलोकजीवनस्य समृद्धां संस्कृतिं स्मारयति हरिश्चन्द्रस्य सुन्दरवनयात्रा–'यत्र तत्र पारिग्रामिक स्थलीषु···जनपदान् ददर्श (पृ॰ 4) कुत्रचित् गंगा-गौरवं[4] कुत्रचित् काशीमाहात्म्यं[5] कुत्रचित् रम्य-सागरतटीयगंगासागरादि[6] तीर्थानां सांस्कृतिक पृष्ठभूमौ मनोहारिवर्णनं सत्य-हरिश्चन्द्रोदयस्य रमणीयतां संवर्धयति ।

समीक्ष्ये सत्यहरिश्चन्द्रोदयोपन्यासे प्रकृतिचित्रणमपि हृदयावर्जकं प्राप्यते । यथा–'सुमधुरस्वनाः पक्षिणो नित्यं प्रातःवेलायां तस्य महिमानमुदीरयन्तो जयोदा-हरणं जगुः[7] । कलकण्ठा वैतालिकभूता यथाकलं कूजं कूजं मंगलं विदधुः । प्राणायामपरायणा झिल्लिका नैशनि शब्दतामपाकुर्वन् (पृ॰ 7) । "पृथ्वी सर्वत्र सुखशाद्वलानि प्रकाशमदीपयताम् । पूर्वसागरवर्णनेन समं सुन्दरवनचित्रणमत्यन्तं मनोमोहकमस्ति । (पृ॰ 8, पृ॰ 6)

---

1. सत्यहरिश्चन्द्रोदयम् पृ॰ 15 तुलनीयं रघु॰ 3।70 ।
2. सत्यहरिश्चन्द्रोदयम् पृ॰ तुलनीयं अभि॰ शा॰ 1/13 रम्यास्तपोधनानां प्रति-हतविघ्नाः क्रियाः समवलोक्य ।
3. रघु॰ 1।36-47 ।
4. सत्यहरिश्चन्द्रोदये "अमृतोपमतोयाभिश्शिवाभिरुपसंस्कृता दर्शनमात्रेण सर्वार्थसाधिनी शोभते । जाग्रद् अश्नन्, वदन्, श्वसन् यो गंगा सततं स्मरति, स कर्मबन्धनान्मुच्यते ।" (पृ॰ 5) ।
5. सत्यहरिश्चन्द्रोदय पृ॰ 33 काशीपुरी लोके सुप्रथितनाम्नी काशयति विश्वलोकं सत्क्रियाभिरित्यभिख्यामर्थवती विद्यादिति ।
6. स लौकिकविभूतिसम्पन्नो विकीर्णशुक्ति मौक्तिकरत्नजालोद्भासितं पुलिनं गंगासागरसङ्गममुपगतः पृ॰ 6
7. तुलनीयं पू॰ मेघ॰ 56, रघु॰ 4।19 20 ।

रचनाकारस्य संस्कृतभाषायामधिकार सर्वत्र संलक्ष्यते। दीर्घसमासमोहशून्य: प्रवीण: प्रणेता पदे-पदे प्रसादमाधुर्यगुणोपेतं लालित्यं सारल्यं समावेशयति सालंकृतायां स्वकीयसंस्कृतभाषायाम्। अनतिदीर्घवाक्येषु स्वल्पसामासिकपदानां प्रौढप्रयोगेण क्वचिदर्थदुरूहता न दृश्यते। कुत्रचित् पदेषु पूर्ववर्ति कालिदासभर्तृहरि वाणप्रभृति प्रतिष्ठितमहाकवीनां भावानुहरणपूर्णप्रतिच्छाया प्राप्यते, येनरम्यरचनयां प्रौढतया सह गम्भीरतापूर्णगौरववृद्धिरेव भवति। यथा—स्फुटितकमलामोदकषाय[1] तरंगहस्तैरुपगूहितकामं[2] ब्रह्मलोकप्रतीकाश[3] शापेनास्तगमित महिमान[4] मनसि वचसि[5] काये पुण्यपीयूषपूर्णमित्यादिपदेषु पूर्वतिनां कवीनां प्रतिच्छाया (भावानुहरणं) विलसति।

रचनेयमनुप्रासरूपकोपमार्थान्तरन्यासाद्यनेकालंकारै:[6] रमणीयतया रंजयति रसिकान् साहित्यिकान्।

क्वचित् कथाकार: पारम्परिकरूढताग्रस्तो भूत्वाऽनवधानतया भौगोलिक तथ्यमुपेक्षते यथा गंगासागरीयोपतटे मौक्तिकरत्नजालदर्शनं विशाल द्वीपान् महाद्वीपकथनञ्चाविज्ञातमेव। वस्तुत: सर्वत्र सागरतटे मौक्तिकनि न संलक्ष्यन्ते। दक्षिणीमहोदधौ ताम्रपर्णी संगमस्थले एषामुत्पत्ति: संसारे सुप्रसिद्धास्ति यथा वर्णयति महाकवि: कालिदास: रघुवंशे भौगोलिकतथ्यानुसारेण।

अस्मिन् सरसोपन्यासे यत्र तत्र सर्वविश्रुत श्लोकसूक्तयो मौलिक प्रभावशालिपद्यानामर्थानुरूपप्रयोगश्च[7] चमत्कारिचम्पूकाव्यस्य साहित्यिकरमणीयतामुत्पादयति।

---

1. सत्यहरिश्चन्द्रोदयम्, पृ० 5 तुलनीय पू० मेघ० 31 दीघोकुर्वन् प्रत्यूजेसु स्फुटितकमलामोदमैत्री कषाय:।
2. " पृ० 6 तुलनीयं रघु० 13। तरगहस्तै रुपगूहतीव माम्।
3. " पृ० 5 कादम्बरी (कथामुखम्) जावालि आश्रमवर्णने।
4. " पृ० 18, तुलनीयं पू० मे० 1 कश्चित्कान्ता विरहगुरुणा स्वाधिकारप्रमत्त:, शापेनास्तंगमित महिमा वर्षभोग्येण भर्तु।
5. " पृ० 38, तुलनीयं नीतिशतकम् (भर्तृहरे:) श्लोक 79 मनसि वचसि काये पुण्यपीयूजपूर्णम्।
6. " पृ० 1,2,28 (अनुप्रास:) पृ० 6 (रूपक: तरगहस्तै:) पृ० 6,21 (उपमा) पृ० 27 (अर्थान्तरन्यास:) नाराज के जनपदे)
7. पृ० 6-8 तुलनीयं रघु 4।50 ताम्रपर्णीसमेतस्य मुक्तासारं महोदधे: रघु० 13।17 एते वयं सैकतभिन्नशुक्तिपर्यस्तमुक्तापटलं पयोधे:।

सक्षेपे कथयितुं शक्यते यत् संस्कृत साहित्ये डा० रामजी उपाध्याय-महोदयस्य 'सत्यहरिश्चन्द्रोदयम्' सरसहरिश्चन्द्राख्यानमालायाः । सुन्दर सुरभितं सुमनोऽस्ति न केवलं हरिश्चन्द्राख्यानेऽपितु समस्त संस्कृत कथासाहित्ये द्वासुपर्णवत् मानकरचनारूपेण कृतिरियसुधीभिः संस्कृता भविष्यति । संस्कृतसेवी डा० उपाध्या-महाभागोऽस्य कृते सर्वथाभिनन्दनीयः सम्माननीयश्च संस्कृतसाहित्यसंसारे ।

वर्तमानराजपुरुषाः प्रशासकाः नेतारश्च सामान्यतोऽनुदारा स्वथा परायणा असत्यनिष्ठा दानदयाशून्या लोकोपकारविरहिता भवन्ति । तेषां सामान्यजननाञ्च कृते हरिश्चन्द्राख्यानं विशेषतः 'सत्यहरिश्चन्द्रोदयम्'[1] सदाचरणाय सत्यमेव जीवने जाज्वल्यमानं ज्योतिरिवास्ति[2] । □

1. सत्यहरिश्चन्द्रोदयम् पृ० 4, 15, 16, 17, 19, 44 ।
2. लेखकस्य विस्तृतसमीक्षा द्रष्टव्या सागरिकायां: 2045 वि० संवत्सरीये 26/2 अंके, वाराणसी, पृ० 35–43 ।

# रुक्मिणीहरणे माघप्रतिच्छविः सुधीसुधानिधेः काव्यवैशिष्ट्यञ्च

महाकाव्यपरम्परायां बुद्धचरितरघुवंशकुमारसम्भवाद्यनेकानि महाकाव्यानि सन्ति। एषु श्रीहर्षस्य नैषधीयचरितं माघस्य शिशुपालवधं भारवेः किरातार्जुनीयञ्चेति त्रयमेतद् बृहत्त्रय्यां गण्यते। एतानि सर्वाणि महाकाव्यानि प्राचीनपरम्पराऽवलम्बीनि सन्ति। आधुनिकेषु महाकाव्येषु 'रुक्मिणीहरणमहाकाव्यम्' पण्डितकाशीनाथशर्मणो द्विवेदिनः सुधीसुधानिधेर् अनुपमेया काव्यकृतिरस्ति। महाकवेरस्य गौरवावायकं ग्रन्थरत्नमेकमेव रुक्मिणीहरणनामकं महाकाव्यं प्रकाशितमुपलभ्यते।[1] अस्मिन् महाकाव्ये सुप्रसिद्धा पौराणिकी कथा एकविंशतिसर्गेषु 2547 श्लोकेषु चोपनिबद्धा विद्यते। श्रीहर्षादिपूर्ववर्तिमहाकवीनामिव प्रत्येकसर्गस्यान्ते महाकविरयं स्वपरिचयमपि प्रस्तौति।

अध्यानन्दवनं शिवाङ्घ्रिनिरतः श्रीरुद्रदत्तः सुधीः
कौशल्या च यमाववोधपरमं प्रासूत देवी सुतम्।
काशीनाथबुधेन तेन रचिते काव्येऽत्र धर्माभिधः
सर्गो द्वादश एष भूसुरवचोरूपः समाप्तिङ्गतः ॥[2]

महाकाव्यमिदं माघकृतशिशुपालवधस्य तुलनायां केनाऽपि प्रकारेण न्यूनं नास्ति। महाकविः सुधीसुधानिधिः सुरभारतीकाव्याकाशे विद्योतमानं स्वप्रभानिरस्ततमस्तेजःप्रसारकमनुपमं नक्षत्रमिव प्रतिभाति। अस्य व्यापिनी विविधशास्त्रावगाहिनी सूक्ष्मेक्षिका प्रतिभा तथ्यमात्मसात्कृत्वा पुरः स्फुरन्तीव भावपूर्णं वर्ण्यविषयं प्रस्तौति। महाकविरयं न केवलं काव्यशास्त्रस्यैव ज्ञाता, अपि तु व्याकरणशास्त्रस्य, राजनीतेः, धर्मशास्त्रस्य, सङ्गीतशास्त्रस्य, पाकशास्त्रस्य,

---

1. रुक्मिणीहरणम्—पं० काशीनाथशर्मणः, मोतीलाल बनारसीदासः, वाराणसी, दिल्ली, सं० 2023 वि०, 1966 ई० वर्षे प्रकाशितम्, प्रथमं संस्करणम्।
2. रुक्मिणीहरणम्, 12.140

ज्योतिषशास्त्रस्य, दर्शनानां पुराणादीनाञ्चानुपमो मनीषी वर्तते ।

रुक्मिणीहरणमहाकाव्ये माघकाव्यवदेव सर्गे सर्गे श्लोके श्लोके च भाव-सौन्दर्यं संलक्ष्यते । महाकाव्यस्य प्रथमे सर्गे एव, यथा माघेन कृष्णसभायां नारदागमनं वर्णितम्, तथैव सुधीसुधानिधिनाऽपि स्वमहाकाव्ये द्वितीयसर्गेभीष्म-कान्तःपुरे नारदस्यागमनम्, तस्य सत्कारः, भीष्मकवचनम् नारदस्योक्तिपूर्वकं तस्य स्वधामगमनं चापि वर्णितम् । अस्मिन् प्रसङ्गे उभयोः न केवलं भावसाम्यं शब्दसाम्यमपि स्पष्टं प्राप्यते । पश्यन्तु माघे—

पिशङ्गमौञ्जीयुगमर्जुनच्छविं
वसानमेणाजिनमञ्जनद्युतिः ।[1]

सुधीसुधानिधिनाऽपि चित्रमिदमेवं प्रस्तुतं रुक्मिणीहरणे—

कृष्णाजिनालम्बितमध्यभागे
मौञ्जीं दधानं किल पिङ्गलाभाम् ।[2]

शिशुपालवधे माघो नारदस्वरूपमाहेत्थम्—

विहङ्गराजाङ्गरुहैरिवायतैर्
हिरण्मयोर्वीरुहवल्लितन्तुभिः ।
कृतोपवीतं हिमशुभ्रमुच्चकैर्
घनं घनान्ते तडिताङ्गणैरिव ॥[3]

रुक्मिणीहरणे स्वरूपमिदमेवाह सुधीसुधानिधिः—

मृणालसूत्रामलयज्ञसूत्रं
दधानमङ्गे कलहंसकान्तौ ।[4]

इत्थमेव नारदस्वरूपवर्णनं द्वावपि महाकवी समानभाषाभावरूपेण स्वस्वमहाकाव्ये उपन्यस्तवन्तौ । सन्दर्भेऽस्मिन्नग्रेऽपि द्रष्टव्यम्—नारदमुनये दीय-मानमासनमपि द्वावपि महाकवी समानरूपेण वर्णयतः । माघेन नारदासनमेवं वर्णितम्—

---

1. शिशु०, 1.6
2. रुक्मिणी०, 2.7
3. शिशु०, 1.7
4. रुक्मिणी०, 2.6

महामहानीलशिलारुचः पुरो
निषेदिवान् कंसकृषः स विष्टरे।
श्रितोदयाद्रेरभिसायमुच्चकैर्
अचूचुरच्चन्द्रमसोऽभिरामताम् ॥[1]

रुक्मिणीहरणे सुधीसुधानिधिर्वर्णयति नारदासनमित्थं प्रकारेण–

यदासनं नीलमणिप्रणीतं
मुनिर्महीपार्थनया बभाज।
कृष्णाजिनं धारयता तदासीद्
अनेन चन्द्रेण यथाऽन्तरिक्षम् ॥[2]

माघे यथा षष्ठसर्गे तथैव रुक्मिणीहरणेऽपि चतुर्थसर्गे ऋतुवर्णनं दरीदृश्यते। द्वयोर्महाकाव्ययोः कविभ्यां षड्ऋतुवर्णनं पदच्छन्दोमाधुर्येण सह प्रस्तुतम्। पर्वत–समुद्र–नगर–सेना–प्रभात–निशादीनां वर्णने रुक्मिणीहरणमहाकाव्येऽन्येषां पूर्ववर्तिनां महाकवीनामपेक्षया माघस्यैवानुकृतिरवलोक्यते। प्रभातवर्णने माघेन यथा बालसूर्यः–

उदयशिखरिशृङ्गप्राङ्गणेष्वेव रिङ्गन्
सकमलमुखहासं वीक्षितः पद्मिनीभिः।
विततमृदुकराग्रः शब्दयन्त्या वयोभिः
परिपतति दिवोऽङ्के हेलया बालसूर्यः ॥[3]

इति वर्णितस्तथैव सुधीसुधानिधिनाऽपि शशीभावसाम्येनैवं वर्णितम्–

इति वचनसुमानां दाम्न्युपक्रम्यमाणे
हरिरुपहतनिद्रोऽह्नाय तत्याज तल्पम्।
उदयति कलघोषे सायमातोद्यकानाम्
उदयशिखरिशृङ्गं पूर्णबिम्बः शशीव ॥[4]

प्रभातवर्णनप्रसङ्गे सुधीसुधानिधिर्न केवलं माघेन, कालिदासेनाऽपि प्रभावितो दृश्यते। रघुवंशस्य पञ्चमे सर्गे कुण्डिनपुरप्रस्थितस्य शयितस्याऽजस्य

1. शिशु०, 1.16
2. रुक्मिणी०, 2.16
3. शिशु०, 11.47
4. रुक्मिणी०, 14.1

वन्दिजनैः प्रबोधनं पर्याप्तभावसाम्ययुतं परिलक्ष्यते । यथा–

निद्रावशेन भवताप्यनवेक्ष्यमाणा
पर्युत्सकत्वमबला निशि खण्डितेव ।
लक्ष्मीर्विनोदयति येन दिगन्तलम्बी
सोऽपि त्वदासनरुचिं विजहाति चन्द्रः ॥

रुक्मिणीहरणे त्रयोदशसर्गे श्रीकृष्णस्य प्रबोधनं सूतैरित्थमेवाकारि–

यामेष्वथ त्रिषु गतेषु निशीथिनी सा
निष्पन्दनीरवतरा ध्वनिता क्रमेण ।
निद्रालसेव रमणी रमणीयवाचां
वाचां भरेण रणिताभरणा बभूव ॥

रघुवंशे–

शय्यां जहत्युभयपक्षविनीतनिद्राः ।

रुक्मिणीहरणे च–

शय्यां विहाय रजनीं कुरु सुप्रभाताम् ।

पार्वत्याः सौन्दर्याङ्कने कुमारसम्भवे यथा–

शिरीषपुष्पाधिकसौकुमार्यौ
बाहू तदीयाविति मे वितर्कः ।

तथैव रुक्मिणीहरणेऽपि पार्वत्याः सौन्दर्यवर्णनं द्रष्टव्यम्–

शिरीषपुष्पाधिकसौकुमार्याम् ।

पूर्ववर्तिनां माघादिमहाकवीनां रुक्मिणीहरणेऽनुकृत्याऽयं अभिप्रायो नास्ति यदिदं महाकाव्यं केनापि प्रकारेण कस्यापि महाकाव्यस्य तुलनायां न्यूनमस्ति, कतिपयकाव्यगुणैरिदमतिशेते एव ।

सुधीसुधानिधेः काव्यरीतौ पदलालित्यं भाषासौष्ठवमलङ्काराणामपि स्वाभाविको विन्यासो रसानां मधुरपरिपाकश्चावलोक्यते । महाकवेः विविध-विद्यानिधानत्वम्, मनोभावानां मार्मिक्यनुभूतिर्वर्णनाशक्तिश्चोपस्थापयति काव्योत्कर्षम् । प्रकृत्या सह तादात्म्यानुभूतिस्तस्य काव्यस्य गौरवं समेधयति । संक्षेपेऽस्य काव्ये कवितावनितायाः नैसर्गिकं सौन्दर्यं मनोरमं चारुत्वं च प्रतिपदं परिलक्ष्यते ।

माधुर्यप्रसादगुणयुक्तं सुधीसुधानिधेः काव्यं सर्वथा सहृदयसंवेद्यमेव विद्यते। अर्थक्लिष्टताराहित्यं रुक्मिणीहरणस्य महाकाव्यस्य प्रमुखवैशिष्ट्यमस्ति।

महाकविरयमुपमाप्रयोगे[1], अर्थगौरवे[2], पदलालित्ये[3] च कालिदासभारवि-दण्डितुलनायां यद्यपि नातिशेते तथापि तस्य पदमाधुर्यम्, शब्दविन्यासादयः काव्यगुणाः सर्वातिशायिनः सन्ति। अस्य भावपक्षापेक्षया कलापक्षः प्रशस्यतरोऽस्ति। क्वचिदलङ्काराणां स्वाभाविकप्रयोगः, क्वचिच्छन्दो-रचना तस्य कलात्मिक्या रुचेः परिचायिका विशेषताः सन्ति।

अतः प्रतिपादयितुं शक्यते यन्महाकविः काशीनाथशर्मा द्विवेदी सुधी-सुधानिधिर् आधुनिकयुगीनमहाकविषु श्रेष्ठ एव। महाकविरयं स्वरुक्मिणीहरण-महाकाव्येनैव सर्वस्यापि जगतो वन्द्यतामापन्नो निर्विवादं स आधुनिकसंस्कृत-

---

1. उपमानुप्रासच्छटाऽवलोकनीयाऽस्मिन् पद्ये—

हुत्वा हविर्भुजिहरिहवनीयजातं,
योगीव चित्तसि मुहुर्वहिरिन्द्रियाणि।
आत्मस्वरूपमिव वृत्तिभिरान्तरीभिः,
रविं चिरन्तनमतर्पयदम्बिकेशः॥

(रुक्मिणी०, 14·93)

2. अर्थगौरवम्—

"विचारवैषम्यजुषोऽखिलाः प्रजाः न कोऽपि वै नाऽपि कृतेन तोषयेत्।
मनीषिणामल्पतमा न मीयते विकासहेतुर्बहुलानुरोधिता॥"

(रुक्मिणी० 12.112)

"य ऐहिकाऽऽमुष्मिकयोर्विशेषविद् विभाति यस्मिन् परिणामदर्शिता।
जनः स लोकोत्तरबुद्धि-वैभवः सदा प्रजानां नियमं प्रतीक्ष्यते॥"

(रुक्मिणी० 12.113)

3. पदलालित्यं प्रेक्षणीयं पद्येऽस्मिन्—

"विकचकनकदामाऽलम्बिमन्दारमाला,
सपदि स परिधाप्याऽपूरितस्यान्तरालम्।
नवकिसलयजालैर्बिल्वजातैरदोषैः,
कनककमलजाती चम्पकाद्यैश्च पुष्पैः॥"

(रुक्मिणी० 14.15)

साहित्ये महाकविः 'सुधीसुधानिधि' रित्युपाधिना सार्थकमेव सादरमुद्घोष्यते। इदमपि निर्विवादं वक्तुं शक्यते यत् पं० काशीनाथशर्मा 'सुधीसुधानिधिना रचितं रुक्मिणीहरणं महाकाव्यमन्यमहाकाव्येषु तुलनायां किञ्चिदपि न्यूनं नास्ति, अपि तु कालिदास-माघ-भारवि-श्रीहर्षादीनामेव श्रेण्यामायाति।[1]

□

1. लेखकस्य विस्तृतशोधलेखः द्रष्टव्यः अजस्रायाः 3/4 अंके, लखनऊ, अप्रैल, 1980, पृ० 25-31
सागरिका 19/3, अंकः, पृ० 121-127

# हृषीकेशचतुर्वेदिनः संस्कृतसाहित्यम्

उत्तरप्रदेशस्य आगरामहानगरे विक्रमाब्दे सं० 1964 तमे पौषमासे कृष्णपक्षे तृतीयातिथौ तदनुसारं 22 दिसम्बर, 1907 दिनाङ्के पं० हरिशंकरचतुर्वेदिनः सुयोग्यपुत्ररत्नमा समुत्पन्नः सत्कविरयं विलक्षणप्रतिभाशाली पुरुषरत्नआसीत्। साहित्य-संगीत-चित्रकलादिनानाविषयेसु परम प्रवीणः, स्वाभिमानी, राष्ट्रभक्तः, सहृदयविचारकः, 'चतुर्वेदी'[1] मासिकस्य प्रधानसम्पादकः, संस्कृत-हिन्दी-अंग्रेजी-उर्दू-प्रभृतिभाषासु निष्णातः पं० हृषीकेशचतुर्वेदी सर्वसम्मानितः सरससामाजिकश्चासीत्। हृषीकेशगीताञ्जलिरसरंगश्रीमद्भगवद्गीता—वृद्धनाविकसमश्लोकोमेघदूतविजय—वाटिका संयुक्तवर्णविज्ञान-श्रीरामकृष्णकाव्य-श्रीकृष्णताण्डवस्तोत्र-श्रीरामकृष्णायन-श्रीसत्यनारायणव्रतकथाछेड़छाड़प्रभृतयः प्रकाशिताः द्वादशकाव्यकृतयः सन्ति सत्ववेरस्य।

स्वकीयभास्वरव्यक्तित्वस्य समृद्धकृतित्वस्य च स्वामी सत्कविरयं 1970 ईसवीयवर्षे 23 सितम्बरदिनाङ्के कीर्तिशेषो भूत्वा दिवंगतः पं० हृषीकेशचतुर्वेदिनः समृद्धं काव्यात्मकं संस्कृतसाहित्यमधोरूपं वर्गीकर्तुं शक्यते—

(1) राष्ट्रचिन्तनप्रधानं संस्कृतकाव्यम्।
(2) संस्कृतस्तोत्र-साहित्यम्।
(3) चित्रकाव्यप्रधानं साहित्यम्।
(4) नीतिप्रधानसंस्कृतपद्यानि, स्फुटप्रशस्तिपूर्णपद्यानि च।
(5) अनूदितसंस्कृत-साहियम्।

राष्ट्रचिन्तनप्रधानसंस्कृतकाव्ये कविरयं भारतराष्ट्रस्य भौतिकस्वरूपेण सह आन्तरिकतात्त्विकरूपमवगत्य भारतराष्ट्रपताकामपि स्तौति स्वाधीनतायाः पश्चात् 1948 ई० वर्षे सुकवेः पं० हृषीकेशचतूर्वेदिनः शब्देषु भारतराष्ट्रवैशिष्ट्यं कीदृशमस्ति

---

1. चतुर्वेदी मासिकपत्रस्यादर्शपद्यं कविना रचितमासीन्मुखपृष्ठे एवम्—

"वेदेषु प्रथितैः पुराणकथितैर्दिव्यैः प्रमाणैर्मुदा,
कृत्वा ज्ञानमयानि साधुविदुषां चित्तानि सच्छिक्षया।
धर्मार्थं प्रतिपादयन्निखिलतः पापानि निसारयन्,
नित्यं पत्रमिदं करोतु सुखदां सेवां चतुर्वेदिनाम्॥"

—हृषीकेशरचनावली, 1985 ई० आगरा—संस्करणम्, पृ० 277

चमत्कारपूर्णम्–

शक्तिश्रद्धाभ्युपेतां त्यजनबलिपरां साहसोत्साहपूर्णम्,
पूतां पूज्यां जगत्यां सकलगुणयुतां मानितां मानवेन्द्रै ।
नीत्यां स्वातंत्र्यनेत्रीं त्वरितगतिमतीं नीलचक्राङ्किताम् ताम्
वन्दे त्वां केशरीयं सितहरितविभां भारतीयां पताकाम् ।।

–(हृषीकेश रचनावली, खण्ड 1. राष्ट्रचिन्तन, पृ० 279)

राष्ट्रियचिन्तनप्रधानकाव्यधारायां कविरयं राणाप्रताप महात्मगान्धि-कवीन्द्ररवीन्द्रनाथठाकुर-विनोबाभावे-वी० वी० गिरी-इन्दिरागान्धिप्रभृति-राष्ट्र-नायकानामपि यशोवर्णनं करोति । यथा–

राष्ट्रधर्महितार्थाय प्राणदानं करोति यः ।
त्यक्त्वा तनु हुतात्मा वै सोऽमृतत्वमर्जेन्नरः ।।
प्रतापासिप्रतापाङ्कै वैरिणः समराङ्गणात् ।
शरणाय पलायन्ते तपनातपतप्तवत् ।।

(हृषीकेश-रचनावली, पृ० 9)

महात्मगान्धिनो वेदनाजनके बलिदाने न व्यथितो भूत्वा तस्य दिव्यान् गुणान् स्मारं स्मारं स रसरुविः कथयति–

"अहिंसासत्यात्म्यां, स्वजनपदमुन्मोच्य परतः,
सुखीकृत्वा सम्यक् श्रमिककृषकान् शोषितगणान् ।
सदादेशं दत्त्वा सततमिह शान्तिप्रदमहो,
गतस्त्यक्त्वा प्राणान् परहितरतस्त्वं गतभयः ।।"

(हृ० र०, पृ० 9)

व्यापकविश्वशान्तिपृष्ठभूमौ राष्ट्रियसाहित्यप्रणेतारं कवीन्द्रं रवीन्द्रं संस्मर्त्य एतस्य गौरवगरिमाणमेवं गायति हृषीकेशमहाभागः–

सदा विश्वशान्त्यै नराराधनेन, स्वकान् पाठकान्पाठितो येन पाठः ।
महात्मानमेनं नृलोकेप्रसिद्धं कवीन्द्रं नमामि स्मरामि रवीन्द्रम् ।।

(हृ० र० 1, पृ० 9)

राष्ट्रीयमहापुरुषाणां मध्ये त्यागमूर्ति-राष्ट्रनायकनेहरोः पितरं पं० मोती-लालमेवं स्तौति चतुर्वेदिकविः–

न्यायागारे 'वाद' विद्याविधानं, नीतिक्षेत्रे योग्यविज्ञप्रधानम् ।
राष्ट्रस्त्रार्थे त्यक्तसर्वार्थमोहं, मोतीलालं त्यागमूर्ति नतोऽहम् ।।

(हृ० र०, भागः, पृ० 8)

2 पं० हृषीकेशचतुर्वेदिनः संस्कृतस्तोत्रसाहित्यं सुविपुलं सरसञ्च समुपलभ्यते, यस्मिन् वाणीवन्दना, लक्ष्मीवन्दना, श्रीरामाष्टकम्, गोपालगीतम्, श्रीकृष्णस्तवनम् शिवस्तवनम्, श्रीमहावीराष्टकम्, श्रीकृष्णताण्डवस्तोत्रम्, देववन्दनम् प्रभृतिभावपूर्णा रचना उल्लेखनीयाः सन्ति। एषु स्तोत्रेषु विविधवृत्तानि सालंकृतानि संप्रयुक्तानि सुकविना यथा–वाणी-वन्दनाया शालिनीवृतप्रयोगो दर्शनीयोऽस्त्यस्मिन् पद्ये–

वाणीं वीणावादिनीं ग्रन्थहस्तां, पुण्याम्बां कम्वृशुभ्राम्वरां ताम्।
हंसासीनां सस्मितास्यारविन्दां, वन्दे विद्याबुद्धिदां शारदां त्वाम्॥
(हृ० र०, पृ० 264)

सरसे श्रीरामाष्टकस्तोत्रे वसन्ततिलकावृत्तस्य रमणीयता दृष्टुं शक्यते एवम्–

पूर्णत्वपूर्णमथवाऽत्र किमुच्यते वै, साम्यं द्वयोरपि तयोरिह वस्तुभावात्
एवं तमेव सकलं च बुद्धा, ध्यायेत् सदा रघुपतेश्चरणारविन्दम्।
किं निर्मितं त्ववसितं कथय त्वया किम्,
तत्त्वात्मकं जगदिदं हि विधेर्विधानम्।
त्यक्त्वाऽभिमानमनृतं निजकर्तृताया,
ध्यायेत्सदा रघुपतेश्चरणारविन्दम्॥
–श्रीरामष्टकम् 4-5 (हृ० र०, पृ 229)

श्रीमच्छंकराचार्यस्तोत्रसरणौ सानुप्रासिकसरसकाव्यधारायां कविरयं गोपालगीते श्रीकृष्णगोपालरूपमाधुरोमेवं वर्णयति–

गोपीगोपच्चित्तकृतवासं, राधारत्तिरतमभिमतवासम्।
यमुनातीरनिकुञ्जविलासं श्रीवृन्दावनविरचितरासम्॥
भज गोपालं भज गोपालं······
केकिमुकुटमविकृतशुभवेशं, शोभितकाकपक्षयुतकेशम्।
चोरितभक्तवृन्दहृद्देशं, हृषीकेशमनिशं निखिलेशम्॥
भज गोपालं भज गोपालं······
–गोपालगीतम् 3-4, (हृ० र०, भाग 1, पृ० 269)

अपरे भावपूर्णे सरसश्रीकृष्णस्तवनेऽपि बालावृत्तप्रयोगः साधुकृतः कविना। यथा–

"यस्य नाम्नैव नश्यन्ति खेदा, यं हरिं 'नेति' गायन्ति वेदाः।
श्रीगिराऽव्ययं तं करालं नौमि वंशीधरं नन्दबालम्॥

सर्वदा योऽस्ति गर्वप्रहारी, कंसचाणूरप्राणापहारी ।
त 'हृषीकेश्वरं' केशिकालं, नौमि वंशीधरं नन्दबालम् ॥
(हृषीकेशरचनावली, पृ० 269)

श्रीचतुर्वेदिना सुविरचितशिखरिणीवृत्तस्य लालित्यमस्मिन् श्रीमहावीराष्टके द्रष्टव्यम्–

प्रयच्छत्यार्त्तेभ्यस्त्वमिभतमनोवाञ्छितंफलम्,
हरत्याशु भ्रान्तिं शिवमिह तनोत्येव जगतः ॥
चिरञ्जीवी भूत्वा भुवनविदितो यः कपिवरो,
'हृषीकेशो' नित्यं स्वजनहृदि सोऽयं विजयते ॥
(महावीराष्टकम्, 8)

रावणरचितश्रीशिवताण्डवस्तोत्रानुकृतौ पं० हृषीकेशचतुर्वेदो श्रीकृष्ण-ताण्डवस्तोत्रस्त रम्यरचनां 1951 ई० वर्षे (तदनुसारेण सं० 200 विक्रमाब्दे, फाल्गुनमासे कृष्णद्वितीयातिथौ) कृतवान् ।

कविरयं 'ताण्डव' पुरुषस्य नृत्यमात्रं मनुतेऽस्मिन् रौद्ररसस्य विद्यमानता ऽनिवार्या नास्ति तस्य मतानुसारम् । पञ्चचामरवृत्तैश्री कृष्णशोभामाधुर्यं लालित्य-पूर्णं वर्णयन् कविः कथयति–

वृषांसलम्बिकुन्तलैर्विचित्रकान्तकुण्डलै
र्विचुम्बिते कले गलेऽवलम्ब्य वन्यमालिकाम् ।
तनोतु वेणु किंकिणीसुनूपुरस्वरैर्युतं.
दधत्सुरम्यताडवं शिवप्रियः शिवं हरिः ॥१॥
धराधरेन्द्रधारणानवाप्तकायिकश्रमे,
सुमुञ्जुकञ्जनालिकऽतिकोम लाङ्ग लीकरे ।
धृताधराब्जवंशिकामृदुध्वनिप्रहर्षिते,
क्वचिन्मनोहरे हरौ मनो विनोदमेतुमे ॥३॥
प्रचण्डपापहारिणी प्रकाण्डपुण्यकारिणी
प्रसन्नगोकुलाङ्गना जनप्रभूतजल्पना ।
पुराष्टयामघोषिता गिरा सुघोषबालकैः
'हृषीकनाथ' भूषणा जगज्जयाय जायताम् ॥१५॥

(3) सुकविरयं शब्दालंकारपूर्णायां चित्रकाव्यप्रधानरचनायां परमप्रवीणो-ऽस्ति । अस्मिन् सन्दर्भे ककारादि श्रीकृष्णनाममाला प्रवर्णयुक्तनिरोष्ठ्य ओष्ठ्यपद्यानि

विशेषतयोल्लेखनीयानि सन्ति । यथा–एकमौष्ठ्यपद्यमत्र–

भीमवामे भवे वामे, भीमाभे भोः पविप्रभे ।
प्रेमाभ्रे विभवे भूपे प्रपापभवामुभे ।।

एवं पवर्गयुक्तं पद्यमेकं द्रष्टव्यम्–

यः पद्मपाणिः फणिशत्रुवाहनो, यो ब्रह्मरूपो भृगुपादताडितः ।
यो माधवः पूर्णपवर्गसंयुतः स सर्गवर्गादपवर्गदायकः ।।

श्रीगोपालस्तवनेऽपि प्रसादमाधुर्यगुणमयं सालंकृतञ्च चित्रकाव्यं विलसति एषु पद्येषु:–

यो गोपा[1] × × [2]राधितो देनोध्येय × [3]श्च श्रीदिवौकसाम् ।
गोपीराधासमायुक्तः स मुद्रा वृद्धिमाप्नुयात् ।।१।।

श्रीगोभिरनुयातस्तु, येनानन्दानृतं सृतम् ।
गोपतिं तिमिरान्तं तं, यतीन्द्रं वन्द्यमचर्ये ।।२।।
अचिरं रतियुक्तेभ्यः परमानन्दकारकम् ।
चित्ततस्तत्परेभ्यश्च त्वनिशं विघ्नदारकम् ।।३।।
श्रीकृष्णं मथुरानाथं मुकुन्दं रक्षकं सताम् ।
शान्तमभिजितात्मानं रञ्जनं चिन्मयं भजे ।।४।।
यो वा श्यामवपुष्मांस्तु, पवित्रः तत्त्वविद्विभुः ।
सुसंयतमनिन्द्यं तं, कलाभी राजितं हरिम् ।।५।।
ये जन्महारमम्लानमसंगं, संशयाच्छिदम् ।
कंसादिसंदरं देवं 'हृषीकेशं' नमाम्यहम् ।।६।।

उपर्युक्तस्तोत्रश्लोकेस्वङ्किताक्षरान् क्रमशः एकैकाक्षरपठनेन नवं पद्यं प्रणीतं भवति एवम्–

गोपीगोपचित्तकृतवासं, राधारतिरतमभिमतहासम् ।
यमुनातीरनिकुञ्जविलासं, श्रीवृन्दावनविरचितरासम् ।।

(हृ० र०, पृ० 273)

1. श्रीकृष्णताण्डवस्तोत्रम् (कवेर्वक्तव्यम्), हृ० र०, 1985 ई० आगरा-संस्करणम्, पृ० 279
2. तदेव–स्तोत्रम् पद्यसंख्या–1, 3, 15
3. हृषीकेश-रचनावली, प्रथमो भागः, पृ० 275

(4) विविधविषयकेषु सरसपद्येषु अर्थगाम्भीर्यपूर्णानि नीतिविषयकपद्यान्यपि प्राप्यन्ते कवेरस्य। कविरयं पूर्ववर्तिमनु-विदुर-भर्तृहरि-प्रभृतिनीतिकाराणां साहित्येन पूर्णतः प्रभावितः परिलक्ष्यते। यथा—

द्यूताण्डमांसमधुमीनपराङ्गनाध्वेकं ह्यनर्थकरणे व्यसनं समर्थम्।

यस्मिन् वसन्ति सकलानि जने त्विमानि,
दुष्टस्य तस्य विषये किमहो ब्रवीमि ॥

संस्कृतस्य सालंकृतानेकार्थिकाव्यपरम्परायां राघवनैषधीयाराघवपाण्डवीय-राघवयादवीयप्रभृतिकाव्यानुकृतौ पं० हृषीकेशचतुर्वेदिनापि श्रीरामकृष्ण (विलोम) काव्य, श्रीरामकृष्णायन (यमकश्लेषमय) काव्यग्रन्थयोः रचना कृता, यस्यै सुकवि-रयं डॉ० गुलाबरायरांगेयराघवराहुलसांकृत्यायनसदृशसाहित्यमनीषिभिः मैथिली-शरणगुप्तसदृशमहाकविभिः, म० म० डॉ० गौरीशंकर हीराचन्द ओझासदृश-विख्यातपुरातत्त्वविद्भिश्च प्रशंसितोऽभूत्।

संक्षेपे, अर्वाचीनश्रेष्ठहिन्दीसंस्कृतकविषु कविवरस्य पं० हृषीकेशचतुर्वेदिनो महत्त्वपूर्णस्थानमस्ति। एतस्य सामयिकसरससंस्कृतकाव्यरचनाभिः संस्कृतसाहित्यं समृद्धमभवत् संसारे। साम्प्रतमस्य समस्तसाहित्यस्य धार्मिकसांस्कृतिकसाहित्यि-कैतिहासिकादिविविधदृष्टया गम्भीरानुशीलनमनुसंधानमप्रकाशितभावपूर्णकृतीनां प्रकाशनं प्रसारणमपेक्ष्यते।'[1] □

---

1. एतद्विषयक विस्तृत समीक्षात्मक लेखः लेखकस्य अवलोकनीयः सागरिकायां वि० संवत्सरीये 2046, 27/2 अंके, पृ० 81–87

# अभिनवकथाकृतिः गोपालबन्धुः

गोपालबन्धुरिति नाम्नो गद्यकाव्यस्य यशस्विरचनाकारः डॉ० हरिनारायण दीक्षितः प्रतिभाशाली प्रतिष्ठितकविरस्ति। उत्तराखण्डे नैनीतालस्य कुमायूंविश्वविद्यालये संस्कृतविभागाध्यक्षपदमलंकुर्वाणोऽभिनवबाणोपमोऽयं रचनाकारः साहित्य-व्याकरणसांख्ययोगादिशास्त्रेषु प्रावीण्यं प्राप्य श्रीमदप्पयदीक्षितचरितम्, मेनकाविश्वामित्रम्, श्रीहनुमद्दूताद्यनेककृतीनां प्रणेताऽस्ति। श्रीहनुमद्दूतेऽनुपमसन्देशकाव्ये सत्कविरयं स्वकीयं परिचयमेवं प्रस्तौति—

रम्ये हृद्ये विमलचरिते भारते धर्मदेशे,
जालौनाख्ये लघुजनपदे चोत्तरे सुप्रदेशे।
ग्रामोऽस्त्येको भुवि पढकुलाख्यो न तुल्यो नवीनैः
प्रायः कृष्यां निहितमनसो मानवा यत्र सन्ति ॥

(श्रीहनुमद्दूतम् 109)

विप्रो मान्यस्सदसि रघुवीरस्सहायान्तनामा,
धर्मज्ञश्च प्रतुलविभवो मे पिता दीक्षितोऽस्ति।
पूज्या माता विमलहृदया श्रीसुदामाभिधा च,
तस्मिन् ग्रामे मम सुपितरौ वासमेतौ विधत्तः ॥

श्रीहनु० 110

तत्पुत्रोऽहं स्ववशहरिनारायणो [दीक्षितश्च,
सांख्ये योगे पदविवरणे काव्यशास्त्रेष्वधीती।
एतत्काव्यं जनकतनयाप्रीतयेऽकार्षं भक्त्या,
रामोऽनेनापि पवनसुतश्चापि तुष्टो भवेताम् ॥

(श्रीहनुमद्दूते, 111)

गोरक्षपुरतः पूर्वप्रकाशितकल्याणमासिकस्य कस्यचिदङ्कस्य 'गोपालभैया' इति लघुकथया प्रभावितो भूत्वा कुशलकथाकारः डॉ० हरिनारायण दीक्षितः सप्तदशानुच्छेदेषु गोपालबन्धुनाम्नि कथाकाव्ये राकेशनाम्न एकस्याभीरकुमारस्य, योऽल्पवयस्को, निर्धनः पितृविहीनः सरलहृदश्चासीत्, मार्मिककथां मनोहारिरूपेण

वर्णयति। कथाकृतेरस्या: प्रथमवारं प्रकाशनं 'ईस्टर्नलीक लिंकर्स, दिल्लीत: 1988 ई० वर्षेऽभवत्। आभीरकुमारं राकेशं विद्यालयपार्श्ववर्तिसघनवने हिंस्रवन्यजीवजन्तुभयाद्रक्षति अकारणकरुणाशीलो गोपालबन्धु:, निर्वहति च नि:स्वार्थस्नेहमयसहाय्यकार्यमन्तपर्यन्तमत; कथाकृते: शीर्षकं गोपालबन्धु: सर्वथा सार्थकमेव।

गोपालबन्धुकथाकृतौ भावपक्षकलापक्षयो: समावेश: शोभनोऽस्ति। कथायामनुच्छेदारम्भे यत्र-तत्र मध्ये च माधुर्यप्रसादगुणमयेषु एकपंचाशतसरसपद्येषु भावपक्षस्य परिपोष: प्राप्यते एव। त्रयोदशानुच्छेदे गुरुवन्दयायां द्वादशप[1]पद्यानि षोडशानुच्छेदे गोपालस्तवने सप्तदश[2] सरसपद्यानि च भावपूर्णश्रेष्ठस्तोत्रकाव्यस्य सुन्दरं निदर्शनं प्रस्तुवन्ति। अर्थगाम्भीर्यपूर्णनीतिपद्यान्यपि कथायामनुच्छेदारम्भे सारभूतानि मौक्तिकानीव मनोहराणि विलसन्ति। यथा–

(१) धनेन जात्या च पदेन गर्विता, जना न जानन्ति जनस्य भावनाम्।
कृपा-दयाभ्यां रहिता इमे सदा, तुदन्ति लोके सरलस्य मानसम्॥
(गोपाल० पृ० 19)

(२) दयते भगवान् यत्र जगदात्माजगतपिता।
प्रसीदन्ति जनास्तत्र सर्वे नात्रविचारणा[3]॥

(३) विचारवायोर्जवदोपितेन, कणेन दोषानलसम्भवेन।
भेत्तुं तमो वाञ्छति महौजसं य:, स एव विद्वान् पुरुषोऽस्ति लोके॥
(गोपाल० पृ० 27)

(४) मायासलिलमगाधं सम्बन्धशैवलं भवसिन्धुमृतम्।
मज्जन्त्युन्मज्जन्ति तरणेऽस्मिन् कुशलाबुधा अपि॥
(गोपाल०, पृ० 40)

गोपालबन्धुसरसकथायां सामान्यत: वैदर्भीरीतिमयी अनुप्रासपूर्णा प्रसादमाधुर्यगुणोपेता च ललितपदावली सर्वत्र विलसति। यथा–

---

1. गोपालबन्धु:, 1988 दिल्ली, पृ० 36-39 (गुरुवन्दना–तुलनीयं लेखकस्य डॉ० के० ना० द्विवेदिना गुरुमाहात्म्यशतकम्, 1981 कानपुर–संस्करणम्)
2. तदेव बन्धु, पृ० 53-57
3. ,, पृ० 59 (तुलनीया गोस्वामितुलसीदासस्य चौपाइयाँ)
जेहि पै कृपा राम के होई तेहि पै कृपा करै सब कोई॥
(रामचरितमानस)

गम्भीरपयोधरनिभध्वनिना मुखरयन् काननम्, तरलयन्, पिकाननम्, तिरस्कृतकामशोभया शरीरलताभया प्रकाशयन् दिग्वधूवदनम्, विनाशयन् सान्द्रतिमिरम्, लासयन् केतकीवनम्, विवधवर्णे विराजितेन शशिपटलसन्निभेन मयूरपिच्छमुकुटेन तिरस्कुर्वन् अमरीकबरीबन्धम्, ननकुसुमग्रन्थितेन वक्षःस्थलावलम्बमानेन मनोहारिणा हारेण समलंकृतकम्बुनीकाशकण्ठः, भक्तजनःदुखापनोदपरित्यक्तवैकुण्ठः, स्पर्शशीतलेन, मधुरपरिमलेन, पवनचञ्चलेन पीतपटेन सुविभूषितदेहमध्यदेशः, मातरिश्ववेगेन चंचत्कुंचितकेशः, मुखरायमाणैः, अविशालकायैः चरणनूपुरैः संकोचितमानसराजहंसमण्डलः विद्रुमपुञ्जमधरीकुर्वन् गोपालबन्धुः बालाभिमुखमागच्छन् समदृश्यत । (गोपाल०, पृ० 6)

सामासिकपदावल्यामपि सर्वत्र सरलता सानुप्रासिकता च संदृश्यते । यथा–"समायातो गोपालो रविरश्मिराजिसन्तापसमुत्पन्नस्वेदसलिलेन, परिवर्तितकम्बुनीकाशकम्रकन्धरेण, स्नेहसम्भरेण, हर्षपरेण रावेशेन सादरं समालोक्यत ।"

(पृ० 16)

कमनीये कलापक्षे कविना कथाकृतौ यत्र-तत्रानुप्रासश्लेषोपमारूपकोत्प्रेक्षाकाव्यलिंगविरोधाभासपरिसंख्याद्यलंकाराणां शोभनः संन्निवेशः कृतोऽस्ति । यथा–"जगदुद्यानपुष्पाणि शिशवः सत्यचेतसः, जीवात्मनां कथा कास्ति रोचन्ते परमात्मने ।" (गोपाल० अनु० 5, पृ० 13) "गृहीतनिखलशिक्षासम्भारः, कौशल्यया इव लब्धलोकाचारकौशल्यया, सुमित्रया इव प्रसादितसुमित्रया, विद्याप्रहितपुत्रया, मन्दालसया इव मन्दालसया, स्वकीयजनन्या विहितनिखिलगमनकालीनमंगलः, समभिमुखापतदुदीयमानमरीचिमालिरश्मिप्रभाप्रवाहपिञ्जरितमुखमण्डलः, हसन्निव श्रीदामानं श्रीकृष्णभक्तया, हरन्निव शशिलावण्यं स्वाभालाभया, समाकर्षन्निव मात्राशीराशिं श्रद्धया, त्यजन्निव व्यामोहं विद्योत्कन्ठया, निविडपादविन्यासया गत्या, एकाकी एव गृहाद्विनिरगात् ।" (गोपाल०, पृ० 5)

अन्यत्रापि अन्यालंकारमयीसरलसरला ललितपदावलीपरिलक्ष्या भवति कथाकृतौ । यथा–"गुरुदेवकरकमलावस्थितपात्रमुखादनारतं निर्गच्छन्त्या क्षीणयाऽपि अक्षीणया क्षीरधारया शनैः शनैः क्रमेण कुल्याम्भीधारयाकृत्रिमे सन्तरणकासारे इव परिपूर्णतां प्रयातेऽपि तस्मिन् कटाहे·· ···क्षीराभावो नाभूत् ।

(गोपाल०, पृ० 26)

गोपालबन्धुकथाकारः रसानुकूलं रम्यप्रकृतेश्चारुचित्रणं रूढगतचेतोहार्यालम्बनरूपे कथाप्रसंगेन सह कृत्वा स्वकीयसूक्ष्मनिरीक्षणशक्तेः सम्यक् परिचयं ददात्येव । यथा–सन्ध्यावर्णनसन्दर्भे कथाकारः कथयति–

यथापूर्वं नभोमण्डलादवतीर्णे कमलिनीकुलवल्लभे दिवानाथे, संध्यारागपटलारुणायमाने गगने, दिनकरविरहसन्तप्यमानासु सरोजिनीषु, संचारपूतानि वनस्थलानि कृत्वा दिनान्ते भवनगोष्ठोवद्धवत्सोत्कासु, अतएव सत्वरं समायान्जन्तीसु काननाद् धेनुषु, अवकाशं प्राप्य चंचलेऽपि निर्मलमानसे स्वकीयं गोपाल भ्रातरंस्मारं स्मारं गुरुचरणाभिवादनं कृत्वा अन्तर्हीनया अविरलपादविन्यासगत्या गृहाभिमुखं प्रतस्थे।" (गोपाल० पृ० 9)

एवमेव वर्षर्तौ मेघवर्णनमपि मनोहरं वर्तते, यत्र कवेरसामान्यनिरीक्षणशक्तिसमन्वितस्वाभाविकता संलक्ष्यते। यथा—"आकाशे विरलविरला, धवलधवला कतिपय मेघा इतस्ततो वायुवेगवशादुड्डीयमाना अदृश्यन्त। साम्प्रतं त एव समीरणवेगावरोधात्परस्परं संगच्छमाना घनीभवन्तो नीलोभवन्तो मनोरमरमणीविरहातुररागिजनमनोमन्मथभेदमुद्वेलनन्तः, मयूरसमूहान् कूजितुं नर्तितुं च प्रेरयन्तः, कर्षकान् प्रीणयन्तः, कर्षककामिनीनयनकौतुकं जनयन्तः कीर्तिकामविजिगीषुमेदिनीपतिचतुरंगिणोचमूगतिं संशायन्तः, क्रमेलकगजगन्धर्वनगराद्यनेकानाकान्नभसि। (गोपालबन्धुः, पृ० 43)

गोपालबन्धोः कमनीयकथानके विद्यमानामनधिकपात्राणां चरित्रचित्रणमपि हृदयावर्जकं वर्तते। सरलहृदयः सुकुमारो विश्वस्तो बालसुलभचांचल्येन मनोमोहकश्च राकेशः, परमोदारः, ज्ञानी, कृपालुश्च गुरुदेवः, प्रेमपरायणा, वत्सलमयी, स्निग्धा च भ्रातृजाया राधा, करुणाशीलः, शरण्यः भवभयबाधाहारको विपत्तिविदारको विश्वास्यो बन्धुकल्पो गोपालबन्धुश्च सर्वाणि पत्राणि स्वचारित्रिकोत्कृष्टविशेषताभिः सहृदयानां चेतांसि चौरयन्त।

गोपालबन्धोः सरससंवादयोजनाऽपि कथानकमसाधारणगतिं दत्त्वाऽस्य रोचकतामपि वर्धयति। यथा—गुरुदेवराकेशयोः स्वाभाविकसंवादः संलक्ष्योऽत्र—"वत्स राकेश। त्वमिद क्षीरं कुतः समानीतवानसि!" तत्रस्थिते एकस्मिन्नासने उपविशन् सस्नेहं पप्रच्छ गुरुदेवः।

"गुरुदेव। इदं क्षीरं मम गोपालबन्धुना मह्यं दत्तमस्ति।" सविनयमुत्ततार राकेशः। "वत्स, तावकोऽयं गोपालबन्धुः कुत्र वसति?" "वने वसति।" "गेहे आगच्छति!" "नहि!" "कदाचिदपि नैव?" "नहि।" "कदाचिदपि नैव।" (गोपाल० पृ० 27, 29)

एवमेव राकेशराधयोर्भावपूर्णलोकभाषामय सहृदयान् संवादः समाकर्षतिभाभि! भ्राता कथयति स्म, यत्तव शिरसि वेदनास्ति, मां कथय। अहं मर्दयामि—उत्तिष्ठन् सत्याग्रहं निवेदयांचक्रे राकेशः। (गो०, पृ० 59)

गोपालबन्धोः कमनीयकथानके गीतिकल्पैः सरसभावपूर्णस्तोत्रैः रमणीयता वर्तते। ललित्यपूर्णमेकं स्तोत्रस्य गीतिविरूपं [illegible]

अहमकिञ्चनतां धरणीतले, परिबिभर्मि भवामि च दुःखितः ।
त्वमथ मे पथि बोधयिता प्रभो, भव भवाब्धि रुज च विनाशया ।।
मम च जीवननौर्भववारिधौ, निपतिता भवदाश्रयमिच्छति ।
कुरु कृपां रय पारमिमां प्रभो, इतरथा लयमेमि निराश्रया ।।
(गोपाल० 3, 10 पृ० 53, 55)

गोपालबन्धुकारः संस्कृत–साहित्यस्य पूर्ववर्तिप्रतिष्ठितगद्यपद्यरचनाकाराणां प्रवीणतया भावानुहरणमपि करोति, येनास्याः कथाकृतेः प्रौढतापूर्णभावोत्कर्षेण सह साहित्यिकस्तरेऽपि गौरवमयी भवति । यथा–

"पितराबरितुल्यो तौ, याभ्यां पुत्रो न पाठ्यते[1] ।"
"अतोऽमुमेव प्रतीक्षमाणा, उपोषिताभ्यामिव लोचनाभ्यां पिबन्ती[2] ।"
"वामनयन जायमानकण्डूतिपरिहारकामामपि स्वीयां प्रियां[3] भृगी मपहाय मृगाः...."
"नदत्केशरिघुरघुरायमाणभल्लूककुलसंकुलात्काननाद्भीमाम्[4]...।"

"तस्मिन् नभसि मासे—नदत्पयोधरमात्सर्यंद्विगुणीकृतभीमप्रतिध्वनिपूर्णकन्दहां परिणाहशालिनी, मत्तोन्मत्तमहावराहद्रंष्टासमुत्खातधरतीमण्डलां, तमालपटलनीलां, व्याकुलत्रानरकुलाकुलां तामतिभयंनरोमटवीं दर्शं[5] दर्शं......। एवमेव च–"कर्त्ता महाश्चर्याणाम्[6]...."माया महीयसी भ्रातर्विष्णोरतुलतेजसः[7] ज्ञानानलमुपासीनं विद्वांसमपि कर्षति । "सर्वतो विकसल्लतापटलप्रसुनसुरभिते, निम्बदम्बाशोकरसालबकुलादिविविधतरुवृन्दपरिवर्धितचारुते, कर्णकुहरमोदककोकिलकुलकण्ठारावकूजिते, यत्र तत्रोत्प्लवमानमृगमयूरशावके, प्राच्यप्रांगणो-

---

1. गोपालबन्धुः, पृ० 3–तुलनीयं हितोपदेशस्य पद्यमिदं–
"माताशत्रुः पिता वैरी येन बालो न पाठितः ।"
2. तदेव, पृ० 11 तुलनीयं रघुवंश 2/19
वशिष्ठधेनोरनुयायिनं तमावर्त्तन्मानं वनिता वनान्तात् ।
पपौ निमेषालसपक्ष्मपंक्तिरुपोषिताभ्यामिव लोचनाभ्याम् ।।
3. ,, पृ० 59, तुलनीययमभिज्ञानशाकु० 6/19
श्रृंगे कृष्णमृगस्य वामनयनं कण्डूयमानो मृगीम् ।
4. ,, पृ० 4-5, तुलनीयं कादम्बर्याः "विन्ध्याटवीवर्णनम्" कादम्बरी पृ० 156
5. ,, ,, ,, ,, ,, ,,
6. ,, पृ० 6 तुलनीयं कादम्बर्याः "शूद्रकवर्णनम्" पृ० 29 (कादम्बरीकथामुखम्)
7. पृ० 32 तुलनीयं श्रीमद्भागवत 10/1/25–"विष्णुमायामाहात्म्यम्" ।

ल्लिखितवेदिके[1] प्रभृत्यवतरणान्यपि भावानुहरणपूर्णानि विलसन्ति ।

संक्षेपेण, कथयितुं शक्यते, यत् संस्कृतसाहित्येऽभिनवकथाकृतिरियं स्वकीयानेकसाहित्यिकविशेषताभिः सहृदयविदुषां ध्यानाकर्षणाय सर्वथा समर्थाऽस्ति । श्रेष्ठगद्यकाव्यसर्जनायास्याः कथाकृतेर्यशस्विरचनाकारः डॉ० हरिनारायणदीक्षितः साधुवादपूर्वकमभिनन्द्यतेऽस्माभिः, आशास्यते च यत् कीर्तिशाली कृतो अयं भविष्येऽपि भव्यां भारतीयलोकजीवनाधृतचारुगाथामपि गद्यकाव्ये चित्रीकृत्य स्वकीयश्रेष्ठसाहित्यिकनिदर्शनेन संस्कृतसाहित्यं समृद्धं करिष्यति ।[2]

□

1. ,, पृ० 19 तुलनीयं कादम्बर्याः जाबालेरा आश्रमवर्णनम् पृ० 323
2. लेखकस्य विस्तृत समीक्षाऽवलोकनीयः सागरिकायाः वि० सं० 2046 तमे 27/2 अंके, पृ० 87-92

# इटावा-जनपदे विरचितं संस्कृत-साहित्यम्

महाभारतकालिकपुरातनपञ्चालराज्यस्य दक्षिणयङ्गरूपे इटावा-जनपदस्य भौगोलिकवैशिष्ट्ययुक्तावस्थितिरस्मै न केवलमैतिहासिकं, राजनैतिक सांस्कृतिकञ्च महत्त्वं प्रदत्तवती, प्रत्युतास्य व्यापकपृष्ठभूमौ साहित्यसर्जनायाः क्षेत्रेऽनया देशस्य दिग्दिगन्तेऽपिकीर्तिकौमुदी विकीर्णा। यत्र हिन्दीकाव्यजगद् गंगदेवशिशुनीरजसदृश-सरस्वतीपुत्रैः सप्राणं समृद्धञ्च निर्मितम्, तत्रानेकसंस्कृतज्ञमनीषिणोऽपि स्वकाल-जयिनीभिः कृतिभिरिटावाजनपदमत्यधिकं गौरवान्वितं कृतवन्तः। प्रस्तुतशोधलेखे इटावाजनपदे विरचितानां महत्त्वपूर्णसंस्कृग्रन्थानां तत्सम्बन्धिग्रन्थकाराणाञ्च सारगर्भिता समीक्षा क्रियते।

समीक्ष्यं-संस्कृत साहित्यमधोलिखितरूपेण वर्गीकर्तुं शक्यते-




## प्राचीन (शास्त्रीयं) संस्कृतसाहित्यम्

भगवन्तभास्करम्—मध्ययुगीनसंस्कृतग्रन्थेष्वास्य महत्त्वपूर्णं स्थानं विद्यते। उत्कृष्टकोटिकस्मृतिग्रन्थेष्वाधारिता संस्कृतकृतिरियम्, यस्यांद्वादश मयूखाः सन्ति—

(1) संस्काराः, (2) आचाराः, (3) समयः, (4) श्राद्धम्, (5) नीतिः, (6) व्यवहारः, (7) दानम्, (8) उत्सर्गः, (9) प्रतिष्ठाः, (10) प्रायश्चित्तम्, (11) शुद्धिः, (12) शान्तिः।

भगवन्तभास्करस्य रचयिता, महाराष्ट्रियोद्भटमीमांसकस्य पण्डितशङ्कर-भट्टस्य व्यवहारतत्त्वनाम्ना उपयोगितादृष्ट्या प्रकाशितम्। व्यवहारविषयस्यास्याः रचनायाः विषये लेखकस्य समीचीनं कथनमस्ति—

"उक्त्वा नृपनयरीतिं नत्वा भास्वत्पदाम्बुजं सम्यक्।
विरचयति नीलकण्ठो व्यवहारविनिर्णये किञ्चित्॥"

**उपनिषद्भाष्यम्**–स्वामिदयानन्दशिष्यः, पं० नेकरामशर्मणः सुपुत्रः पं० भीमसेनशर्मा (जीवनकालः 1911 वि० संवतः–1975 वि० सं० पर्यन्तम्) आर्यसमाजस्य सिद्धान्तेषु आस्थासमाप्तौ 1955 वि० संवत्सरे इटावातः 'ब्राह्मणसर्वस्वम्" पत्रं[1] प्रकाश्यार्यसमाजस्य सिद्धान्तानां खण्डनेन सनातनधर्मस्य मण्डनेन सार्धं सुप्रसिद्धोपनिषद्ग्रन्थानां सुन्दरं भाष्यमलिखत्। शाङ्करभाष्यदृष्ट्या पं० शर्मणा कृतभाष्यस्य महत्त्वमल्पं नास्ति।

**भगवद्गीताभाष्यम्**–पं० भीमसेनशर्मणा श्रीमद्भगवद्गीताया अपि महत्त्वपूर्णं भाष्यं कृतमस्ति यस्मिन् गीतादर्शनस्य उत्कृष्टा मीमांसा कृता। पूर्वापरगीताभाष्याणामिव इदमपिविशेषं वैदुष्यपूर्णं विद्यते।

**मनुस्मृतिभाष्यम्**–कुल्लूकभट्टप्रभृतिप्रसिद्धटीकाकाराणामिव पं० भीमसेनशर्मा मनुस्मृतेः सुन्दरंभाष्यं विरच्य स्वकीयस्मृतिज्ञानस्य सुपरिचयं दत्तवान्।

**अष्टाध्यायीभाष्यम्**-महाभाष्यकार-पतञ्जलिप्रभृति-प्रसिद्धवैयाकरणानामादर्शेऽयं संस्कृतव्याकरणस्य पाणिनिकृताष्टाध्यायीतिसर्वमान्यग्रन्थस्य सुन्दरं भाष्यं प्रणीतवान्।

पं० भीमसेनशर्मण उपर्युक्तसंस्कृतभाष्यग्रन्थाः प्रकाशिता अभवन्, किन्तु सम्प्रति इमे सर्वसुलभा न सन्ति। वि० संवत्सरे 1966 तमे पं० शर्मा कलिकाताविश्वविद्यालयस्य संस्कृतप्राध्यापकपदे नियुक्तोऽभवत्; यत्रायं स्नातकोत्तरकक्षायाः छात्रान् वेदमपाठयत्। काशीहिन्दूविश्वविद्यालयीश्रुतिस्मृतिवेदादिप्राच्यविद्याविभागस्य प्राध्यापकात् पं० भीमसेनशर्मणः सर्वथा भिन्नो भवान्।[2]

## अर्वाचीनं (शास्त्रीयं) संस्कृतसाहित्यम्

**संस्कृतशब्दार्थकौस्तुभम्**–अर्वाचीनसंस्कृतकोशग्रन्थोऽयमत्यन्त लोकप्रियोऽस्ति। अस्य प्रकाशनं प्रयागतः[3] ई० 1957 वर्षेऽभवत्। अस्य लेखकः इटावा (छिपैठी) निवासी माथुरयशस्विपुत्रो नीलकण्ठभट्टोऽस्ति। जीवनकालोऽस्य म० म० डॉ० पी० वी० काणेप्रभृतिभिः[4] विद्वद्भिः[5] 1610 ईस्वीतः 1664 ई० उ० निर्धारितः।

---

1. इटावा जनपद के हजार साल, पं० कृपानारायणपाठकः, द्वितीय सं०, इटावा, पृ० 181।
2. कालिदास ग्रन्थावली, सं० पं० सीताराम चतुर्वेदी, अलीगढ़, (भूमिका एवं समर्पण)।
3. प्रकाशक-रामनारायण लाल, प्रयाग, 1957 ई०।
4. धर्मशास्त्र का इतिहास (सं० अर्जुन चौबे काश्यपः), भाग 3, लखनऊ, भूमिका, पृ० 16।
5. संस्कृत साहित्य का आलोचनात्मक इतिहास, डा० रामजी उपाध्याय, प्रथम सं०, प्रयाग, पृ० 200-220।

स्वकीयोत्कृष्टलेखनशैलीमाधुर्यविद्वत्तास्मृतिज्ञानादिदृष्ट्या ग्रन्थोऽयमन्यधर्मशास्त्र-ग्रन्थेषु मूर्धन्यो मन्यते। स्मृतिभास्कररूपेणास्य[1] प्रकाशनम् 1879-80 ई० वर्षे वाराणस्यामभवत्। ग्रन्थरत्नमिदं नीलकण्ठभट्टेन स्वाश्रयदातुः यमुनाचर्मण्वत्योः संगमस्य इटावाजनपदान्तर्गतभरेहनाम्नः स्थानस्य सेंगरवंशीयराज्ञः भगवन्तदेवस्य सम्मानार्थं विरचितम्। कविनाऽस्मिन्सन्दर्भे स्पष्टमेव परिचयात्मकप्रस्तावनाया-मुक्तम्—

चर्मण्वती तरणिजा शुभसङ्गमस्य, सान्निध्यमाजिकृतशालिनि मध्यदेशे।
ख्याता भरेहनगरी किल तत्र राजा राजीवलोचनरतो गवतदेवः ॥१॥

ततोऽप्यभूद् भूपतिशाहदेवः स्वकीर्तिभानिर्जितदुग्धसिन्धुः।
अभूत्ततः श्रीभगवतदेवः सदैव भाग्योदयवान् क्षितीशः ॥९॥

(भगवन्तभास्करम्)

"आज्ञप्तस्तेन राज्ञा विबुधकुलमणिर्दाक्षिणात्यावतंसो,
भट्टः श्रीनीलकण्ठः स्मृतिषु दृढमतिर्जैमिनीयेऽद्वितीयः
आज्ञामादाय मूर्ध्ना सविनयममुना तस्य सर्वान्निबधान्,
दृष्ट्वा सम्यग्विविच्य (?) विरचितो भास्करोऽयं द्वितीयः ॥

अस्य ग्रन्थस्य षष्ठो व्यवहारमयूखोऽत्यन्तं महत्त्वपूर्णोऽस्ति, यतोऽस्मादेव मुम्बई (महाराष्ट्रप्रान्तीय) उच्चन्यायालयात् प्रिवीकाँउन्सिलपर्यन्तं हिन्दूविधानस्य प्रमुखं विधानं स्वीकृतम्।[2]

**व्यवहारतत्त्वम्**—नीलकण्ठभट्टस्य व्यवहारमयूखप्रकरणस्यैव संक्षिप्तं संस्करणं कालाचतुर्वेदी पं० द्वारकाप्रसादः शर्माऽस्ति, यो डी० ओ० सी०, एम० आर० ए० एस० साहित्यभूषणाद्युपाधिभिर्विभूषितोऽस्ति। सप्तवर्षपर्यन्तं भवान् अखिलभार-तीयहिन्दीसाहित्यसम्मेलनप्रयागस्य प्रधानमन्त्रिपदमलङ्कुर्वाणः शतं हिन्दीसंस्कृत-ग्रन्थरचनामकरोत् येषु वाल्मीकिरामायणमहाभारतादिग्रन्थानां हिन्दीभाषाटीका-ग्रन्थाः, वैदिकसर्वस्व-हिन्दीचरिताम्बुधि-प्रभृतिग्रन्थाश्चोल्लेखनीयाः सन्ति।

संस्कृतशब्दार्थकौस्तुभेन सह संस्कृत-हिन्दीकोषग्रन्थोऽपि श्रीमता लखनऊतः 1917 ई० वर्षे प्रकाशितः। पूर्वं सरस्वतीसम्पादकः हिन्द्या उन्नायकः पं० श्री श्रीनारायणचतुर्वेदी 'श्रीवरः' भवत एव ज्येष्ठपुत्रोऽस्ति।

---

1. धर्मशास्त्र का इतिहास, डा० पी० वी० काणे (सं० अर्जुन चौबे काश्यपः) भाग 1, पृ० 93।
2. द्रष्टव्यम्—डा० हरीसिंहकृत हिन्दूकोड।

**शान्तगीता**–अध्यात्म-दर्शन-शास्त्रयोराधारित: संस्कृतकाव्यग्रन्थोऽयं सुन्दर-श्लोकेषु निबद्ध: यस्मिन् सृष्ट्युत्पत्तित: वर्णाश्रमव्यवस्थापर्यन्तं समाजस्य चारुचित्रणं विद्यते। ग्रन्थस्यास्य रचयिता क्योंटरा (औरैया) निवासी पं० गौरीशंकरवाजपेयिन: पुत्र: पण्डित-मधुसूदन: वाजपेयी वर्तते, य: संस्कृतस्य प्रसिद्धपण्डितरूपेण औरैयायां पौरोहित्यकर्मणा सह धार्मिकराष्ट्रियविषयेषु साहित्यसर्जना अकरोत्। "राष्ट्रीय-धर्मसनातनम्"[1] भवतां द्वितीयो महत्त्वपूर्णो ग्रन्थोऽस्ति, य: गद्य-पद्यमिश्रितरूपेण-विरचितोऽस्ति।

## अर्वाचीनं रचनात्मकसाहित्यम्–

**देवदूतम्**–संस्कृतस्य समृद्धसन्देशकाव्यपरम्परायां मेघदूतस्यादर्शे देवदूतखण्ड-काव्यस्य संरचना 13, मन्दाक्रान्ताछन्द:सु क्योंटरा (औरय्या) निवासिना पं० बद्रीदयालशुक्लेन 'सुधाकरेणा'ऽभवत्। प्रकाशनमस्या: कृते: कालान्तरे कविकुला-यत: (दतियात:) अभवत्। काव्येऽस्मिन् पण्डितजवाहरलालनेहरूधर्मपत्नी कमला-नेहरू: कञ्चिद् देवदूतम् भारतं प्रेषयति। प्रसंगेऽस्मिन् भारतस्य गौरवमयातीतेन सह वर्तमानयुगीनभ्रष्ठनेतृणामपि यथार्थं चित्रण कृतम्। यथा–

नेतारश्चेदपधनधियो निष्क्रियोत्कोचजीवा:,
मिष्टावाच: कपटपटवो वञ्चका सञ्चिताशा:।
नाशाय स्यु स्वभुवि सुलभा: पेशला: श्वेयवस्त्रै:,
नि:सिद्धान्ता: कथय न कथं नङ्क्ष्यति त्वेष देश:॥

देवदूतम्

**गान्धीसौगन्धिकम्**–पं० सुधाकरशुक्लस्येदं विंशतिसर्गात्मकं सुन्दरं महा-काव्यमस्ति, यस्मिन् कलापक्षो विशेषरूपेण द्रष्टव्योऽस्ति। क्रियासु लिट्लकार-प्रयोगस्य बाहुल्यं प्रस्तुतपद्येऽत्रेलोकनीयम्–

"बभौ नभौ भू: शुशुभे दिदीपिरे दिशोऽजरायामजिराणि रेजिरे।
ललाल लक्ष्मीरतलस्य चैवमुच्चराचरे चारुरुश्चकासिरे॥"

(गान्धीसौ०)

**भारतीस्वयम्वरम्**–पं० सुधाकरविरचितमिदमपि तस्य द्वितीयं महाकाव्यं, यस्मिन् द्वादशसर्गेषु भारतीस्वयंवरं वर्णितवान् महाकवि:। महाकाव्यस्य समस्त-शास्त्रीय-लक्षणैर्विलसितमस्य माधुर्यप्रसादगुणमय्या: पदावल्या: लालित्यमत्यन्तं हृदयावर्जकमस्ति। यथा–

---

1. इटावा जनपद के हजार साल, पृ० 192

सा सागरस्य गरिमा त्वरिमारमस्य मायामयस्य महिमा च हिमालयस्य ।
माधुर्यभृन्मधुरिमा मधुसूदनस्य सोमस्य भा च सुषमा कुसुमाकरस्य ।।
भारतीस्वयंवरम् ।।

केलिकलश:-अस्यैव महाकवेरन्येयं खण्डकाव्यकृतिरस्ति, यस्य सरसता, सानुप्रासिकता प्रसादमाधुर्यगुणमयीपदावली सौष्ठवादिवैशिष्ट्यं मनोहरं वर्तते । अत्रोदाह्रियते इदं काव्यसौष्ठवसम्पन्नं छन्द:-

"सत्यं वदामि मधुनाप्यधरे धरामि,
स्पर्श: क्व तस्य चषकस्य च तस्य मानम् ।
हृन्मोचनेन मदिरारुलोचनेन,
त्वर्षेण माययतु चेद्वद किं करोमि ।।"

(के० क०)

भारतीभावनम्-इदमपि सुधाकरप्रणीतं संस्कृतमुक्तकाव्यम्, यस्य माधुर्य्य-गुणसमन्विताऽनुप्रासिकता लालित्यञ्च उल्लेखनीयमस्ति । अवलोक्यतामेकं पद्यम्-

पङ्केरुहमुखि शङ्के रङ्के रुष्टासि मे देवि !
अङ्के ह्यचिरकलंके पर्यङ्के त्वेहि कल्याणि !

भा० भा०

दुर्गादेवनम्-अस्यैव महाकवेरिदमेकं सुन्दरं स्तोत्रकाव्यं, यस्मिन् दुर्गां प्रति अनन्या भक्तिभावना प्रकटिता । कृतेरस्य काव्यसौन्दर्यं सहृदयसंवेद्यमस्ति ।

इन्दुमतीनाटिका-नाट्यशास्त्रीय परम्परायामाधारितेयं चतुरङ्कानां शोभना नाटिकाऽस्ति, यस्यां कलापक्षसौन्दर्यं सर्वत्र विलसति । मनोहारिण्या: ललितपदा-वल्या: छटावलोकनीयाऽस्मिन् पद्ये-

यथा यथान्दोलयतीह दोलनन्तथा तथान्दोलयतीव मे मन: ।
सुचारुचीरच्युतचञ्चलस्फुरत् स्फुरद्भिराक्रान्तति हन्त कुन्तलै ।।
इन्दु० ।।

महाकवि: सुधाकर: उपर्युक्तग्रन्थान् रचयन् दतियात: प्रकाशयञ्श्च नि.सन्देह-मिटावाजनपदं गौरवान्वितमकरोत् ।

सावित्रीचरितम्-सत्यवत् सावित्र्यो: सुप्रसिद्धं प्राचीनकथानकं सप्ताङ्केषु आदर्शरूपेण चित्रयन् एस० ए० वी० कालेज, भरथनाया: संस्कृतप्रवक्ता डॉ० मिजाजी-लालशर्मा नाटकग्रन्थस्यास्य रचयिताऽस्ति । सत्यवत: पितु: द्युमत्सेनस्य कथने-ऽस्मिन् कीदृशी मार्मिकी व्यथा व्याप्ताऽस्ति-

"गतेऽपि राज्ये गतयौवनोऽपि, प्रभुत्वेऽपि, विलोचनेऽपि।
निमज्जितोऽहं न हि शोकसिन्धौ, यथा गतोऽहं-सुतशोकदीनः ॥
(सावित्रीचरित्रम्)

दमयन्तीचरितम्–महाभारतस्य प्रसिद्धनलोपाख्याने आधृतमिदमपि डॉ० मिजाजीलालशर्मणा सप्ताङ्केषु विरचितमुत्कृष्टं चरितात्मकं नाटकमस्ति। नाटकस्य भाषा सर्वथा सरसा सरला च विद्यते। बाहुकरूपिणः नृपनलस्य शोकपूर्णायामस्यामुक्तौ कीदृशी हृदयविदारिणी व्यथा विद्यते। विलोक्यताम्–

हा हा विधे ! पश्य दशां मदीयामतः परं किं भविता ममाग्रे।
निमज्जितोऽहं बत शोकसिन्धौ मार्गं न पश्यामि कुतः प्रयामि ॥
(दमयन्तीचरितम्)

वस्तुनेतृरसादिनाट्यशास्त्रीयतत्त्वानां दृष्ट्या सफलेयं नाट्यकृतिः। अस्य प्रकाशनं भरथनातः (इटावातः) अभवत्।

नेहरूचरितम्–डॉ० एम० एल० शर्मणः संस्कृतखण्डकाव्यकृतिरियं द्विसर्गात्मिका यस्यां राष्ट्रनायकनेहरूमहाभागस्य उदात्तगुणमण्डितस्य व्यक्तित्वस्य निरूपणं विद्यते। गतवर्षे एवास्य प्रकाशनं भरथनातोऽभवत्।

निःसन्देहं डॉ० शर्मणः एकनिष्ठ-संस्कृतसाहित्यसर्जनया इटावाजनपदं गौरवान्वितमभवत्। गतवर्षे भवतः एको नाट्यग्रन्थः उत्तरप्रदेशशासनेन पुरस्कृतः। "महाकवि जगद्धरकृतस्तुतिकुसुमाञ्जलिः एकमध्ययनम्" विषये भवतः शोधग्रन्थः कर्णपुरविश्वविद्यालयेन पी-एच० डी० उपाधये स्वीकृतः।

कालीदासीयम्–उच्चस्तरीयोऽयमेकः संस्कृतगद्यग्रन्थः, यस्मिन् कालीदासविषयकानामष्टशोधपूर्णानां लेखानां संकलनं विद्यते। कालिदासीयम् इति शीर्षके–ऋषि-आश्रमाणां वैशिष्ट्यम्, कालिदास–कृतिषु सीमान्तविदेशिराज्यानामुल्लेखः, कालिदासोद्भ्यभिद्ययोः समीकरणम्, कारापथराज्यस्य स्थितिनिर्धारणम्, कालिदासकाव्ये राष्ट्रियभावना सांस्कृतिकचेतना च कालिदासकृतिषु नगरवर्णनम् प्रभृति· शोधलेखाः सागरिकायां (संस्कृतत्रैमासिक्यां) सागरतः, 1978 वर्षे प्रकाशिता अभवन्। इमे शोधलेखाः अनेकैः मूर्धन्यैः प्राच्यविद्याविद्भिः प्रशंसिता अभवन्।

गद्यग्रन्थस्यास्य लेखकः डॉ० कैलाशनाथद्विवेदी, जनतामहाविद्यालये, अजीतमलनाम्नि स्थाने संस्कृतविभागाध्यक्षपदे कार्यरतोऽस्त्यासां पंक्तीनां लेखकः।

शाकुन्तलीयम् (शाकुन्तल सौरभम्)–अभिज्ञान शाकुन्तलमधिकृत्य काव्यत्वमेयं कालिदासीयभावरक्षणेन सह द्विवेदिनो पात्रगतमौलिकोद्भावनाः प्रकटयति प्रसादमाधुर्यगुणसमन्विताऽलंकृतकाव्यामाध्यमेन। रचनाया अंशाः गीर्वाणसुधा,

भारतीयपरिजातम् व्रजगन्धादूर्वागुञ्जारव: गैर्वाणी प्रभृतिपत्रिकासु प्रकाशिता: सन्ति। द्रष्टव्यम् "अर्वाचीनसंस्कृतम्" नवदिल्ली 10/2 अंक: "शाकुन्तलीयम्" जनवरी 1991, पृ० 30–37।

गुरुमाहात्म्यकशतम्–प्रस्तुतपंक्तीनां लेखकस्य (डॉ० कै० ना० द्विवेदिन:) मौलिकी मुक्तक (खण्ड) काव्यकृतिरियम्, यस्यां 109 छन्दांसि विद्यन्ते। अस्या: प्रतिपाद्यविषय:-मङ्गलाचरणम्, विषयावतरणम्, विषयप्रतिपादनम्, प्राचीनकाले आदर्शगुरूणां निदर्शनम्, आधुनिककाले गुरूणां स्थिति: उपसंहारश्चेतिषड्खण्डेषु प्रस्तुतोऽस्ति। अस्य शतककाव्यस्यआर्या-वंशस्थ-भुजंगप्रयात-वसन्ततिलका-मालिनी-शिखरिणीप्रभृति-अधिकांशपद्यानि 'गुरुमहिमा' नाम्न्या: मासिकपत्रिकाया: (राजपुर-कर्णपुरत: 1964 वर्षत: 1967 वर्षपर्यन्तमङ्कानां) मुखपृष्ठेषु नियमितं प्रकाशितानि अभवन्। यथा–

पशुपटधनदानेभ्यो वरं भूमिदानम्,
बहुक्षुधितपिपास्वोस्स्तृप्तिदानं वरं हि।
निखिलजगति विद्याया: समं नास्ति दानम्,
इह न खलु सुलभ्यस्तस्य दाता दयालु:॥
विमूढ़े जीवान्धे विमलतमदृष्टिं नयति य:,
महामायापाशैर्निगडितनृलोकं सुमतिद:।
निमज्जन्तं जीवं भवजलनिधेस्तारयति यो,
असारे संसारे गुरुजनसम: को गुरुतर:॥

अस्य शतककाव्यस्य प्रकाशनं सुबोधप्रकाशन-कर्णपुरत: 1981 वर्षे (गुरुम० 4647 अभवत्,)

कुसुमाञ्जलि:–इयमप्यासां पंक्तीनां लेखकस्य डॉ० द्विवेदिन: एका मुक्तक-काव्यकृतिरस्ति, या स्तोत्रकाव्यं कथयितुं शक्यते; यतोऽस्यां सरस्वती-शिवहनुमत्-श्रीरामकृष्णादिदेवै: सह गान्धिविवेकानन्दसदृशमहापुरुषाणामपि स्तवनं कृतमस्ति। अस्या अनेकानि पद्यानि प्रकाशितानि सन्ति सामयिकपत्रपत्रिकासु, किन्तु सम्पूर्णं संकलनमप्रकाशितमस्ति। 'ईशस्तुतौ' रचितमेकं पद्यं प्रस्तूयतेऽत्र सहृदयानां समक्षं–

हरतु भवविकारं व्याधिराशिं दुराशां,
दिशतु जनगणं स ज्ञानज्योति:स्वरूपम्।
भवतु भरतभूमिर्भव्यभावै: समृद्धा,
वितरतु वरदानं विश्वपो व्योमकेश:॥

(ग्रामोन्मुखम् 1980)

प्रस्तुतपंक्तीनां लेखकस्य (डॉ० कै० ना० द्विवेदिन:) प्रकाशिताप्रकाशिता: मौलिक:-सम्पादिताश्चानेके संस्कृतग्रन्था: विद्यन्ते, येषु इमे उल्लेखनीया: सन्ति—

'संस्कृतनिबन्धमञ्जूषा'[1], कविकालिदास-कालिदास की कृतियों में भौगोलिक स्थलों का प्रत्यभिज्ञान-सप्तसैन्धव प्रदेश (ऋग्वेद के आधार पर भौगोलिक अध्ययन)[2] संस्कृतसाहित्य का समीक्षात्मक इतिहास याज्ञवल्क्यस्मृति:, रघुवंशम्, ऋङ् मन्त्रमाला, छन्दोऽलंकारमञ्जरीलघुसिद्धान्तकौमुदी-चादय: ग्रन्था: प्रायो विश्वविद्यालयीयसंस्कृतपाठ्यक्रमानुसारिण: सन्ति ।

लेखकस्यास्य अनेकानि उच्चस्तरीयसाहित्यिकशोधपत्राण्यपि प्रतिष्ठितशोधपत्रिकासु प्रकाशितान्यभवन् । आकाशवाण्या: लक्ष्मणपुर (लखनऊ) केन्द्रात् लेखकस्य सरस-साहित्यिकसंस्कृतवार्ताश्चापि बहुश: प्रसारिता: सन्ति ।

**प्रकीर्णं संस्कृत-साहित्यम्**—उपर्युक्तसंस्कृतसाहित्यादृते प्रकीर्णं संस्कृत-साहित्यं पुरातनाभिलेखेषु चाप्युत्कीर्णमुपलभ्यते । दृष्ट्याऽनया ई० एकादशशताब्द्या: द्वात्रिंशत् छन्द सु उत्कीर्णसंस्कृतशिलालेख: कुदरकोरस्य प्राचीनस्थले 1875 ई० वर्षे उपलब्धोऽभवत्; य: सम्प्रति कलिकातासंग्रहालये सुरक्षितोऽस्ति । अस्मिन् शिलालेखे राज्ञो जयचन्द्रस्य सभापण्डितमहाकवे: श्रीहर्षस्य प्रभावेण हरिदत्तपौत्रेण हरिवर्मण: पुत्रेण तक्षदत्तेन तत्रत्यब्राह्मणेभ्य: प्रदत्तभूमिदानस्य उल्लेखो वर्तते—

ॐ नम: । आसीच्छ्रीहरिदत्ताख्य: ख्यातो हरिरिवापर: ।
श्रीहर्षेण समत्कर्षं नीतोऽपि विकृतो न य: ।।
जनयामास य: पुत्रत्रयीरक्षणदीक्षितम् ।
श्रीतक्षदत्तनामानं नमितारं शिरोधरम् ।। १३ ।।
यद्दानेन यशोऽर्थिना……१ ।।

एवमासई उत्खनने उपलब्धे द्वादश ई० शताब्द्या: एकस्मिन् शिलालेखे मुहम्मदगोरी कुतुबुद्दीनऐबकाभ्यामासई (इटावा) लुण्ठनोपरान्ते प्रत्यावर्तने जयचन्द्रसेनाप्रमुखस्य महीपालवीरसेनसुतस्य विजयसेनस्य विजयोल्लेख: संस्कृतहिन्द्यामुपलभ्यते—

'ॐसिद्धि: । अथविजयशाखा लिख्यते—श्रीशाके 1113 वैशाखसुदि श्रीमही-

1. आगरा विश्वविद्यालयीय पी०-एच० डी० उपाधये 1968 ई० वर्षे स्वीकृत: शोधग्रन्थ:, साहित्यनिकेतनकर्णपुरत: प्रकाशितश्च । विषयेऽस्मिन् यू० जी० सी० शोधवृत्तयेऽपि लेखकेन कार्यं कृतमस्ति ।
2. कर्णपुरविश्वविद्यालयेन 1976 वर्षे सर्वप्रथमं 'साहित्य-वारिधि:, (डी० लिट्०) सर्वोच्चोपाधये स्वीकृत: शोधग्रन्थ: अनेकप्राच्यविद्याविद्भि: प्रशंसितश्च । (विश्वभारती, शान्तिनिकेतन, 1976)

पाल वीरसेनसुत विजयीभये। पारिमेवमण्डल घमण्ड अँधियारो आज, भूपजयचन्द्र को विजय चन्द्र चमको। तुरुक लूटि कनउज पराने मन्द असइ के...... ।"

संस्कृतसम्बन्धिनो हिन्दीभाषायां प्रस्तुताः वैदुष्यपूर्णाः प्रकीर्णशास्त्रीयसाहित्य-ग्रन्था अप्युल्लेखनीयाः सन्ति, येषु डॉ० रत्नाकरशास्त्रिणः आयुर्वेदविषयकः "भारत के प्राणाचार्य" नामको मानकग्रन्थः दिल्लीतः प्रकाशितः शासनेन पुरस्कृतश्चास्ति। डॉ० विष्णुदेवशर्मणः 'ऋग्वेद में आचार' इति नामकः सागरविश्वविद्यालयीय पी-एच० डी० उपाधये स्वीकृतः शोधग्रन्थः साम्प्रतमप्रकाशितो वर्तते। डॉ० राम-भरोसेशास्त्रिणः 'बाणकृत कादम्बरी का साहित्यिक अध्ययन' इति विषयकः शोध-ग्रन्थः, डॉ० कृष्णावतारवाजपेयिनः "गीता एवं अनुगीता-एक अध्ययन" चेति शीर्षाङ्कितः शोधग्रन्थः कर्णपुरविश्वविद्यालयीय पी-एच० डी० उपाधये स्वीकृतो-ऽप्रकाशितश्च साम्प्रतम्।

उपर्युक्तविद्वद्भिः सह श्रीचक्रपाणिदासाशाविश्नोईमहावीरशुक्ल-प्रभृति-संस्कृत-प्राध्यापकैः स्नातकच्छात्रेभ्यः पाठ्यक्रमोपयोगिनां संस्कृतग्रन्थानां टीकासहितं सम्पादनं कृतं प्रकाशितञ्च।

संस्कृतपत्रकारिताक्षेत्रे श्रीसुरजनसिंहतोमरः 'पर्यालोचनम्' (साप्ताहिकम्) दिग्वार्ता दैनिकञ्चेति पत्रयोः कतिपयाङ्कान् प्रकाशयन् 'संस्कृतवाङ्मय में ओंकार-मीमांसा' नामकं ग्रन्थमलिखत्। 'इटावा जनपद के हजार साल' नाम ग्रन्थः, द्वितीय-स०, कृ० ना० पाठकः, पृ० 197।

समीक्षा—यथा भारतवर्षे उत्तराखण्डे विशेषतः मध्यदेशे मिथिला (दरभंगा) उत्तरप्रदेशे च काशी कान्यकुब्जश्च प्राचीनकालादेव संस्कृतवाङ्मयस्य मूलोद्भव-स्थलरूपे विख्याताः सन्ति; तथैव विशालमिटावाजनपदं क्योंटरा-इकनौरवसती-संस्कृतपण्डितान मूललीलास्थली-रूपयोः प्रसिद्धिशिखरं प्रापयन्त्यौ अत्यधिकं गौरवा-न्विते अकुरुताम्। जनपदस्य अन्यान्यांचलेषु साम्प्रतमपि अमूल्याप्रकाशिताप्रचारित-संस्कृतग्रन्थनिधिः विलुप्तो वर्तते। कौपीनधनाः संस्कृतपण्डिता अर्थाभावेन काल-कवलितप्रायं स्वग्रन्थराशिं प्रकाशयितुमसमर्थाः सन्ति।

आवश्यकतेयमनुभूयते यत् केन्द्रीयशासनमपि संस्कृत-थानामुद्धाराय पूर्णं तत्परं भवेत्, आकाशवाणी चापि संस्कृतकार्यक्रमेभ्यः प्रोत्साहनं प्रदाय संस्कृत-साहित्यकारान् आमन्त्रयेत्। अस्यां दिशि शासनं संस्कृतेन सह सापत्नेयं व्यवहारं कृत्वा सदैवेमामुपेक्षितवान्। अधुना सुधी-संस्कृतप्रेमिसंस्कृतज्ञाः सानुरोधं संप्रार्थ्यन्ते-यत्तेऽस्मिन् जनपदे विलुप्तसंस्कृतग्रन्थानप्रकाशितपाण्डुलिपीश्च उद्धारयितुं बद्ध-परिकराः स्युः। विषयेऽस्मिन् प्रकाशनार्थं पूर्णसूचनां लेखकाय दत्त्वाऽनु गृह्णन्तु। अस्यां दिशि प्रयासरतं जनपदीयविश्वसंस्कृतप्रतिष्ठानमपि वर्तते, यस्य संयोजन-संचालनयोः गुरुतरकार्यभारः केन्द्रीयसमित्या मयि निक्षिप्तः। अस्य सदस्यतां

स्वीकार्यं संस्कृतसंरक्षणे प्रचारे-प्रसारे च सुधियः सहयोगं समर्पयन्तः सुरभारती-सेवायां सर्वात्मना समर्थिया: स्यु:[1] । शम् □

1. शोधपत्रमिदं प्रस्तुतमखिलभारतीयप्राच्यविद्यासम्मेलने, जयपुरीयाधिवेशने शोधसंगोष्ठ्यां, विद्वद्भिर्विचारितं प्रशंसितञ्च ।
प्रकाशितं "शोधप्रभायां नवदिल्लीस्य–श्री लालबहादुर शास्त्रि केन्द्रीयसंस्कृत विद्यापीठस्यस्य त्रैमासिकी शोधपत्रिकायाम् (म० म० पं० गिरिधर्मशर्मचतुर्वेद स्मृतिग्रन्थे) सामयिकाया: 20/1 अंके, पृ० 1-11 ।

# संस्कृतस्य महिला रचनाकर्त्र्यः

सुसमृद्धे संस्कृत-साहित्ये सरसमहिलारचनाकाराणां परम्पराऽत्यन्तं पुरातनी सुदीर्घाऽविच्छिन्ना च दरीदृश्यते। ऋग्वैदिकानेकसूक्तानां द्रष्ट्रीषु ऋषिकासु उर्वशीलोपामुद्रादिति-इन्द्राणी वागृम्भणी प्रभृति षड्विंशति ब्रह्मवादिन्यः कवयित्री-रूपे गृहीतुं शक्यते। आसां नैकमंत्रेषु साहित्यिकाभिरुचिरभिव्यज्यते वैदिकसाहित्ये।

बौद्धकाले वृद्धाः स्त्रियः स्थविराः थेरीति कथिताः, यासां कवित्वपूर्णानि गीतानि थेरीगाथा (खुद्दक निकाय) नाम्नि ग्रन्थे संगृहीतानि सन्ति। आसु रचनाकारासु मुक्ता नन्दाश्यामा चन्दा-उत्पलवर्णा-वासिष्ठीआम्रपाली सुमेधा महाप्रजामती गौतमी-प्रभृति सप्तत्रिंशत् स्थविराणां काव्यरचनाः सन्ति, यास्वासां जीवनगाथाभिः सह सरसभावानां मार्मिकी अभिव्यक्तिर्वर्तते।

संस्कृत-साहित्ये महिलारचनाकाराणां पुरातनपरम्परा प्रथम शती ईस्वी पूर्वतः परवर्तिकालपर्यन्तं प्रवर्तिता परिलक्ष्यते। हालकृत गाथासप्तशत्यामनुलक्ष्मी-असुलद्धि-माधवी-प्रहता, रेवा, रोहा-शशिप्रभा बद्धावहीत्यष्टप्राकृत कवयित्रीणां रचनाः समुपलब्धाः भवन्ति।

प्राचीनमध्यकालिकमहिलारचनाकारासु गंगादेवी विद्या (विज्जका) मारुलामोरिका समुद्राफल्गुहस्तिनी विकटनितम्बा शीलाभट्टारिका देवकुमारिका प्रभृतयः प्रसिद्धा एव सन्ति। टीकाकार वल्लभदेव कविनाटककारराजशेखरादि-साहित्यशास्त्रिभिः सुभद्रायाः काव्यसौष्ठवमेवं प्रशंमितमस्ति—

"पार्थस्य मनसि स्थानं लेभे खलु सुभद्रया।
कवीनां च वचो वृत्तौ चातुर्येण सुभद्रया॥"

(सूक्तिमुक्तावली)

सुभद्रया सत्कवयित्र्या स्नेहप्रवृत्तिविषये स्वकटुवनुभवः एवं प्रकटीकृतो-ऽस्मिन् पद्ये—

"दुग्धं च यत्तदनुयत् क्वचितं ततो नु,
माधुर्यमस्य हृतमुन्मथितं च वेगात्।
जातं पुनर्घृतकृते नवनीतवृत्ति,
स्नेहो निबन्धनमनर्थपरम्पराणाम्॥

(सुभाषितावली)

फल्गुहस्तिन्याः पद्यद्वयम् प्राप्यते, प्रबन्धात्मकरचना अनुपलब्धाऽस्ति। बालचन्द्रोदय विषये तस्या मंगलकामनापूर्णाद्भुतकल्पना एवमभिव्यक्ता दृश्यते—

"त्रिनयन जटावली पुष्पं मनोभवकार्मुकं,
ग्रहकिसलय सन्ध्यानारी नितम्बनखक्षतम् ।
तिमिरभिदुरं व्योम्नः शृंगं निशावदनस्मितं,
प्रतिपदि नवस्येन्दोर्बिम्बं सुखोदयलस्तु वः ॥"

(शार्ङ्गधरपद्धतिः)

सुकविराजशेखरेण विकटनितम्बायाः[1] मधुरवाणी मुक्तकण्ठेन एवमनुमोदिता—

"के वैकट नितम्बेन गिरां गुम्फेन रञ्जिताः ।
निन्दन्ति निजकान्तानां न मौग्ध्यमधुरं वचः ।"

(सूक्तिमुक्तावली)

प्राग्वंगदेशीया फरीदपुर निवासिनी प्रियम्वदा ईस्वी षोडशीशती वर्तिनी आसीत् । अनया 'श्यामरहस्यं' सरसं काव्यं रचितम् । काव्यस्य प्रसादो माधुर्यं च प्रायः सर्वत्र प्रशंसनीये कवयित्र्या काव्यस्य सहृदयसंवेद्यताऽत्र द्रष्टुं शक्यतेऽस्मिन् पद्ये—

"कालिन्दी पुलिनेषु केलिकलनं कंसादिदैत्यद्विषम्,
गोपालीभिरभिष्टुतं व्रजवधू नेत्रोत्पलैरर्चितम् ।
बर्हालंकृतमस्तकं सुललितैरङ्गैस्त्रिभंगं भजे,
गोविन्दं व्रजसुन्दरं भवहरं वंशीधरं श्यामलम् ॥"

(श्यामरहस्यं, 1)

वंगराज्ये फरीदपुरजनपदे धानुकग्रामे सप्तदशशताब्द्यां संजाता वैजयन्ती 'जयन्ती' कवयित्री मथुराभट्टस्य पुत्री कृष्णनाथस्य च विदुषी पत्नी आसीत् ।

---

1. विकटनितम्बायाः समासोक्तिमयं शृंगाररसपूर्णं पद्यमेकमास्वादनीयमिदम्—
"अन्यासु तावदुपमर्दसहासु भृंग, लोलं विनोदयमनः सुमनो लतासु ।
मुग्धामजातरजसंकलिकामकाले, व्यर्थं कदर्थयसि किं नवमल्लिकायाः ॥"

(सूक्तिमुक्तावली)

+कवयित्री शीलाभट्टारिका राजशेखरेणाऽपि काव्य निदर्शने चर्चिताऽस्ति । धनदेवेन प्रसिद्ध कवयित्रीषु अस्याः गणना एवं कृताऽस्ति—"शीला-विज्जा-मारुला मोरिकाद्याः काव्यं कर्तुं मन्ति विज्ञा स्त्रियोऽपि ।" शार्ङ्गधरपद्धतौ विज्जकायाः काव्योत्कर्षः दण्डिन स्तुलनायां एवं वर्णितोऽस्ति ।
"नीलोत्पल दलश्यामा विज्जकां मामजानता ।
वृथैव दण्डिना प्रोक्तं सर्वशुक्ला सरस्वती ॥"

अस्या एकमात्रचम्पूकाव्य कृतिः "आनन्दलतिकाचम्पूः[1]" प्राप्यते, यस्मिन् काव्य-सौष्ठवसूचकः श्लोकोऽयं द्रष्टव्योऽस्ति–

"वह्निकोणगतो भानुः शीतात् संकुचितं दिनम् ।
वैश्वानरो नरक्रोडे राजन् शीतस्य का कथा ॥"

(आनन्दलतिकाचम्पूः)

ईस्वी अष्टादशशताब्द्यामुदयेन्द्रपुरीया त्रिवेणी दाक्षिणात्य महिलारचनाकारासु मूर्धन्या मन्यते । अस्याः स्तोत्रकाव्यकृतिषु–'लक्ष्मीसहस्रम्, रंगनाथसहस्रम् च, संदेशकाव्यग्रन्थेषु–शुकसन्देशः भृंगसन्देशश्च, नाट्यग्रन्थेषु–रंगाभ्युदयं, सम्पतकुमारविजयं, रंगराट्समुदयं तत्त्वमुद्राभद्रोदयं च प्रकीर्णग्रन्थेषु–हारति पञ्चकञ्च प्रसिद्धाः रचनाः सन्ति । तञ्जोर सरस्वतीनिलये विद्यमानवैविध्य-पूर्णकाव्यनाट्यकृतिभिरियं कवयित्री डॉ० एम० कृष्णमाचारीमहोदयेन सत्यमेव सर्वश्रेष्ठा स्वीकृता ।

Among women, She (Potess Triveni) stands foremost in poetic Contributions to Sanskrit Literature."[2]

त्रिवेण्याः काव्योत्कर्षसूचकं पद्यमेकमत्यन्तं चमत्कारपूर्णं प्रस्तूयतेऽत्र–

"परमादिषु मातरादिम यदिमं कोशकृताहमध्यगम् ।
अमरः किल पामरस्ततः स बभूव स्वयमेव मध्यमः ॥"

(लक्ष्मीसहस्रम्)

एकोनविंशति शताब्द्यां मलाबार (केरल) प्रान्ते कोविलग्रामे लक्ष्मीराज्ञी 'सन्तानगोपालकाव्यं' रचितवती । कवयित्र्याः जीवनवृत्तस्य दृष्ट्या पद्यमिदं महत्त्वपूर्णं प्राप्यते–

"रोगार्त्तयाऽपि रविवर्मकुमारकस्य,
जातादरेण मनसा वचसि प्रकामम् ।

---

1. कवयित्र्याः कर्त्तृत्वविषये डॉ० जतीन्द्रविमलचौधुरी प्रतिपादयति–
Vaijayanti was a renowned poetess to whom a large number of verses are attributed. She was the joint author of 'Anand Lalika Champu' as her husband Krishnanath explicitly mentions in the work itself that he collaborated with his wife in its composition."
–Sanskrit Poetesses, Pt. A., Calcatta, 1947. P. 57.

2. History of Classical Sanskrit Literature, Delhi, 1970, (Chapter XVI Section I. P. 396.

मौर्ख्यं समर्प्य विगणय्य कृतं मयैतत्,
काव्यं मुदा बुधवराः परिशोधयन्तु ॥"

लक्ष्मीराज्ञ्याः काव्ये वर्णननैपुण्यं सर्वत्र संलक्ष्यते । यथा–

"सितपयोधरचारुतराकृति विधृतनीलपटो मुसलायुधः ।
इह च सम्प्रति नः शरणं भवान् क्षमयतामयतामघुमुल्वणम् ॥"
(सन्तान० 3/24)

अस्यां शताब्द्यामेव कर्णाटकस्य मैसूरनगरे नरसिंहाचार्यस्य पुत्री सुन्दरवल्ली कवयित्री रूपेण संजाता । अस्या अनेक प्रकीर्ण रचनाभिः सह 'रामायणचम्पूः' षट्सर्गात्मिका प्रबन्धरचना प्राप्यते, यस्याः प्रथमं प्रकाशनं 1916 ई० वर्षे बंगलौर-नगरे न्यासविद्यामुद्रणालयेऽभवत् । चम्पूकाव्यसाहित्येऽस्याः कृतेरत्यन्तं महत्त्वपूर्णं स्थानं वर्तते ।[1]

तामिलनाडुप्रान्तस्य कुम्भकोणस्थाने एकोनविंशतिशताब्द्यां संजाता कवयित्री ज्ञानसुन्दरी कुप्पूस्वामिशास्त्रिणः सुयोग्या शिष्याऽऽसीत् । मैसूर महाराजेन इयं 'कविरत्नोपाधिना अलंकृता सम्मानिता चाऽभवत् । षट्स्तवकेषु संग्रथितः 'हालास्यचम्पूः' नाम्नोऽस्याः सुप्रसिद्धग्रन्थोऽस्ति । मीनाक्षीसुन्दरेश्वरपरिणयकाव्यमस्या अप्रकाशिता रचना एम० सूर्यनारायणशास्त्रिमतानुसारम् । यथा सः प्रतिपादयति–

'अनया (ज्ञानसुन्दर्या) मीनाक्षी सुन्दरेश्वर परिणयकाव्यं निर्मितम् । भाषा सुलभा, वर्णनानि च मनोहराणि ।' (संस्कृतकविजीवितम्, प्रथमो भागः, हैदराबाद 1960, पृ० 233) कवयित्र्याः काव्यसौष्ठवसूचकः श्लोकोऽयमत्र प्रस्तूयते–

"मधुरीकृतगरलत्वात् मधुराभिख्यां तदा हि सा नगरी ।
निजसीमस्थफणित्वात् विभाति हालास्य नामतश्चेह ॥"
(हालास्य चम्पूः)

अपि चालंकारच्छटाऽवलोकनीयाऽस्मिन् पद्ये–

"तस्या ललाटलीनस्वाहापतिरेव शान्तसन्तापः ।
रेजे कुङ्कुमतिलकव्याजान्नूनं मुधा हि कालविदः ॥"
(हालास्य चम्पूः, पृ० 28 श्री विद्या प्रेस, कुम्भकोणम् संस्करण, 1906)

वर्तमानकालस्य विश्रुतमहिलारचनाकारासु मूर्धन्या पण्डिता क्षमाराव-महोदया महत्त्वपूर्णं स्थानं भजते संस्कृत साहित्ये । अस्याः सुपरिचितचरित काव्यरचनासु–तुकारामचरितं, श्रीरामदासचरितं, ज्ञानेश्वरचरितं, मीरालहरी, शंकरजीवनाख्यानम् च, राष्ट्रियकाव्यरचनासु–सत्याग्रहगीता, उत्तरसत्याग्रहगीता,

1. Hist. of Classical Sanskrit Lit. Delhi, 1971 Pt. IV P. 541.

ग्रामज्योतिश्च, कथासाहित्ये–कथापंचकम्, कथामुक्तावली च यात्रासाहित्ये–विचित्रपरिषद्यात्रा इति ग्रन्था उल्लेखनीयाः सन्ति । कवयित्र्या स्वातंत्र्यविचार-धारायां सशक्तकाव्यस्य वस्तुध्वनिपूर्णाऽभिव्यक्तिरियं दर्शनीया वर्तते–

"जीवन्तोऽपि न जीवन्ति परदास्य धुरन्धराः ।
पारतंत्र्यमुदाराणां मरणादतिरिच्यते ।।"
(सत्याग्रहगीता 1/36, उत्तर० सत्या० गी० 1/2, 3/32)

वियोग शृंगाराभिव्यंजकं पद्यमिदमवलोकनीयम्—

"निर्याते निखिलेऽपि गन्धुनिवहे प्राप्ते निशीथे जगत्,
निःशेषसुखनिद्रया हृतमभूद्रेजे प्रशान्तिः परा ।
शय्यागारमगात्तदा शशिकरैराभास्यमानं युवा,
सोत्कण्ठः परिकम्पमानहृदयः सर्वांग रोमाञ्चितः ।।"
(मीरालहरी पूर्वखण्ड, 6)

तामिलनाडुराज्ये तञ्जौरोद्भवायाः कामाक्ष्याः 'रामचरितम्' आन्ध्र-प्रदेशीयतिरुमलाम्बाया 'वरदाम्बिकापरिणयम्', रघुनाथराजस्य प्रेयसी रामभद्रा-म्बायाः 'रघुनाथाभ्युदयम्'[1], मद्रासे सिस्टर बालम्बालमहाभागाया 'आर्यारामाय-णम्', दाक्षिणात्य कवयित्र्या अलमेलम्मायाः 'बुद्धचरितम्', डॉ० रमा चौधुर्याः 'शंकरशंकरम्', 'देशदीपम्', 'पल्लीकमलम्', 'कविकुलकोकिलम्', 'मेघमेदुरमेदिनी-यम्', 'युगजीवनम्', 'निवंदितनिवेदितम्', 'अभेदानन्दः', 'संसारामृतम्', 'नगर-नूपुरम्', 'भारतपथिकः', 'कविकुलकमलम्', 'भारताचार्यः' प्रभृति नाट्यकाव्य-कृतय उल्लेखनीयाः सन्ति । कवयित्र्याः काव्ये प्रसादः, गेयात्मकता च सर्वथा स्वाभाविकी अलंकारपूर्णा च विद्यते । अवलोकनीयं पद्यमिदं शंकरशंकरे–

"सुनीलगगने शीतलपवने चलति ज्योत्स्ना तरणी ।
ऊर्मिमूलिका मेघमालिका नृत्यति मानस-भरणी ।।"
(शंकरशंकरम्)

अपि च पंकजनयना कथयति चम्पकवदनस्य अन्तिमे क्षणे इदं मार्मिकं [2]वचनम्–

---

1. रघुनाथस्य नायकत्वे कवयित्री प्रतिपादयति अस्मिन् ऐतिहासिककाव्य ग्रन्थे–
"शब्दार्थयोर्मर्म समप्रधानं वशंवदं यस्य भवन्ति सर्वे ।
कृती स स्वात्र कृती सहायो, नाथो मम श्रीः रघुनाथनेता ।"
(रघुनाथाभ्युदयम्)

2. देशदीपम्, डॉ० रमा चौधरी : 3।12
डॉ० रामजी उपाध्यायः समालोचयति नाट्यकृतिमिमां नाट्यशास्त्रीय दृष्ट्या, अवलोकनीयः–"आधुनिक संस्कृत नाटक:", (द्वितीयो भागः), सागरम्, सं० 2035 वि०, पृ० 1083

"न पार्थिवो जात्वसि चम्पकस्त्वं, सः पारिजातः सुरलोक प्रजातः ।
देशस्य चेतः सरसि प्ररूढः पयोजवत्तिष्ठ चिरप्रकाशः ।।"

वस्तुतोऽर्वाचीन महिलारचनाकर्त्रीषु रूपकसाहित्यसर्जनादृष्ट्या डॉ॰ रमा चौधुरी सर्वश्रेष्ठं स्थानं भजते । पण्डिताक्षमारावपुत्र्या लीलारावदेव्या इमाः कृतयः महत्त्वपूर्णाः सन्ति—'गिरिजायाः प्रतिज्ञा', 'बालविधवा', होलिकोत्सवः', क्षणिक-विभ्रमः', गणेशचतुर्थी', 'मिथ्या ग्रहणम्', असूयिनी', जयन्तु, कुमाउनीया' 'वीरभा' चेति । कवयित्र्याः काव्ये सानुप्रासं स्वाभाविकसौन्दर्यं सर्वत्र संलक्ष्यते । यथा—रेवायाः उक्ति दृष्टव्या—

"ज्वालेयं जटिला पुण्या, दीपिकेति विभाव्यताम् ।
नीराज्यते यथास्माभिर्बुद्धिनेता बृहस्पतिः ।।"
(स्वर्णपुर कृषीवलम्, पृ॰ 26)

संगीतकाव्यरूपकेषु मध्यप्रदेशे सागरवासिन्याः डॉ॰ वनमालायाभवालकर्याः नाट्यकाव्यकृतिषु 'रामवनगमनम्', 'पार्वतीपरमेश्वरीयम्', 'पाददण्डश्च' प्रसिद्धा. रचनाः सन्ति । संगीतात्मक पृष्ठभूमौ माधुर्यप्रसादगुणपूर्णं गीतानां लालित्यं हृदया-वर्जकं प्राप्यते । यथा—ललिताया गीतिः पाददण्डे—'नन्दन प्रियरञ्जनम् ।

कलमञ्जुलमञ्जीरशिञ्जितं मानस हंसी विभ्रमम् ।
प्रभुवन्दनम् । नन्दनं
कदम्ब चम्पक बकुला लम्बित कुन्दमालती मण्डनम् ।
मंगल प्रभुवन्दनम्
मन्दसमीरणमुखरितवंशं निकुञ्जलतिकादोलनम् । प्रभुवन्दनम् ।···
इन्दीवरमकरन्दमदकलं मिलिन्दालि मधुगुञ्जनम् ।
प्रभुवन्दनम् । नन्दनं प्रियरञ्जनम् +[1]

कर्णपुरवासिन्याः डॉ॰ नलिनीशुक्ल 'व्यथितायाः' काव्यकथाकृतिषु भावा-ञ्जलिः, 'प्रकीर्णम्', 'स्वरूपलहरी', कथासप्तकञ्चोल्लेखनीयाः रचनाः सन्ति । उत्तरप्रदेश सर्वकारेण मौलिककाव्यरचनायै कवयित्रीय बहुशः पुरस्कृताऽस्ति । कवयित्र्याः 'काव्ये विद्यमानगेयता कोमलकान्तपदावली चास्मान् जयदेवकृतगीत-गोविन्दं स्मारयति । यथा—

1. पाद दण्डः, संस्कृत परिषद्, सागर सं॰ 2020 वि॰ (ललितायाः गीतिः) द्रष्टव्यः कवयित्र्याः सागरिकायां प्रकाशितो लेखः" आधुनिक संस्कृत साहित्ये स्त्री लेखिकानां योगदानम्' सागर, 1970 (सागरिका 15/2 अंकः)

"विषयसमीरे सरसि गभीरे विहरति मानस मीनः ।
मकर इवायं विहरति लोभः प्रहरति भृशमतिपीनः ॥"
(भावा०, पृ० 14)

अपि च

"प्रिये ! चारुशीले । क्षणं मुञ्च मानम् ।
सुधां ये मुखान्निःसृतां देहिदानम् ॥"
(राधानुनयः)

विहारराष्ट्रभाषापरिषदि शोधसहायिका डॉ० मिथिलेशकुमारी मिश्रायाः 'सुभाषितसुमनोऽञ्जलिः', 'व्यास शतकम्', आम्रपाली (नाटिका) च बहुचर्चिताः रचनाः सन्ति । कवयित्र्याः नीतिसम्बन्धि-पद्यानि हृद्यानि ललितललितानि च भर्तृहरितुल्यानि सन्ति । यथा–

"न यस्य गाथा भुवनेषु गेया, न धारणां याति च यस्य धर्मे ।
न वै कृतं येन सुकर्म किञ्चित्, लोकेषु तज्जन्म निरर्थकम् हि ॥"
(सुभाषित०, पृ० 6)

कवयित्री राष्ट्रियभावनां राष्ट्रभक्तिं च स्वकाव्ये सम्यक् प्रतिपादयति यथा-स्थानम् ।[1] डॉ० मनोरमायाः; काव्यसंकलनं 'संस्कृत गीतमलिका' सामयिक समारोहऋतुवर्णने लोकगीतपूर्णं विद्यते । यथा दृश्यते लोकगीतमधोलिखित पंक्तिषु– 'चित्रां चुनरिकामानय प्रियतम ! आगतश्चैत्रमासः माता दत्ता पीतशाटिका, पित्रा दत्ता हेममलिका ! हीरकहारमानय प्रियतम ! आगतश्चैत्रमासः[2] ।

संस्कृत पत्रपत्रिकासु चापि संस्कृत कवयित्रीभिराभिः सह दुर्गा झा[3] डॉ० नवलता, डॉ० पुष्पा दीक्षित* अनितामिश्रा[4], कमलारत्नम् प्रभृतिमहिलारचना-

---

1. राष्ट्र धर्म इति पूर्ण स्वदेश भक्तिः शक्तिश्च तस्य सततं परिवर्धनीया ।
किं वा शरीर बलपौरुष विक्रमैश्च, देशस्य त्वात्मगुरुता ननु रक्षणीया ॥
(सुभाषित० पृ० 9)
2. संस्कृतगीतमलिका, लखनऊ, 1981, पृ० 14
3. सर्वगन्धा 5/4 अंक जुलाई, 1981 "सास्मितिः" सर्वगन्धा, नवम्बर, 1980, पृ० 7, 7/4-5 अंक, 1983, "जागृतनार्यः" शीर्षक रचना, 7/3 अंक "नागरिका" पृ० 12, *डॉ० पुष्पा दीक्षित कृत "अग्नि शिक्षा" शीर्षक सरसगीत संग्रहो द्रष्टव्यः ।
4. आकाशवाणी लक्ष्मणपुर केन्द्रेण लेखकस्य दिनांके 2/2/86, 2/7/86 प्रसारिता संस्कृतवार्ता (संस्कृत कार्यक्रमे)

काराणां समसामयिकलोकजीवनस्य यथार्थचित्रणे चिन्तनपूर्णाः सरसाः काव्यरचनाः सम्प्राप्यन्ते ।

संक्षेपे, संस्कृत साहित्यं सुप्रसिद्ध महिलारचनाकाराणां भक्ति (स्तोत्र) काव्य, चरितकाव्य, स्वदेशप्रेम राष्ट्रियैकता लोकगीत, चम्पूकाव्य नाट्य संगीत-काव्य कथाप्रभृति वैविध्यपूर्णविधानां नैककृतिभिः सुसमृद्धं संलक्ष्यते[1] । इति शम् । □

1. लेखकस्य एतद्विषयक विस्तृत समीक्षात्मक लेखो द्रष्टव्यः 'संस्कृत विमर्शे' 16/1–2 अंके, राष्ट्रियसंस्कृतसंस्थानम्, नव दिल्ली–27, पृ० 11–113 । सागरिका 25/3 अंक 221–232 ।

# विंशशताब्द्याः संस्कृतसाहित्ये चित्रितं भारतम्

विंशशताब्द्याः संस्कृतसाहित्यस्य महाकाव्य-गीतिकाव्य-गद्यकाव्य (उपन्यास) नाट्यसाहित्य-चम्पूकाव्यादिषु सर्वासु विधासु[1] व्यापकरूपेण भास्वरं भारतं चित्रितमस्ति। सामान्यतः साम्प्रतिक संस्कृतरचनासु अन्तर्बाह्यरूपयोश्चित्रितस्य भारतस्य चित्रमत्यन्तं हृदयावर्जकमस्ति। अखण्डभारतभूमेर्बाह्यस्वरूपस्य बिम्बग्राहिचित्रणं संस्कृतरचनाकारैः साधु कृतमस्ति स्वविविधविधामयकृतिषु।

'शिवराज्योदयमहाकाव्यकारः श्रीधरभास्करवर्णेकरो भारतस्य बाह्यस्वरूपगतचित्रणं चमत्कारिरूपं कृत्वा स्वराष्ट्रस्य वैशिट्यमपि चित्रयति व्यापकतया। यथा–

किरीटः सद्रत्नप्रभव इति गीतो नगपतिः।
समुद्रोऽयं रत्नाकर इति यतो वल्गुवलयः॥
अजस्रं सम्पन्ना पुरुषमहिला रत्नमिव,
अहो राजत्येषा भुवनतलरत्नं भरतभूः॥

(विवेका० 7।6)

अपि च–

अयोध्या शत्रूणां त्वमसि मधुरा पावनह्लदा,
खलानां वा माया जननि खलु काशी सुतपसाम्।
अवन्ती चार्तानामयि विधृतकाञ्ची विमनसां,
विमुक्ते द्वारावत्यपि दिविसदां त्वं ननु पुरी॥

(विवेका० 7।18)

डॉ० वर्णेकरः स्वशिवराज्योदये महाकाव्ये महाराष्ट्रान्तर्गतसह्याद्रेपश्चिमस्यां रत्नाकररमणीयतायाः सुन्दरं चित्रण कृत्वा राष्ट्रगौरवमपि सम्यग्रूपेण चित्रयति।

---

1. द्रष्टव्यम्–Modern Sanskrit Writings-
–Dr. V. Raghavan Vol. I & II Madras I ed.

'भाति मे भारतमिति रचनायां'—डॉ० रमाकान्तशुक्लो भारतस्य अन्तर्बाह्य-स्वरूपं शोभनं प्रकरोत्येवमत्र—

"जाह्नवी चन्द्रभागाजलैः पावितं, भानुजानर्मदा-वीचिभिर्लालितम् ।
तुंगभद्राविपाशादिभिर्भावितं, भूतले भाति मेऽनारतं भारतम् ।।
गोखले-बालगंगाधराराधितं, श्रीशिवाजी-तुकाराम-सम्बोधितम् ।
यन्महाराष्ट्रकं सह्यशृंगोच्छ्रितं भूतले भाति तन्मामकं भारतम् ।।"[1]

जानकीजीवनं वामनावतरणमिति महाकाव्यकारो डॉ० राजेन्द्र मिश्रः स्वकीयमृगाङ्कदूते भव्यभारतमेवं चित्रयति चित्राकर्षकरूपं—

"गन्तव्या ते जलधिरसनाऽऽवेष्टिता भारतीभूः,
आदौ यत्र प्रसभमुदिता संस्कृतिर्विश्ववारा ।
तत्राप्याप्या तरणि तनया-जाह्नवीसंगभूमिः,
सृष्ट्यै यत्र द्रुहिण उषसि क्लेशितात्मा ततापं[2] ।।"

न केवलं भारतमन्तःरूपेणापितु बाह्यरूपेण चित्रयति डॉ० चन्द्रभानुरेवम्—

'हिमगिरिरस्य किरीटो मौलेररुणकिरणमणिमाली,
करकल्लोलैर्जलधिर्विलसति पदान्तप्रक्षाली ।
सरितो वक्षसि हारा विन्ध्यो भाति मेखलामानम्,
पल्लवलसिता निविडवनाली रुचिरं नवपरिधानम् ।
आस्तां कविकुलमस्य मनोरमरूपवर्णने लीनम्,
भारतवर्षं राष्ट्रं जीव्याच्चिरकालं स्वाधीनम् ।।
(मंगल्या, 1988, पृ० 5)

स्वराष्ट्रभारतस्य बाह्यस्वरूपनिर्वर्णने संस्कृतरचनाकारैरस्य उत्तुंगश्रृंगमयवनाच्छन्नपर्वताः, विशालसलिलराशि तीव्रप्रवाहिताः नद्यः, वैभवसम्पन्ना विविधभूप्रदेशाश्चपि चित्रिताः । पशुपालनकृषि-वाणिज्यादिक्षेत्रेषु राष्ट्रस्यार्थिक स्रोतस्वरूपिण्यो नर्मदादिनद्यः संस्कृतकविभिः सुचित्रिताः सन्ति । यथा—श्रीरेवाभद्रपीठकाव्ये सनातनकवी रेवाप्रसादद्विवेदी रेवामेवं चित्रयति—

1. 'भाति मे भारतम्' तदा अर्वाचीन संस्कृतपरिचयः (प्रथम खण्डः) नयी दिल्ली, 1982 ई० पृ० 66
2. पारिजातम् (मासिकं), कानपुरम् 6।2 अंकः सं० 2044 वि०, पृ० 8, 9

"त्वत्तीरे हलिनोऽपि सन्ति विमला धर्मप्रिया भारते ।"
"वाणिज्यं करवाणि चेत् तव दृशोः पात्रीभवन्नप्यहं······
त्वां कामधेनुं वृणे[1] ॥

विंशशताब्द्याः संस्कृतरूपकेष्वपि भारतस्य भव्यं चित्रणं वर्तते । यथाऽस्मदीये 'वसुमित्रविजये'[2] विशालभारतभारती एवं चित्रिता विस्तारमयी–

"आसिन्धुशैलेन्द्रसुशोभिते हे, भागीरथीनीरतरंगिते हे ।
काशीपुरपुष्पपुरैश्च रम्यां त्वां भारती भक्तिप्रदां भजामि ॥३॥

राष्ट्रस्य सर्वसमाजे यौतुकपिशाचपीडिताः परमार्त्तयुवत्योऽपि चित्रिता रूपककारैः । श्रीकृष्णलालः कुप्रथामिमां व्यंग्येन चित्रयति आश्चर्यमिति नाम्नि रूपके–

"किं भवान् जानाति कियद् यौतुकमिष्यते वरपक्षीयैः ?"
किं कन्ये अविवाहिते स्थास्यतः ?"
(चमत्कारः, दिल्ली प्रथम सं० पृ० 63)

भारते सर्वत्रातंकवादस्य हिंसायाश्च[3] ताण्डवं चिन्ताजनकमेवाऽस्ति । समाजे सर्वत्र हिंसामूले तु मानवतानाशक-विनाशकार्यस्त्रशस्त्राणामुत्पादनं, यौतुकभिक्षाटनं मूल्यवृद्धिः पदार्थसम्मिश्रणं राष्ट्रनेतृणां चारित्रिकमवमूल्यनं, जातिवाद आदिवैषम्याणां सुन्दरं चित्रणं संस्कृतसाहित्ये संलक्ष्यते । यथा–

"बमविषाक्तविस्फोटकद्रव्यैः । अणुशक्त्याविष्करणैर्नव्यैः ।
प्रलयंकरमभवद् विज्ञानम् । मानवते कुरु नवमभियानम् ॥
(गीतकन्दलिका, पृ० 13)

प्रभूता मूल्यसंवृद्धिर्नभश्चुम्बति महार्घत्वम् ।
दिनैर्लघुकैश्चिदल्पं वेतनं मे याति शून्यत्वम् ॥
(गीतकन्दलिका, पृ० 33)

चिन्ताकुलो परमानन्दशास्त्री भारतस्य मिश्रणसंस्कृतिं चित्रयति–

1. श्रीरेवाभद्रपीठकाव्यम्, 102, 112, (सागरिका 25।3 अंके प्रकाशितम्) वाराणसी, 1987 ।
2. वसुमित्रविजयम् (यज्ञाश्वरक्षणम्), 1988, ई० पृ० 19 (दृष्टव्यं पारिजातम् 6।6 अंक) ।
3. अस्मदीये 'यज्ञाश्चरक्षणे हिंसा प्रचण्डा जनप्राणहन्त्री···प्रभृति पद्यानि द्रष्टव्यानि पारिजातम् 6।6, पृ० 21 ।

क्रीडति मुक्तं मिश्रसंस्कृतिर्हालाहलायते माधुर्यम्,
शुद्धं क्वापि पदं न पदार्थः प्रतिदृट्टं दृष्टं चातुर्यम् ।
नगरे नगरे ग्रामे ग्रामे मिश्रितपण्यानां प्राचुर्यम्,
शुद्धं क्वापि पदं न पदार्थः प्रतिहट्टं दृष्टं चातुर्यम् ॥

(दूर्वा, 14 तमोऽङ्क 1989, पृ० 30)

महाकविः सुधाकरः भारते भ्रष्टराजनेतॄणां शोचनीयं चरितमेवं चित्रयति–

नेतारश्चेदपधनधियो निष्क्रियोत्कोच जीवा
मिष्टावाचः कपटपटवो वञ्चकाः सञ्चिताशाः ।
नाशाय स्युः स्वभुवि सुलभाः पेशला श्वेतवेषैः,
निःसिद्धान्ताः कथय न कथन्नङ्क्ष्यति त्वेष देशः ॥

(देवदूते 69)

अपि च–

दण्डादण्डि प्रचलतु सदा वोऽस्तु वा वाग्विलासः,
केशाकेशि प्रशमयतु वा युष्मदीयं विवादम् ।
हे नेतारः कुरुत सकलं रोचते यद् भवदभ्यः,
स्वातंत्र्यं मे निधिरिदमिति प्रार्थये रक्षितुं वः ॥

(मंगल्या, डा० चन्द्रभानु, पृ० 43)

साम्प्रतं भारते सविकारो गुरुशिष्य-सम्बन्धः, दूषिता शिक्षापद्धति विकृता परीक्षाप्रणाली छात्रानुशासनहीनताऽपि सुचित्रिता संस्कृतसाहित्यकारैः । यथास्मदीये गुरुमाहात्म्यशतके एवं चित्रिता वर्तमानविकृतशिक्षा प्रणाली–

शिक्षकरूपे गुरवः साम्प्रतन्तु सन्ति वेतनभोगिनः ।
दासवृत्त्या समाजे, लभन्ते मानं न तादृशम् ॥
शिष्यैः परीक्षायान्तु प्रयुज्यन्तेऽनुचितसाधनानि ।
शिक्षकाः सापमानञ्च सहन्ते प्रताडनां तेषाम् ॥
शिक्षणसंस्था अधिकाः, प्रायः कुप्रबन्धकास्तासु सन्ति ।
वहवोऽध्यापकास्तत्र, शोष्यन्ते सर्वदा बहुधा ॥

(गुरुमाहात्म्यशतकम् 98-100 डा० कै० ना० द्विवेदिन, कानपुर 1981)

भारते भयंकरी यौतुकप्रथा चित्रितास्ति–संस्कृतरचनाकारैः स्वकीयकथाकृतिषु रूपकेषु काव्येषु च यथार्थं पृष्ठभूमौ ।

युवाकवी राधावल्लभस्त्रिपाठी स्वकीये गद्यगीते अनुशारदा विवाहमिति

रचनायां[1] यौतुकीं कुप्रथां मार्मिकरूपेण प्रस्तौति । डॉ॰ चन्द्रभानुश्चित्रयति स्वकीय-वधूरमूल्यारचनायामेवम्–

हे नवयुवक जननि ! तव पुत्रो बाहुबलं नाश्रयते,
बधूरमूल्यां बुद्ध्वा भवती सुतमूल्यं कामयते ।
सम्प्रति सुतसम्बन्धेऽन्विष्यति भवती यौतुकमात्रम्,
प्रतिगेहं गत्वा सम्पश्यति ललितं कन्यागात्रम् ॥
हे नवयुवक ! शृणोतु किमर्थं बाहुबलं नाश्रयते ।
कन्यायुवतिरमूल्या...... ।[2]

भारते वर्तमानधार्मिकसामाजिकार्थिकराजनीतिकवैज्ञानिकादिविविध स्थिती-नामपि चित्ताकर्षकं चित्रणं संस्कृतसाहित्यकारैः कृतमस्ति । महर्षिकल्पः स्वर्गीयः पं॰ मुंशीराम शर्मा 'सोमः' चित्रयति भारतमेवम्–

अर्थलोभेन नेतारः प्रभुत्वपदलोलुपाः ।
संस्कृतेः सभ्यतायाश्च नाशका-देशघातकाः ।
सदाचारं हि गर्हन्ति देशस्तेषां हिताय वै ।
न ते देशाय जीवन्ति जीवन्ति स्वार्थसिद्धये ॥
हरतालरताश्छात्राः प्राध्यापकाश्च कर्मणि ।
विरताः स्वस्वकर्त्तव्यात् श्रमाच्च श्रमजीविनः ॥
मुस्लिमैः खण्डितो देशः पूर्वमेवाँग्लनीतिभिः ।
अधुनाऽपि ते समालग्नाः पुनश्च देशखण्डने ॥
शिष्याः पार्थक्यभावेन पञ्चनदे प्रचोदिताः ।
ख्रिस्तानाश्च विभजन्ति पूर्वाञ्चलं स्वदेशतः ॥

पारिजातम् 6।1 स्वाधीनता दिवसविशेषांकः, पृ॰ 39

वर्तमानवैज्ञानिकविष्कारेसु टी॰ वी॰ प्रभृतिउपादानैः भृशं प्रभाविताः युवकयुवत्यः स्वकर्त्तव्यविमुखा एव दरीदृश्यन्ते प्रायः समाजे गेहेगेहे भारते टी॰ वी॰ वञ्चितवल्लभां नवोढां चित्रयन् श्री रामदेवशास्त्री यथार्थमेव कथयति–

इह जपति नवोढा तल्पगा कान्तसङ्गम्,
प्रणयसुखसखीयं शर्वरी यातयामाः ।

---

1. दूर्वा (नवोदिता विशेषांकः), 18 तमोऽङ्कः, अगस्त, 1990 भोपालम् (म॰ प्र॰ संस्कृत अकादमी प्रकाशनं)
2. मंगल्या, प्रयागं 1989, पृ॰ 32 ।

कितव इव च धारावाहिके दत्तदृष्टिः,
क्षिपति मयि न दृष्टि टी० वी० मुग्धो मिलिन्दः ॥
केनेयं कुटिलत्वेन कृष्णवदनेनाविष्कृता चण्डिका
गेहे या गृहिणी जनस्य कुरुते चेतो ज्वरं कुट्टिनी ।
मिथ्यानर्तनि हास्यलास्यचरितैः सम्मोह्यन्ती जनान्,
कान्तानां कुटिला करोति कदनं शस्त्रैरलक्ष्यैर्यतः ॥
(पारिजातम्, 6।2 पृ० 22, 23)

भारते नारीणां दलितदशाऽपि सुचित्रिता संस्कृतसाहित्ये । कवयित्री डॉ० दीक्षित-पुष्पा समासोक्त्या नारीजीवनस्य विडम्बनामेवं चित्रयति—

भूतले परिमृदितलतिका यः स्वयंसमुपस्करोति ।
स द्रुमोऽपि सदयहृदयं निर्दयं शूलाकरोति ॥
"किं करोमि", दूर्वा, 15 तमोऽङ्कः 1989, पृ० 19)

एवं युवाकथाकारः केशवचन्द्रदाशः 'पावकः' मति नाम्नां कथायां विषण्णां वृन्दां चित्रीकृत्य नारीणां दुःखस्थामेव समाजे रेखाङ्कयति (द्रष्टव्या—दूर्वा 14 अंकः पृ० 51-52)

विंशशताब्द्याः संस्कृतसाहित्ये भारतस्य राष्ट्रीयैकता, सांस्कृतिकी चेतना च क्षेत्रजाति-धर्मसम्प्रदायभाषावेशभूषागतवैषम्यमुपेक्ष्य एकतायाः व्यापकपृष्ठभूमौ विश्वबन्धुत्वं प्रति प्रेरयतः । 'विस्मृतभेदाः सन्तः' शीर्षकरचनायां श्री जि० महाबलेश्वर भट्टः चित्रयति भारतस्य सांस्कृतिकीमेकतामेव ।

(गीतसंस्कृतम्, पृ० 4, वाराणसी प्र० स०)

श्री शिवाजी-महारानीलक्ष्मीबाई-गान्धि-तिलक-नेहरू-सुभाष-मालवीयराजेन्द्र-प्रसादप्रभृतिराष्ट्रीय-महापुरुषाणां पौरुषमयोदात्तजीवनं चित्रीकृत्य महाकाव्यगीति-काव्यनाटक-चम्पूमयग्रन्थेसु संस्कृतसाहित्यकाराः सामयिक-भारतस्य सार्वभौमं यथार्थमेव चित्रणं कृतवन्त ।

किम्बहुना, विंशशताब्द्याः संस्कृत-साहित्ये भारतं भास्वरं भव्य भक्तिभाव-जनकमेव चित्रितं सुकृतिभिः सत्कविभिः यस्य कदापि जरामरणभयं न विद्यते जन-मानसे । इति शम् ।[1] □

---

1. द्रष्टव्यः लेखकस्य शोधलेखः, सागरिका, 28/4 अंकः, विक्रमी सं० 2047, वाराणसी, पृ० 45-50 ।

# पञ्चमहायज्ञविमर्शः

पुरातनभारतीयसंस्कृतिः स्वाप्रतिमवैशिष्ट्यपूर्णविलक्षणैर्विश्वसंस्कृतिषु मूर्धन्या मन्यते। वैदिककालादेव धर्मपरायणार्याणां शिरोमणीभूताः प्रतापिनो भरतास्तपस्त्यागप्रधानया यज्ञियसंस्कृत्या 'भारत्या' भूमण्डले भासितवन्तः आसन्। पञ्चमहायज्ञा अहिंसात्यागदानकर्त्तव्यपालनप्रधानाया अस्या एव भारतीयसंस्कृतेः प्राणभूता अङ्गाः सन्ति।

**पञ्चमहायज्ञानां प्राचीनवाङ्मये उल्लेखः**—वैदिकवाङ्मये कर्मकाण्डस्मृतिग्रंथेषु च पञ्चमहायज्ञानां महासत्राणां वा समुल्लेखोऽधोलिखितरूपे प्राप्यते। शतपथब्राह्मणे तैत्तरीयारण्यके चेमे एवं वर्णिताः सन्ति–

"पञ्चैव महायज्ञाः। तान्येव महासत्राणि भूतयज्ञो मनुष्ययज्ञः पितृयज्ञो देवयज्ञो ब्रह्मयज्ञ इति।"

(शत० ब्र० 11/5/6/7, तैत्ति० आरण्के 11/10)

आश्वलायनगृह्यसूत्रेऽपि एषा मेवं प्रतिपादनं विद्यते–

अथातः पञ्चयज्ञाः देवयज्ञो भूतयज्ञः पितृयज्ञो मनुष्ययज्ञ इति।"

(आश्व० गृ० 3।1।1–2)

आपस्त[1]म्बगौतम[2]बौधायने[3] धर्मसूत्रस्मृतिग्रंथेषु पञ्चमहायज्ञानां परिचयः प्राप्यते सम्यग्रूपेण एवम्–"तेषां महायज्ञः महासत्राणि च संस्तुति अहरहर्भूतबलिमनुष्येभ्यो यथाशक्तिदानम्। देवेभ्यः स्वाहाकार आकाष्ठात पितृभ्यःस्वधायकार ओदयात्रा दृष्टिभ्य स्वाध्याय इति।"[4] भगवान् मनुः पञ्चमहायज्ञान् विवेचयन् कथयति–

"अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम्।
होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम्॥"

(मनु० 3।70)

---

1. आपस्तम्बधर्मसूत्रे 1।4।12।1, 13।1
2. गौतम० ध० सू० 5।8, 8।17
3. बौधा० ध० सू० 2।6।1-8
4. गोभिलस्मृति 2।16, याज्ञ० स्मृतिः 1।100, मनु० 3।67, 74

एतेषां पंचमहायज्ञानामन्याभिधानान्यपि अहुतहुत-प्रहुतब्राह्महुतप्राशितरूपेषु प्रचलितानि सन्ति । यथा मनुः प्रतिपादयति—

"अहुतं च हुतं चैव तथा प्रहुतमेव च ।
ब्राह्मायं हुतं प्राशितं च पंचयज्ञान् प्रचक्षते ।।
जपोऽहुतो हुतो होमः प्रहुतो भौतिकोबलिः
हुतं द्विजाग्र्यार्चा प्राशितं पितृतर्पणम् ।।

(मनु० 3।67।74)

उपयुक्तेषु पंचयहायज्ञेषु चतुर्णां महायज्ञानां वर्णनमथर्ववेदे ।

(6।7।2)

हुतप्रहुतयोर्वर्णनं वृहदारण्यकोपनिषद्ग्रन्थे (१।५९) वर्तते ।

पंचमहायज्ञानां प्रयोजनम्—पंचमहायज्ञेस्तु उदारचरितानां गृहस्थधर्म-परायणानां भारतीयानां धर्मवृद्धेर्विशालहृदयस्य च पावनभावनायाः परिपोषणं भवति । सामान्यतः दैनन्दिनजीवने नित्यं नानाविधाः हिंसाः संपाद्यन्ते गृहस्थजनैः । तासां पापनिवारणायैव पंचमहायज्ञानां सरलसंविधान सुधीधर्मशास्त्रकारैः कृत तस्मि गृहस्थजनैः चुल्लीपेषणोपस्करकण्डनीजलकुम्भकार्येषु प्रायः पञ्चविधाः हिंसाः भवन्ति, तासां सर्वासां निष्कृत्यर्थं मनुहारीतप्रभृतिधर्मशास्त्रिभिः पंचसूनाक्रमेण पंचसत्राणां पंचमहायज्ञानां वाऽनिवार्यता प्रतिपादिता । मनुर्निदिशति अस्मिन्सन्दर्भे—

पञ्चसूना गृहस्थस्य चुल्लीपेषण्युपस्कारः ।
कण्डनी चोदकुम्भश्च बध्यते यास्तु बाहयन् ।।

(मनु० 3।68)

"तासां क्रमेण सर्वासां निष्कृत्यर्थं महर्षिभिः ।
पंचक्लृप्ता महायज्ञाः प्रत्यहं गृहमेधिनाम् ।।"

(मनु० 3।69)

हारीतधर्मसूत्रेऽपि पंचसूनानां मनुमतानुसारिणी सम्यक् व्याख्या वर्तते । ब्रह्मचारिणस्तु सामान्यतः गुरुसेवयाऽग्निपूजया वेदाध्ययनेन च प्रथमतिसूम्यः सूनाभ्यो विमुक्ताः भवन्ति, किन्तु गृहस्थवानप्रस्थजनास्तु पंचमहायज्ञैः पंचसूनाभ्यः पापशून्याः भवन्ति । भगवान् मनुः प्रमाणयति—

"पञ्चैताभ्यो महायज्ञान्न हापयति शक्तितः
स गृहेऽपि वसन्नित्यं सूनादोषैर्न लिप्यते ॥"

(मनु० 3।71)

अहिंसायाः पावनभावनया सह पंचमहायज्ञैस्त्यागभक्तिश्रद्धाकर्त्तव्य-पालनज्ञानोपासनादिपुण्योद्देश्यानामपि समाजे परिपुष्टिर्भवति । प्राचीनऋषिधातृ-पितृजीवजगन्ति प्रति श्रद्धाभक्तित्यागपूर्णकर्त्तव्यपालनमेव पंचमहायज्ञानां प्रमुखं प्रयोजनमस्ति । देहधारिणां ब्राह्मीस्थितिलाभार्थमपि पंचमहायज्ञानां सरलं साधनं विद्यते । मनुना उक्तम्–

"महायज्ञैश्च ब्राह्मीयं क्रियते तनुः ।"

(मनु० 2/28)

पञ्चमहायज्ञानां सम्पादनाय विधानमत्यन्तं सरलमस्ति । न विद्यते एषु एतादृशी शास्त्रीयनियमानां जटिलता दुष्करता वा यादृशी श्रौतयज्ञेषु । पंच-महाज्ञान् सम्पादयितुं श्रौतयज्ञानामिव पुरोहितस्यापि अवश्यकता नानुभूयते । डॉ० पी० वी०[1] काणेमहोदयमतानुसारं श्रौतयज्ञानां स्वर्गसम्पत्तिपुत्रादिकामनापूर्ति-प्रयोजनस्यापेक्षया पंचमहायज्ञानामाध्यात्मिकतानैतिकतासदाशयताद्युद्देश्यानि सम्यग्रूपेण अधिकतया च समुपलभ्यते ।

**पंचमहायज्ञानां सम्पादन विधानम्**–एतेषां पंचमहायज्ञानां सम्पादनविषयेऽपि धर्मशास्त्रेषु पर्याप्तरूपेण निर्देशाः प्राप्यन्ते । एषां क्रमशः संक्षिप्तविवेचनं प्रस्तूयतेऽस्मिन् शोधलेखे–

**ब्रह्मयज्ञः**–गोभिलस्मृतिः (2।28-29) निर्दिशति यत् सान्ध्यपूजासमये मंत्रजप एवं ब्रह्मयज्ञः मन्तव्यः । आश्वलायन गृह्यसूत्रे (3।2।1) व्याख्यां कुर्व-न्नारायणोऽपि निवेदयति यत् वैश्वदेवात्पूर्वं पश्चात् वा ब्रह्मयज्ञः करणीयः । ब्रह्मयज्ञविषयकं वर्णनं शतपथब्राह्मणे (11।5।6।3-8) विद्यते । प्रतिदिवसीयवेदाध्यनं (स्वाध्यायो वा) ब्रह्मयज्ञः कथयितुं शक्यते यस्मिन् जुहूचमसोदमृताभ्रु वास्रु गा-वभृथाद्युपकरणान्यापि विद्यन्ते । ब्रह्मयज्ञ-कर्त्तादानफलापेक्षया ब्रह्मयज्ञस्य त्रिगुणं फलं प्राप्नोति । तैत्तिरीयारण्यके (2।11) ब्रह्मयज्ञस्य समयः सूर्योदये, स्थानं ग्रामाद्बहिः (यतः गृहाण्यपि अदृष्टानि भवेयुः) । किन्तु स्थानविषये काचित् बाध्यता नाऽऽसीत् यत ईदृशं प्रतिभाति एतद्विषयकेऽग्रिमे निर्देशे यत् ग्रामाद्बहिर्गन्तुं

1. धर्मशास्त्र का इतिहास (प्रथम भाग) अनु० अर्जुन चौबे काश्यप, लखनऊ पृ० 383

यद्यसुविधा भवेत्तर्हि ग्रामे एव दिने वा रात्रौ वा ब्रह्मसत्रः सम्पादनीयः। ब्रह्मयज्ञस्यान्तेऽधोलिखितमंत्रस्य त्रिवारं जापः करणीयः–

"नमो ब्रह्मणे नमो स्वग्नये नमः पृथिव्यै नमः ओषधीभ्यः,
नमो वाचे नमो वाचस्पतये नमो विष्णवे बृहते करोमि ॥"

(आश्व० गृ० सू० 3।2।2, 3।3।4)

"ॐ भूर्भुवः स्वः.......... " पूर्वकं त्रिवारं गायत्रीमंत्रसहितः एकः ऋग्वेदमंत्रस्त्रिवारं" नमो ब्रह्मणे ........' इति मंत्रजापेन ब्रह्मयज्ञः सूक्ष्मरूपेणापि सम्पादयितुं शक्यते। शांखायनगृह्यसूत्रे (1।4) ब्रह्मयज्ञार्थं ऋग्वेदस्य बहूनां सूक्तानां मंत्रपाठस्य निर्देशो विद्यते। आह्निकप्रकाशे पुरुषसूक्त (ऋक्० 10।90) संहितान्यमंत्राणां पाठपूर्वकं ॐकारस्यापि पाठः प्रतिदिनं करणीयः। याज्ञवल्क्यस्मृतौ (1।10) समययोग्यतानुसारं ब्रह्मयज्ञेऽथर्ववेदसंहितेतिहासदर्शनग्रन्थानामध्ययनं कर्तुं शक्यते। आचमनप्राणायामयोः पश्चादयं संकल्पोऽपि पठनीयः–"श्री परमेश्वरप्रीत्यर्थं ब्रह्मयज्ञं करिष्ये, तदंगतया देवर्ष्याचार्य–(यदि पिता जीवितो न भवेत्तर्हि पितृशब्दो वाच्यः)–तर्पणं करिष्ये।"

तैत्तिरीयशाखानुयायिन आरम्भे "विद्युदसि विद्या मे पाप्मानमृतात्-सत्यमुपैमि अन्ते च"–वृष्टिरसि वृश्च मे पाप्मानमृतात् सत्यमुपानाम्।" इति कथयन्ति।

देवयज्ञः–'अग्नौ समित्पातेन देवयज्ञः सम्पाद्यते' इति तैत्तिरीयारण्यकः प्रतिपादयति (तैत्ति० आ० 2।10), आपस्तम्ववौधायनधर्मसूत्रयोरस्मिन् सन्दर्भे कथनमस्ति–"अहरहः स्वाहा कुर्यादाकाष्ठात्तथैतं देवयज्ञं समाप्नाति।"

(बौधा० 2।6।4, आप० ध० सू० 1।4।13।1)

गौतमस्य दृष्टिस्तु देवयज्ञविषये व्यापिनी वर्तते। तदनुसारं होमस्य स्वरूपं एवं निर्दिश्यते–"देवपितृमनुष्ययज्ञाः स्वाध्यायश्च बलिकर्म। अग्नावग्निर्धन्वन्तरिर्विश्वेदेवाः प्रजापतिः स्विष्टकृदिति होमः।" (गोतम० 5।8–9)

देवतानाम्ना स्वाहासहितेन मंत्रेण अग्नौ हविषः समिद्भ्यो वा पातः, देवयज्ञः। (यथा–सोमाय स्वाहा, सरस्वत्यै स्वाहा, अग्नीसोमाभ्यां स्वाहा इति)।

आश्वलायन गृह्यसूत्रे (1।2।2) देवयज्ञेऽधोलिखिताः प्रमुखाः देवताः सूर्याग्निप्रजापतिसोमेन्द्रद्यौपृथिवीविश्वेदेवाब्रह्मादयो निर्दिष्टाः सन्ति। मानवगृह्यसूत्रेऽपि (2।12।1) विविधदेवानां नामानि प्राप्यन्ते।

मनुयाज्ञवल्क्यौ तर्पणदेवपूजोपरान्ते होमपंचमहायज्ञेषु संयोजयतः[1]। सामान्यतः मध्यकालिकैर्धर्मशास्त्रिभिर्वैश्वदेवोऽपि देवयज्ञरूपेण प्रतिपादितोऽस्ति

1. मनुस्मृतिः, 2।176, याज्ञ० 1।100।

किन्तु आपस्तम्बधर्मसूत्रे (1।4।13।1) हरदत्तः[1] देवयज्ञं वैश्वदेवाद् भिन्नं वदति। हारीतः प्रातःकाले होमपश्चात्, मध्याह्ने ब्रह्मयज्ञतर्पणपश्चाच्च देवपूजां प्रतिपादयति। देवपूजायाः सूक्ष्मसंकेताः वैदिकसाहित्येऽपि वर्तन्ते[2]। प्रतीयते, तद्युगीनसमाजे देवपूजार्थं देवप्रतिमा अपि निर्मीयन्ते स्म।

**पितृयज्ञः**–प्रदिदिनं पितृभ्योऽन्नोदकफलपयोभिः श्रद्धयाकव्यार्पणं पितृयज्ञः कथ्यते, यस्मिन् पितृभ्यः एकब्राह्मणस्य भोजनमपि निर्दिष्टं मनुना, किन्तु वैश्वदेवं प्रति विप्रभोजनस्य आवश्यकता न भवति।

कुर्यादहरहः श्राद्धमन्नाद्येनोदकेन वा।
पयोमूलफलैर्वापि पितृभ्यः प्रीतिमावहन्।
एकमप्याशयेद्विप्रं प्रित्रर्थे पाञ्चयाज्ञिके।
न चैवात्राशयेत्कञ्चिद्वैश्वदेवं प्रति द्विजम्॥

(मनु० 3।82, 83)

**भूतयज्ञः**–आकाशे विश्वेभ्यो वलिमुत्क्षेपानन्तरं भूतयज्ञस्य सम्पादनं सर्वथा समीचीनं मन्यते दिवाचररात्रिचरेभ्यः स्वपचश्वन्वायसादिसमस्तभूतेभ्यो बलिप्रदानं भूतयज्ञः कथ्यते, योऽतिपुण्यफलप्रदो भवति गृहजनेभ्यः। मनुः भूतयज्ञविषये समीचीनं स्वाभिमतं प्रकटयति—

"शुनां च पतितानांच स्वपचां पापरोगिणाम्।
वायसानां कृमीणां च शनकैर्निवपेद्भुवि।
एवं यः सर्वभूतानि ब्राह्मणो नित्यमर्चति।
स गच्छति परं स्थानं तेजोमूर्तिपथर्जुना॥"

(मनु० 3।92, 92)

**नृयज्ञः**–(अतिथियज्ञः)–भूतयज्ञानन्तरं नृयज्ञोऽतिथियज्ञो वा सम्पादनीयः यस्मिन् विधिवद्भिक्षवे ब्रह्मचारिणे वेदतत्त्वविदे ब्राह्मणाय वा भिक्षादानपूर्वकमतिथीनामपि भोजनं भवति। यथा निर्दिष्टं मनुनाऽस्मिन् विषये तथैव समाचरणीयो नृयज्ञः–

कृत्वैतद्बलिकर्मैवमतिथिं पूर्वमाशयेत्।
भिक्षां च भिक्षवे दद्याद्विधिवद् ब्रह्मचारिणे॥

(मनु० 3।94)

---

1. स्मृतिमुक्ताफलम् (आह्निकः), पृ० 383।
2. ऋग्वेदः 4।54।10 क इमं दशभिर्ममेन्द्रं क्रीणाति धेनुभिः, ऋक्० 8।11।5 (इन्द्रप्रतिमाः)।

'अतिथिदेवो भव:' इति पावनभावनया प्रेरिता: गृहिणो नित्यं नृयज्ञं सम्पादयन्ति। विपन्नवस्थायामपि गृहस्थजनेन अतिथि: तृणासनभूमिजलमधुर-सत्यवाग्भि: सदैव सत्कर्त्तव्य:। मनुनाऽतिथिपूजाविषये कथितम्–

"सम्प्राप्ताय त्वतिथये प्रदद्यादासनोदके ।
अन्नं चैव यथाशक्ति सत्कृत्य विधिपूर्वकम् ।।"

(मनु० 3।99)

देशकालपात्रानुसारमतिथियज्ञे समुचितं संशोधनमपि करणीयम्। यथा गृहस्थोऽतिथिभोजनात्पूर्वं नवोढाकुमारीरोगिणीगर्भिणी-स्त्रियोऽविचारयन् भोजयेत्। पुण्यफलकामभि: गृहस्थजनै: सायंकालेऽसमयसमागतातिथय: सर्वथाऽन्नजलावा-सादिभि: सत्कर्त्तव्या: अस्मिन् सन्दर्भे मनुर्निर्दिशति–

अप्रणोद्योऽतिथि: सायं सूर्योढो गृहमेधिना ।
काले प्राप्तस्त्वकाले वा नास्यानश्नन्गृहे वसेत् ।।

(मनु० 3।105)

"न वै स्वयं तदश्नीयादतिथिं यन्न भोजयेत् ।
धन्यं यशस्यमायुष्यं स्वर्ग्यं वातिथिपूजनम् ।।"

(मनु० 3।106)

समीक्षा–संसारेऽसारे दुर्लभनरदेहं धारयित्वा मानव: देवर्षिपितृभूतातिथीनां किञ्चिद् ऋणमवश्यमेव धारयति, तेषां एतान् प्रत्याशाकांक्षा वाऽपि गृहस्थजीवने समाधृता भवत्येव। अतएव मानवजीवनस्य सार्थकतायै आनृणाय च पंचमहाय-ज्ञानामनिवार्यता सर्वथा समीचीनैव समाजे। पंचमहायज्ञै: मानवताया: व्यापकक्षेत्रे नि:स्वार्थभावेन त्यागदानज्ञानप्राप्तिकर्त्तव्यपालनश्रद्धोपासनादिदिव्यमानवीय-गुणानामपि संवर्धनं भवति। अतएव मनीषिणा मनुना सर्वसामान्य: सामाजिको निर्दिष्टोऽस्ति–

"स्वाध्यायेनार्चयेतर्षीन् होमैर्देवान् यथाविधि ।
पितॄन्श्राद्धैश्च नॄनन्नैर्भूतानि बलिकर्मणा ।।"

(मनु० 3।81)

पंच महायज्ञानां प्राचीनभारतीयसमाजे प्रतिष्ठाऽनिवार्यता चेदृशी आसीत् यदेतान् असम्पादने नरो निम्नतमो निष्कृष्ट: श्वसन्नपि मृत इव मन्यते मनुना एतेषां गर्हणायामुक्तम्–

"देवतातिथिभृत्यानां पितॄणामात्मनश्च य: ।
न निर्वपति पञ्चानामुच्छ्वसन्न स जीवति ।।"

(मनु० 3।72)

पंचमहायज्ञानामकर्ता विद्वान् ब्राह्मणोऽपि 'मलीम्लुच्' इति संज्ञया समाजे सर्वत्र तिरस्क्रियतेस्म। खेदस्य विषयोऽस्ति यत् पाश्चात्ये भौतिकवादी दृष्टिकोण प्रभाविते स्वार्थपरायणे आत्मकेन्द्रिते केवलादिनि भारतीय समाजे साम्प्रतं पंचमहायज्ञानामनिवार्यता प्रभावी प्रतिष्ठा च शनैः शनैः समाप्तप्रायैव संदृश्यते। साम्प्रतन्तु आस्तिकोदारजिज्ञासुकर्त्तव्यपरायण धर्मबुद्धयो भारतीयाः पंचमहायज्ञान् परमास्थया प्रतिदिनं समाजिकमंगलाय राष्ट्रोन्नतये च सम्पादयितुं संकल्पशीलाः सन्तु।[1] इति शम्॥ 

1. द्रष्टव्यो लेखकस्य एतद्विषयक विस्तृत लेख –
सागरिका, 23/4, वि॰ सं॰ 2041 वर्षीयाङ्क पृ॰ 71–77, याज्ञिक पं॰ लक्ष्मण चतुर्वेदी स्मृतिग्रन्थ (वाराणसी सागरम्) नव दिल्ली, 131-138।

# दृप्तः ककुद्मानिव चित्रकूटः

पावनरामचरितसम्बन्धिमहत्त्वपूर्णेषु स्थलेषु चित्रकूटोऽन्यतमोऽस्ति। मर्यादापुरुषोत्तमः श्रीरामः स्ववनवासस्य प्रारम्भिके काले सुरम्ये चित्रकूटगिरौ स्वप्रवासस्थलं वाल्मीकि परामर्शानुसारं निर्धार्य स्वपावनपादपद्माभ्यामिमं पावनं कृतवान्। वाल्मीकिरामायणेऽयोध्याकाण्डे 54–56 अध्यायेषु चित्रकूटस्योल्लेखो[1] वर्तते। परवर्तिपुराणकाव्यादिग्रन्थेष्वपि[2] प्रसिद्धतीर्थस्थलेषु चित्रकूटस्य महत्त्वमल्पं नास्ति।

कविकुलगुरुः कालिदासः स्वकीयेऽमरमहाकाव्ये रघुवंशे (12/15 तथा 13।47 स्थलयोः) चित्रकूटस्योल्लेखं करोति, येनाऽस्यावस्थितिः मन्दाकिनी (पयस्विनी) नदीसमीपे बुन्देलखण्डीये दण्डकारण्यक्षेत्रे सुस्पष्टा भवति। भगवतो रामस्य पुष्पकविमानेन लंकातोऽयोध्याप्रस्थान-प्रसङ्गे आकाशात् बिम्वग्राहि-विहंगमदृश्ये कविकुलगुरुः कालिदासश्चित्रकूटं चमत्कारिरूपेण चित्रीकरोति–

धारास्वनोद्गारिदरीमुखोऽसौ शृंगाग्रलग्नाम्बुदवप्रपङ्कः।
बध्नाति मे बन्धुरगात्रि! चक्षुर्दृप्तः ककुद्मानिव चित्रकूटः॥"

रघु॰ 13।47

कीदृशो दृष्टि-आवर्जकश्चित्रकूटोऽयमिति कालिदासदृष्ट्यावलोकयन्तु सहृदयाः।

## धारास्वनोद्गारिदरीमुखः

चित्रकूटो हनुमत् धारा प्रभृति चित्रविचित्रनिर्झराणां जलधाराभिः शब्दायमानकन्दरास्वरूपं मुखं धारयति। दृप्तो मदमत्तो गर्वितः हर्षयुक्तो वा ककुद्मान्-गवेन्द्रः कन्दरासमीपे निर्झरस्य प्रपतज्जलधाराभि समं मुखेनोच्चैः रम्भास्वनं करोति

---

1. रामायणे, अयोध्या॰ 55।1 54, 29, 30, 31, 32 जन्मुस्तं गिरिप्रति।
   " अयोध्या॰ 56।4,10 चित्रकूटमिमं पश्य प्रवृद्धशिखरं गिरिम्।
   " " 56।11 पुण्ये रंस्यामहे तात चित्रकूटकानने।
   " " 56।12 रम्यमासेदतुः शैलं चित्रकूटमनोरमम्॥
2. श्रीमद्भागवते 5।19 पद्मपुराणे आदि॰ 6 तमेऽध्याये प्रसन्नराघवे 87

तथैव ककुद्मान् चित्रकूटोऽपि प्रपातीयजलधारा शब्दायमानकन्दरामुखमयो दरीदृश्यते दूरात् ।

## श्रृंगाग्रलग्नाम्बुदवप्रपङ्कः

यथा गर्वितो गवेन्द्रः वप्रक्रीडायां स्वकीयसुदृढश्रृंगाग्राभागयोर्मेलिनं धूलिं पङ्कं वा दधाति तथैवाऽयं चित्रकूटोऽपि स्वकीयोत्तुंगशिखरे श्यामलं मेघं धारयित्वा कविकुलगुरोः कालिदासस्य भगवतो रामस्य वा दृष्टिमावर्जयति । अत्र श्लिष्ट-श्रृंगाम्बुदपंकेसु चमत्कारि साम्यमेव रामस्य नेत्राकर्षणे प्रबलो हेतुर्विद्यते । नतोन्नत-चित्रकूटवत् सीताया अपि बन्धुराणि नतोन्नतानि गात्राण्यपि नयनाकर्षकाणि सन्ति ।

## दृप्त ककुद्मानिव चित्रकूटः

कविकुलगुरोः कालिदासस्योपास्यदेवः आशुतोषः शंकर आसीदिति निर्वि-वादं तथ्यमस्ति । भगवतः शंकरस्य प्रियवाहनो वृषभो नन्दिगणरूपे विख्यातोऽस्ति । अतएव आराध्यदेवस्य वृषभवाहनशिवस्य प्रियवाहनं वृषभं वर्ण्यविषये प्रियोपमेयो-पमानरूपयोरपि यत्र तत्र प्रास्तौत् महाकविः । यथा कुमारसम्भवे—

तुषारसंघातशिलाः खुराग्रैः समुल्लिखन् दर्पकलः ककुद्मान् ।
दृष्टः कथञ्चिद् गवयैर्विविग्नैरसोढसिंहध्वनिरुन्ननाद ॥

कुमार० 1।56

अत्र 'दर्पकलः ककुद्मान्' रघुवंशे 13।47 दृप्तः ककुद्मानिव (चित्रकूटः) धारास्वनोद्गारिदरीमुखोऽसौ सिंहध्वनिरून्ननादेति पर्याप्तं साम्यमावहति । रघुवंशे चित्रकूटः उपमेयः दृप्तककुद्मतः सुन्दरमुपमितोऽस्ति किन्त्वन्यत्र कुमारसम्भवे कालिदासेन गोपतिः (ककुद्मन्) कैलासेनोपमीयते—

स गोपतिं नन्दिभुजावलम्बी शार्दूलचर्मान्तरितोरुपृष्ठम् ।
तद्भक्तिसंक्षिप्त बृहत्प्रमाणमारुह्य कैलासमिव प्रतस्थे ॥

कुमार० 7।31

काव्येऽत्र उपमेयोपमानरूपयोर्वृषभवर्णनमिदं वस्तुतः कालिदासस्य भगवति शिवेऽतिप्रगाढं भक्तिभावं प्रकटीकरोति । दृप्तगवेन्द्ररूपे महाकविः वस्तुतः मत्त-गजेन्द्रं[1] पावनं शिवधामचित्रकूटमेव चित्रयति व्यापकसाम्य दृष्ट्या ।

## मन्दाकिनी भाति नगोपकाण्ठेः

चित्रकूटपरिसरे प्रवाहिता पयस्विनी मन्दाकिनी नदी आकाशात् अधो-

---

1. "आलेख्य विशेष इव गजवृषभयोः प्रतिभासम् ।
एकस्मिन्नेवार्थे शिवशक्तिविभागकल्पनां कुर्मः ॥" (परिमल: महार्थमञ्जरी)

दृष्टिपाते विदूरात् अत्यन्तं क्षीणतनुः पृथिव्याः कण्ठे सत्यमेव मौक्तिकमाल्यमिव प्रतिभाति रामम्। मन्दाकिनीयं त्रिपथगारूपेण पुराणेषु काव्यग्रन्थेषु च प्रकीर्तिता यथा-रघुवंशे—

एषा प्रसन्नस्तिमितप्रवाहा सरिद् विदूरान्तरभावतन्वी।
मन्दाकिनी भाति नगोपकण्ठे मुक्तावली कण्ठगतेव ।। भूमेः।

उत्तराखण्डे गंगाया उद्गमक्षेत्रेऽपि मन्दाकिनीयं मन्दागिन-रूपेऽलकनन्दाया परमपावनसहायिकानदी सुपरिचितैवाऽस्ति, किन्तु चित्रकूट परिसरे प्रवाहितेयं मन्दाकिनी चित्रकूटा पयस्विनीत्यभिधानत्रयं संधार्य सुविख्यातैव त्रिपथगारूपेणाऽपि। प्रतीयते ऋक्षात् पर्वतीयोद्गमस्थालात् त्रिभिः रूपैरियं तपोधनानामभिषेकार्थमनसूयया प्रवाहिता, यथेयं त्रिस्रोतस्विनीरूपे कालिदासेन वर्णिताऽस्ति रघुवंशे—

अत्राभिषेकाय तपोधनानां सप्तर्षिहस्तोद्धृतहेमपद्मम्।
पवर्तयामास किलानसूया त्रिस्रोतसं त्र्यम्बकमौलिमालाम् ।।

रघु॰ 13।41

विन्ध्याचलस्य प्रत्यन्तश्रृंखलाया ऋक्षपर्वतात्प्रसूता[1] पयस्विनी मन्दाकिनी वा वस्तुतश्चित्रकूटस्य प्राणभूता रामकथेव सरसा पतितपावनीरूपे प्रथिताऽस्ति। यथा कण्ठस्य शोभा मुक्तावल्या संवर्धते तथैव मन्दाकिन्या चित्रकूटसमीपवर्तिस्थलस्य शोभाऽपि वर्धते एव।

सुपरिचताचित्रकूटस्य प्रत्यभिज्ञानविषये कापि भ्रान्तिर्न भवति, तथापि टीकाकारो मल्लिनाथ इमं पूर्वमेघे वर्णितेन रामगिरिणा भ्रान्तिवशात् समीकरोति। टीकाकारश्चरित्रवर्धनोऽपि मल्लिनाथस्यैवाऽन्धानुकरण करोति चित्रकूटरामगिर्योर्महदन्तरं वर्तते। एको बुन्देलखण्डक्षेत्रेऽपरश्च महाराष्ट्रे नागपुरसमीपे रामष्ट्रेकस्थले[2]ऽस्ति।

चित्रकूटस्यावस्थितिः बुन्देलखण्डक्षेत्रे बांदाजनपदे कर्वीसमीपे सुविज्ञातैव झांसी-मानिकपुररेलमार्गे चित्रकूटधामस्टेशनतः चित्रकूटः 6 किमी॰ दूरं, कर्वीवसतेश्च 9 किमी॰ दूरं वर्तते।

---

1. मत्स्यपुराणे, 114 तमेऽध्याये–ऋक्षपर्वतकन्याः–शोणनन्दनामन्दाकिनीचित्ररथादशार्णाचित्रकूटादयः सन्ति।
   श्रीमद्भागवत पुराणे, पंचमस्कन्धे 19 तमेऽध्याये।
   पद्मपुराणे, आदिखण्डे षष्ठेऽध्याये-चित्रोत्पलां चित्ररथां मञ्जुलां रोहिणीं तथा। मन्दाकिनीं वैतरणीं कोकां चापि महानदीम् ।।
2. द्रष्टव्यो लेखकस्य शोधग्रन्थः कालिदास की कृतियों में भौगोलिक, स्थलों का प्रत्यभिज्ञान 1969 ई॰ कर्णपुरात् प्रकाशितः।

बुन्देलखण्डक्षेत्रे मत्तगजेन्द्र रूपे सुप्रसिद्ध शिवधाम चित्रकूटगिरि: "कामतानाथ:" कामदगिरि:–रित्यभिधानाभ्यामपि सुपरिचितोऽस्ति। पयस्विनीरूपिणी मन्दाकिनीतटसंपृक्तश्चित्रकूटोऽसंपृक्त एकाकिनी पर्वतिका (Isolated Hill) रूपे रमणीयं दृश्यं दधाति। चित्रकूटसमीपस्थानि: स्फटिकशिलागुप्तगोदावरीगृहाधारा अनसूयात्रितपोवनसदृशानिस्तीर्था स्थलानि अपि प्राकृतिक सुषमासमन्वितानि सन्ति। चित्रकूटगिरेर्निम्नवर्तिपरिसरे पक्वसोपानसरणि: तीर्थयात्रिभ्य: सौख्यदाऽस्ति। महाराजछत्रसालस्य पत्न्या 250 वर्षपूर्वं चित्रकूटगिरिपरिसरे शोभनसोपानसरणिर्निर्मापित आसीत्।

अत्र दीपमालिका रामनवमीमहोत्सवावसरे मेलापके महान् भक्तजनसम्मर्दो दरीदृश्यते। पर्वतो चित्रकूटस्य प्राकृतिकसुषमा नानावन्यवृक्षलतानां हरीतिमया परमाह्लादकारिणी भवति। हनुमद्धारा प्रभृतिभिनैकनिर्झरैर्वस्तुतश्चित्रकूटो धारास्वनोद्गारिदरीमुखेन दृप्त: ककुद्मानिव सहृदयभावर्जयति।

मत्तगजेन्द्रशिवलिंगस्यसुप्रसिद्धतीर्थरूपे चित्रकूट: पावनरामकथासन्दर्भेऽपिमहत्त्वपूर्णसांस्कृतिकस्मारकोऽस्ति। चित्रकूटरूपे चित्ते भक्तिभावधारारूपिणी मन्दाकिनी रामकथावदत्र सततं प्रवहमाना परिलक्ष्यते। न केवलमादिकविर्वाल्मीकिरपितु परवर्तिन: तुलसी-रहीम-सदृशहिन्दुमुस्लिमभक्तकवोश्वराश्चित्रकूटं ससेव्य स्वसरसकाव्योद्गारेण भक्तिप्राणं भारतीयजनमानसं निरन्तरमभिषिक्तसवन्त:।

अस्माभि: श्रद्धालुभरतीयैश्चित्रकूटस्य शुभं दर्शन कृत्वाऽस्मात् रामायणानुसारमुदात्तमानवीयादर्शानामनुकरण करणीयमिति[1] शम्॥



1. अखिलभारतीय प्राच्यविद्यासम्मेलने, 34 तमऽधिवेशने विशाखापत्तने शोधसंगोष्ठ्यां प्रस्तुतमिदं शोधपत्रम्।
प्रकाशितं सागरिकायां 26/2 अंके. 2045 वि० संवत्सरे पृ० 26–31 सागरम्।

# वाल्मीकि-तपोवन-स्थिति-विमर्शः

भारतीयसंस्कृतेः समस्तसमुज्ज्वलानां तत्वानां सम्पोषका वसिष्ठ-विश्वामित्रवाल्मीकि–शरभंगसुतीक्ष्णात्रिप्रभृतिमुनीनां पावना आश्रमाः[1] करुणाक्षमादयापरोपकारोन्मुखाः श्रेष्ठमानवजीवनाय वर्णिताः सन्ति संस्कृतवाङ्मये। आदिकविः प्राचेतसो वाल्मीकिर्भारतीयसंस्कृतेरनुपमरामायणप्रासादस्य मौलिकरचनाकारः शिल्पी, मर्यादापुरुषोत्तमरामकीर्त्तेः महोद्गाता चासीत्। अतः तस्याश्रमावस्थितिविषये विदुषां जिज्ञासां स्वाभाविक्येवास्ति।

सामान्यतः संसारस्य प्रशान्तप्रदेशेन मानतवसति-ग्रामनगराद्वा वहिः प्राकृतिकसुषमा–समन्वितेषु पावनपर्वतवनोपवनेषूपत्यकासु, सरित्संगमे, नदीतटस्य जलाशयस्य वा समीपस्था ऋषीणामाश्रमा ज्ञानविज्ञानाध्यात्मिकसाधनाविरता लोकजीवनात् पराङ्मुखा आसन्। एवंविधवाल्मीकेराश्रमस्याप्युल्लेखो रामायाणादिसाहित्यग्रन्थेषु प्रायशः प्राप्यते।

वाल्मीकिरामायणानुसारेण रामवनवासप्रसङ्गे सीतालक्ष्मणानुगतो रामो वाल्मीकिमभिवादयन्[2] तस्यैव निर्देशोनुसारेण मन्दाकिनीसरित्तटे पर्णकुटीरञ्च निर्मितवान्। चित्रकूटगिरिपरिसरे वाल्मीकितपोवनावस्थितिविषये सामान्यतः स्थलद्वयमभिज्ञायेते जनसामान्येन–

(1) प्रयाग-चित्रकूटमार्गे कामतानाथगिरेः 23 किलोमीटर–दूरं संकीर्णं पदसरण्या संयुक्तं पश्चिमलालापुर पर्वतीयशृंगे वछोईग्रा[3]मसमीपमाश्रमं स्वीकुर्वन्ति श्रद्धालवः।

(2) रामस्य चित्रकूटप्रवासस्थलस्य समीपमेव सीतापुर (चित्रकूट) स्थले मन्दकिनी-सरित्तटे वाल्मीकेराश्रमावस्थितिरपि[4] स्वीक्रियते।

केषाञ्चित् विदुषां जनश्रुत्यनुसारेण वाल्मीकिजन्मस्थली कालप्रिय-

---

1. सागरिका: 15।3, 1976 ई० वर्षे द्रष्टव्यो लेखकस्य शोध लेखः– "कालिदासवर्णिताश्रमाणां वैशिष्ट्यम्" पृ० 55–62।
2 वाल्मीकिरामायण, अयोध्या० 56।16 अभिगम्याश्रमं सर्वे वाल्मीकिमभिवादयन्।
3-4. कल्याणं (तीर्थाङ्क) गीताप्रेस गोरखपुर, पृ० 123। तदेव, पृ० 111

(कालपी) हमीरपुरमार्गे कालपीतः 15 कि० मी० दूर बवीनाग्रामे[1] बभूव। तत्रा-श्रमस्मारकं मन्दिरं सरोवरश्चास्ति, यत्र वार्षिकमेलापके महान् जनसम्मर्द एकत्री-भवति वाल्मीकिमर्चयति च।

वाल्मीकि-तपोवनस्य सीतापरित्याग प्रसङ्गे, उल्लेखो न केवल रामायणे[2] ऽपितु परवर्ति पुराणेषु[3] कालिदास[4]-भवभूति-दिङ्नागा[5] (वीरनागा)-दिकवीनां कृतिष्वेपि प्राप्यते, यत्रास्य गंगांतटीयाऽसंदिग्धा भौगोलिकस्थितिरपि सम्यग्रूपेण निर्दिष्टास्ति।

लवणासुरवधाय शत्रुघ्नस्याऽयोध्यातो मथुराप्रस्थानप्रत्यागमनमार्गेऽपि वाल्मीकेराश्रमस्योल्लेखा विद्यते रामायणे रघुवशे च-

वाल्मीकेराश्रम पुण्यमगच्छद्वासमुत्तमम्। रामा० उत्तर० 65।2
वाल्मीकाश्रममागत्य वासं चक्रे महायशाः। उत्तर० 71।3
तस्य मार्गवशादेका बभूव वसतिः सन्तः।
रथस्वनोत्कण्ठमृगे वाल्मीकीये तपोवने। रघु०
तमृषिः पूजयामास कुमारं क्लान्तवाहनम्।
ततःप्रभावसिद्धाभिर्विशेषप्रतिपत्तिभि ॥ रघु० 15।12
भूयस्तपो व्ययो माभूद्वाल्मीकेरिति सोऽत्यगात्।
मैथिलीतनयोद्गीत निःस्पन्दमृगाश्रम् ॥ रघु० 15।37

उपर्युक्तसन्दर्भैर्ज्ञायते यत् पुरातनाश्रमस्यावस्थितिर्गङ्गायाः दक्षिण तटे तमसासमीपे आसीत्।

वाल्मीकेराश्रमस्य चित्रणं-चिरपरिचित परम्परागताश्रमैः समं कृतमस्ति कविभिः। यथा-आश्रमस्यार्तवपुष्प-फलयुक्तपादपैराच्छादनं, मुनिकन्यकाभिर्लघु-

---

1. लोकभाषायां 'ववीना'-(बावी न प्रत्यय) वाल्मीकिमृत्तिकामयी स्थली संसूचयति वाल्मीकेस्तपोभूमिम्।
2. वाल्मीकि रामा०, उत्तर० 45।17-18 गंगायास्तु परे पारे वाल्मीकेस्तु महात्मनः आश्रमो दिव्य सकाशस्तमसातीरमाश्रितः ॥
,, ,, उत्तर० 47।15, 16, 49।1, 6, 9, 23
3. श्रीमद्भागवते 9।11।10 पत्या भीतेन सा त्यक्ता प्राप्ता प्राचेतसाश्रमम्। 9।11।11।15
4. रघुवंशे 14।45, 58, 72, 75, 76-81, 15।11, 12, 37
5. उत्तररामचरिते प्रथम अंके-सीता-प्रसन्नगम्भीरासु वनराजिसु विहरिष्यामि पवित्रसौम्यशिशिरावगाहां भगवतीं भागीरथीं अवगाहिष्ये। पृ० 12

घटैर्वृ सेचनम् सायंकाले ऋषिपालितमा मृगाणाश्रम वेदिकां परित उपवेशनम्।[1] रात्रौ पावनाश्रमपर्णकुटीरेषु इंगुदीतैलपूरित[2] प्रदीपानां प्रज्वालनम् च सर्वथा स्वाभाविकमेवास्ति ।

कालिदासः चित्रकूटसमीपस्यस्य रामायणानुसार्याश्रमस्योल्लेखं न कृत्वा गंगातटवर्तितमसातटसमीपस्य वाल्मीकेर श्रमस्योल्लेखं कृतवान् । अयोध्याया मथुरां प्रति ऋजुराजमार्गमध्ये गंगायाः पारे दक्षिण तटे वर्तमानबिठूवसतिनिकट एव वाल्मीकेराश्रमकस्यावस्थितिः सम्पुष्टा भवति भौगोलिकैरुपादानैः पुरातनावशेषैःश्च । गोमतीसरित्तटवर्तिनैमिषारण्यक्षेत्रमपि निकटमस्ति स्थलादस्मात्, यत्र भगवान् रामोऽश्वमेधयज्ञं सम्पादितवान् । वाल्मीकिनिर्देशाच्च लवकुशौ तत्र पदातिनौ एव गत्वा मधुर-मधुरं रामायणगान[3] श्रावितवन्तौ रामस्य यज्ञसभाम् । महर्षीणां समक्षं शपथेन सीतायाः शुद्धिसिद्धये तां तत्रैव नैमिषे नीतवानादिकविः प्राचेतसः ।

उत्पलारण्यवर्तिब्रह्मावर्तक्षेत्रे वर्तमानविठूरनिकटे बैला–रुद्रपुरं (पुरातनं द्वैलवं) स्थानं वाल्मीकेर्जन्मभूमिर्विश्रुता विद्वद्भिः । अत्राद्यापि वाल्मीकिकूपो वर्तते । पारेगङ्गमुन्नावतः ।2 कि० मी० दूरं परियरस्थानं पुरातनपरिहारस्थल द्योतयति, यत्र लक्ष्मणेन सीतायाः परिहारः परित्यागो वा कृत आसीत् । सम्भवतः (परिहारस्थलं पुरातन - रामायण) काले गंगाया अस्मिन्नेव दक्षिणे तटे आसीत् । अत्रैव लवकुशाभ्यां रामस्याश्व मेधाश्वो गृहीतः । यत्र सम्प्रति वालकामेश्वरनाथ-महादेवमन्दिरं निर्मितमास्ति । अत गंगायास्तलस्तरै सम्प्राप्ता पुरातनबाणाग्रावशेषा वर्तन्ते, यान् लवकुशवाणैः समसमीकुर्वन्ति सुधियः पुरातत्त्वविदः । एवेमेकं जानकीमन्दिरमपि स्मृतिस्वरूपेण वतनऽस्मिन् स्थले ।

वाल्मीकितपोवनपार्श्वे वर्तमानविठूरवसितनिकटे वर्तते रमेलनाम्नी लघवसतिः, यां रामलवकृशमध्ये रणमेल सिन्धरूपेण स्मरन्ति सर्वे श्रद्धालव । वस्तुतः रमेल शब्दः रणमेलस्यापभ्रं शोस्ति ।

बिठूरस्थले वाल्मीकि-तपोवने वाल्मीकेश्वरमहादेव मन्दिरमपि वर्तते, पेशवाबाजीरावेण नवीकृतम् । मन्दिरपार्वे एव गगातटवर्तिसीताकुटीलवकुशनिवास स्वर्गनिश्रेणिप्रभृतिस्मारकस्थलान्यापि वर्तन्ते ।

वाल्मीकितपोवनस्य दक्षिणेन प्रवाहिता गंगाभिमुखी उत्तरी 'नोन लोन' वेति नदी पुरातनमसासरित्प्रतीयते; या अवध ( कोशल ) क्षत्रीयतमसानद्याः

1. रघु० 14।77 रघु० 14।87 रघु० 14।79 रघु० 14।80
2. वा० रामा० उत्तर० 91।15, 17, 92।2, 4, 93।1, 5 ।
3. वा० रामा० उत्तर० 96।10

सर्वथा भिन्नैव प्रतिभाति । डा० सतीशचन्द्रोऽवस्थी[1] एवमेवाऽभिमतं प्रकटयति, किन्तु साम्पतमस्यपुरातनमाहात्म्यमुपेक्षिदप्रायं वर्तते ।

कातिपयपुराणेष्वपि वर्तमानविठूरनिकट एव वाल्मीकितपोवनस्यावस्थिति: प्रतिपादिता ऽस्ति । यथा–श्रीमद्भागवतपुराणे (9।11।10–15) गंगातटे सीताया परित्यागस्थलं तपोवनसमीपे एव सङ्केतितम् ।

पत्या भीतेन सा त्यक्ता प्राप्ता प्राचेतसाश्रमम् ।।

भविष्यपुराणेऽपि प्रतिसर्गपर्वणि (4।10।54) उल्लिखितोत्पलावण्यमुत्पलावर्त्तं वाऽस्मादाश्रमस्थलादभिन्नं नास्ति ।

अर्वाचीन प्राच्यविद्याविद्भिरपि विठूरपरिसरे एव वाल्मीकि आश्रमवस्थिति: स्वीकृता । एषु नन्दलाल[2] डे-भगवतशरणोपाध्याय[3]-शिरोमणिका गोविन्दराज[4] प्रभृतय उल्लेखनीया: सन्ति । गोविन्द राजस्तु वाल्मीकि आश्रमावस्थिति: चित्रकूटे विठूरसमीपे वेति ? समस्याया: समाधानं सम्यगेव प्रत्यपादयत् यत् रामवनवासकाले आश्रमोऽयं मन्दाकिनीतटे चित्रकूटपरिसरे किन्तु सीतापरित्यागलवणासुरवधकालेऽयं गंगाया: दक्षिणे तटे कर्णपुरात् 9 कि० मी० दूर पश्चिमे वर्तमान विठूरसमीपेऽवस्थित आसीत् ।

अतएव आश्रमस्यास्य महत्त्वपूर्णसांस्कृतिकस्थलदृष्ट्या यज्ञतप: शिक्षासस्थानरूपेण पुरातनगौरवमभिलक्ष्यराष्ट्रियस्मारकरूपेऽभिरक्षणं कृत्वा करुणाक्षमादयापरोपकारपराक्रमज्ञानविज्ञानादिमानवीयसद्गुणानां प्रेरणा तरुणभारतीयैग्रहणीया ।[5]

□

1. A Study of Geographical Data in Puranas, Lucknow University Thesis 1965 Rurs P. 36
2. Geographical Dictionary of Ancient and Mediaeval India, P. 101
3. India In Kalidasa, Alld, 1966, P. 19
4. वाल्मीकिरामायणभौगोलिकविवरणम्) 2019 वि०, पृ० 1900
2. द्रष्टव्यम् लेखकस्य एतद्विषयक विस्तृतविवेचनं शोधग्रन्थे कालिदास की कृतियों में भौगोलिक स्थलों का प्रत्यभिज्ञान, कानपुर 1969, 8 तथा सागरिका 15।3 अंक, पृ० 37-41, सागरम् ।

# तमसाप्रत्यभिज्ञानं सांस्कृतिकमहत्त्वञ्च

परमरमणीयप्रकृतेर्नानाप्रकारेषूपादानेषु नयनाभिरामा नद्यः सन्ति संस्कृतेः सम्पोषिकाः। वैदेशिकनीलह्वांगहो दजला-फरातादिनदीवत् सिन्धु-सरस्वती-गंगा-सरयू-प्रभृतिभिः भारतीयनदीभिः समं तमसापि भारतीयं सांस्कृतिकजीवनमविरलधारया समाह्लाद्य पुष्णाति। प्राचीनसंस्कृतवाङ्मये तमसानद्या उल्लेखः प्राप्यते, यस्मिन्नस्याः महत्त्वं धार्मिकसांस्कृतिकदृष्ट्या संदृश्यये सुधीभिः साहित्याध्येतृभिः।

## तमसाया लोकप्रियता

प्रतीयते, प्राचीनकालेऽस्माकं भारतदेशे तमसानदी गंगा-सिन्धु-सरस्वती-सरयूवत् विशेषलोकप्रियासीत्। अत एव अस्याः पावनतां मनोरमतां च संवीक्ष्य साधुमुनिजनाः तटयोः सुरम्याश्रमान्[1] निर्मितवन्तः प्रतापिनरेशा यज्ञवेदिकाः, स्वर्णिमयज्ञ[2] यूपांश्चास्यास्तटयोः स्थापितवन्तः श्रद्धालवश्च[3] तीर्थरूपिणीं सततं सेवितवन्तः श्रद्धया।

अस्यास्तटीयसघनवनेषु वानप्रस्थिभिः शान्तिलाभः, मनसः प्रसादः, आखेटकैश्च मनोवाञ्छिता मृगया प्राप्यते स्म।

(i) वाल्मीकिरामायणे–बालकाण्डे 2।3 वाल्मीकितपोवनं तमसायास्तटेऽवस्थितमासीत्।

स मुहूर्तं गते तस्मिन् देवलोकं मुनिस्तदा।
जगाम तमसातीरं जाह्नव्यास्त्वविदूरतः॥
त तु तीरं समासाद्य तमसाया मुनिस्तदा।
शिष्यमाह स्थितं पार्श्वे दृष्ट्वा तीर्थमकर्दमम्॥ बाल 2।4

अनेनोल्लेखेन तमसातटीयतीर्थस्य अकर्दमतापङ्किलता वा प्रतिभाति। तमसाया रमणीयनिर्मलजलेऽवगाहनकामना एवं प्रकटिता–

रमणीयं प्रसन्नाम्बु सन्मनुष्यमनो यथा।
इदमेवावगाहिष्ये तमसातीर्थमुत्तमम्॥

(ii) मत्स्यपुराणे–114 तमेऽध्याये 25 तमे श्लोकेन तमसा नन्दना, मन्दाकिनी दशार्णा, चित्रकूटा नदीभिः सह ऋक्षपर्वतप्रसूता शोणो, वर्णितोऽस्ति + एवमेव मार्कण्डेयपुराणे (57।22-23) तमसाया उल्लेख एवं प्राप्यते—

चित्रोत्पला सतमसा करमोदा पिशाचिका ।
तथान्या पिप्पलश्रोणीर्विपाशा वञ्जुला नदी ।।
सुमेरुजा शुक्तिमती शकुली त्रिदिवा क्रमुः ।
ऋक्षपादप्रसूता वै तथान्या वेगवाहिनी ।।

रघुवंशे–९।२० क्रतुषु तेन ······कनकयूपसमुच्छ्रयशोभिनो
वितमसा तमसा सरयू तटाः ।।

रघु० ९।७२ अथ जातु···तपस्वीगाढा तमसां प्राप्य नदी
तुरंगमेण ।।

रघु० १४।७६ अशून्यतीरां मुनिसंनिवेशैस्तमोपहन्त्रीं
तमसामवगाह्य ।।

तत्सैकतोत्संग वलिक्रियाभिः सम्पत्स्यते ते मनसः प्रसादः ।।

## टोंसाऽभिधानां नैकाः नद्यः

तमसायाः समीकरणं प्राचीनभूगोलविदः विद्वांसः सामान्यतः 'टोंस' नद्या सह कुर्वन्ति, किन्तु इमाः टोसनद्योऽपि नैका विद्यन्ते । इदं ज्ञायते विविधैः सन्दर्भैः स्थल-स्वरूप-सहायक नदीगतभिन्नातानुसारेण ।

## (१) यमुना सहायिका पर्वतीया तमसा (टोंस)

गढ़वाल (हिमालय) क्षेत्रे उ० प० पर्वत श्रृंखलासु प्रवाहिता इयं तमसा[1]

---

1. D. C. Sirear studus in the Geog. of Ancient & Mediaeval India, Delhi. 1960. P. 143

S. N. majumdar, Ancient Geography of India, Calcutta. 1913 P. 119

Pargitor; Ancient Indian list. traih live P. 296.

D. C. डी० सी० सरकरमतमनुसृत्य डॉ० एस० जी० कण्टावाला कथयति तमसासमीकरणे–

It (Tamasa) is a name of a river which is identified with the modern Tons flowing into the Ganges below Allahabab. (I. H. Q. Vol. XXVII, P. 222)

उत्तररामचरितस्य जनस्थानीयप्रतीकपात्रमाश्रित्य डा० विमल चन्द्र लाहा तमसां पञ्चवटीक्षेत्रे प्रवाहितां मनुते, एतदसमीचीनंप्रतिभाति । यथा हि–

Tamasa is also a name of a river in the Panchvati region, (B. C. Law Historical Geog. of Ancient India. P. 292)

(टौंस) नदी यमुनायाः दक्षिणतटे देहरादूनं निकषा सिरमूरसमीपेऽवतरति । अस्या धार्मिकसांस्कृतिक-महत्त्वगतसन्दर्भः सामान्यतो न प्राप्यते, नापि पुराणसाहित्य-गतमहत्त्वपूर्ण-घटनाभिरियं सम्बद्धा प्रतीयते ।

## (२) गंगासहायिका अवधक्षेत्रीय तमसा (टौंस)

इयं अवध (कोशल) राज्यस्य महत्त्वपूर्णानदी महाराजदशरथरामसदृश-नृपाणां नानाविधक्रियाभिः स्मरणीयघटनाभिश्च सम्बद्धाऽस्ति । दशरथो महाराजोऽस्यास्तटयोः समीपे स्वर्णिमयज्ञस्तम्भान्[1] संस्थापयामास, मृगयाक्रीडां चकार[2], श्रवणकुमारवधमप्यत्रैव अज्ञानतया कृतवांश्च । भगवान् रामः वनवासार्थं यात्रा-समये सीतालक्ष्मणसार्धं तमसायास्तटमेव प्रथमं विश्रामस्थलं कृतवान् ।

अवधक्षेत्रे उपर्युक्तस्थलसम्बन्धि तमसा एकैव नदी टौंस रूपेण मड़हा (मनहानद)–विसुही (प्राचीना वेदश्रुतिः) इति लघुनद्योः समवेतजलप्रवाहं धार-यित्वा फैजाबादाजमगढ़जनपदान् अतिक्रम्याग्रे वलियासमीपे गंगायामवतरति । डी० सी०[2] सरकारमहोदयोऽपि इमां टौंसनदीमुपर्युक्तघटनासम्बन्धिनीं पुरातन-तमसां स्वीकारोति, किन्तु श्री वी० एच० वडेरः[3] भ्रमवशात् अस्याः सहायिकां विसुहीं (वेदश्रुति) नदीमेव तमसामवधारयति । एतद् समीचीनं मतम् ।

सामान्यतया तमसायाः सम्बन्धः पावनश्रवणक्षेत्रेण सहाऽपि स्वीक्रियते । मड़हाविसुहीसंगमे त्रिकोणाकारोत्तुंगसुरम्यस्थले सम्प्राप्यते शिवमन्दिरमश्वत्थवृक्ष-विलसितम्, यत्रानुमीयते श्रवणकुमारस्य वधोऽज्ञानतया दशरथेन कृत आसीत् । सम्भवतः श्रवणस्यान्धपित्रोराश्रमोऽपि तमसातटान्निकटस्थः स्यात् । श्रीराममूर्ति-तिवारी तमसां श्रवणक्षेत्रादेवाविर्भूतां स्वीकारोति स्वतन्त्रभारत[4] विशषाङ्के ।

अस्मिन् स्थले मार्गशीर्षपूर्णिमाया बृहन्मेलापके विशालजनसमूह एकत्री-भवति ।

अतएव अवधक्षेत्रीयसरयूगोमतीमध्ये प्रवाहिण्यायाः तमसायाः पौराणिक-सांस्कृतिकमहत्त्वं स्पष्टमेव सिद्ध्यतिः प्रत्यभिज्ञानमप्यस्या निर्विवादमेवाऽस्ति ।

---

1. कलकत्ता रिव्यू, खण्ड–48, 1874 ई०, पृ० 193 ।
2. रघु० 9।20 ऋतुषु तेन ·······कनकयूपसमुच्छ्रयशोभिनो वितमसा तमसा सरयूतटा ।
3. रघु० 9।72 अथ जातु ······श्रमफेनमुचां तपस्विगाढां तमसां प्राप नदीं तुरंगमेण ।
4. वाल्मीकि रामा० अयोध्या० 45।32 ददृशे तमसा तत्र वारयन्तीव राघवम् ।
46।1 ततस्तु तमसातीरं रम्यमाश्रित्य राघवः ।
46।17 अवसत् तत्र तां रात्रिं रामः प्रकृतिभिः सह ।

## (३) ब्रह्मावर्तक्षेत्रे विद्यमाना (उ० नोन) तमसा नदी

ब्रह्मावर्तस्य दक्षिणीभागे विठूरपार्श्वं गंगा प्रति प्रवाहिणीं लघु उत्तर नोन-नदीमपि लोन-लोनी-नामान्तरेण तमसां मनुते डॉ० सतीश[1] चन्द्रोऽवस्थीमहोदय: । रामायणस्य सीतापरित्यागसम्बन्धिवृतान्तो[2] वाल्मीकितपोवनस्य सन्निकटता, लव-कुशरणस्थलं 'रमेल' सीतापरिहारस्थलं 'परियारम्' सीता-कुटीरं, वाल्मीकेश्वर-महादेवमन्दिरं, रामाश्वमेधस्थलस्य नैमिषारण्यस्य नैकट्यञ्च नैकानि तथ्यानीमा-मपि तमसां नदीं प्रतिपादयन्ति । पुरातत्त्वविद: परियरसमीपे गगातलस्तरीयोत्-खननेन लवकुशयो: पुरातन वाणाग्रभागान् प्राप्तवन्त: । अत एव इमेऽपि सीता-परित्यागस्थलं विठूरसमीपमेव प्रमाणीकुर्वन्ति,[3] अस्मात्कारणात् उत्तरी नोननदी एव लघुरूपिणी तमसा प्रकृत्या प्रतिभाति, अन्यथा पतितपावनीं गंगां महानदीं विहाय गर्भिण्यै सीतायै लक्ष्मणस्तमसास्नानार्थं किमकथयिष्यत् ?

## (४) ऋक्षपादप्रसूता टोंस (तमसा) नदी

विन्ध्याचलस्य सुदीर्घपूर्वीयपादश्रृंखलायां ऋक्षमेकलश्रृंखला अनेकपौरा-णिकनदीनां प्रभवा: सन्ति । शोण-नन्दनामन्दाकिनी-दशार्णा-चित्रकूटादय: सरित ऋक्षपर्वतादेव आविर्भवन्ति । तथ्यमिदं प्रमाणीभवति मत्स्यमार्कण्डया[6]दिपुरा-णोल्लेखै: ।

---

1. स्टडीज इन दि ज्यॉग्राफी ऑफ एन्सियण्ट एण्ड मेडिवल इण्डिया, पृ० 47
2. वाल्मीकीय रामायणम् (गीता प्रेस संस्करणम्), "रामायणकालीन भौगोलिक दिग्दर्शनम्", शीर्षक लेख: ।
3. स्वतन्त्रभारतम् लखनऊ, (सा० विशेषाङ्क) 24 अप्रैल, 1966, ऽटव्य "तमसा की जन्मभूमि श्रवणक्षेत्र" शीर्षक लेख: ।
4. ए स्टडी ऑफ ज्याग्राफिकल डेटा इन पुराणाज, (लखनऊ विश्व वि०, शोध-ग्रन्थ:, 1965), द्रष्टव्य-नदियाँ, पृ० 36 ।
5. वा० रामा०, उत्तर० 64।23 आससाद विशालाक्षी गंगां पापनाशिनीम् । 64।29 तारयस्व च मां गगां दर्शयस्व च तापसान् । उत्तर–47।14, 15, 17 गगां निषादाहृतनोविशेषस्ततार सन्धामिव सत्यसन्ध: । रघुवंशे 14।52 । अशून्यतीरां मुनिसंनिवेशै स्तमोपहन्त्रीं तमसामवगाह्य ।
तत्सैकतोत्संगबलिक्रियाभि: सम्पत्स्यते ते मनस: प्रसाद: ।। 14।67
6. N. L. Dey. Geographical Dictionary of Ancint & Mediaeval India. B. S. Upadhyaya, India in kalidasa, Alld. 1966 P. 19, P. 101.
गोविन्दराज:–वाल्मीकिरामायण भौगोलिक विवरणम्, 2019 वि०, पृ० 1900 लेखक: (डा० कै० ना० द्विवेदी) कालिदास की कृतियों में भौगोलिक स्थलों का प्रत्यभिज्ञान–कानपुर, 1969, पृ० 156-159 ।

 

तमसेयं टोंस इत्यभिधेया मध्यप्रदेशस्य पूर्वीयविन्ध्यक्षेत्रीय कैमूर पर्वत-शृंखलोदभवा रीवा-सतना शंकरगढ़-चाकघाटादिस्थलेषु प्रस्रवन्ती प्रयागस्य पूर्व-दिशि सिरसा-समीपं गंगां संगच्छते। गंगातमसयो: संगमस्थलेऽस्मिन् क्षेत्रे एवापरं वाल्मीकितपोवनं त्रेतायुगे आसीत् यत्र रामाज्ञया लक्ष्मणो गर्भिणीं सीतां स्वभातृ-जायां परित्यक्तवान्।

विद्वद्वरेण्य डा० रामजी उपाध्याय:[1] इमां टोंसनदीमेव पुरातनीं तमसां प्रतिपादयति। तस्यावधारणास्ति यत् तत: (वाल्मीकितपोवनात्) सीता प्रति-वासिनो वाल्मीकेराध्यक्षे तमसामुपासितं नीता[2]।

प्रतीयते, अस्या टोंस– (तमसा)–नद्या प्राचीन प्रवाह: प्राक्तनकाले प्रया-गतोऽपि पश्चिम दिग्भागे एव आसीत्, य: चित्रकूटक्षेत्रात् दूर नासीत् यत्र वाल्मीकि-तपोवनं तमसातटेऽवस्थितमासीत्, यत: प्रयागात्परं वनयात्रायां महर्षिरादिकवि: वाल्मीकी रामसीतालक्ष्मणदर्शनं कृतवान् चित्रकूटसमीपे।

## तमसादीनां धार्मिक-सांस्कृतिक महत्त्वम्

प्राक्तननैकघटनाप्रसगेषु सम्बन्धितान विभिन्नतमसानदीनां सांस्कृतिकैति-हासिकधार्मिकादिदृष्ट्या विशेषमहत्त्व स्पष्टं भवति, इदमुपर्युक्तानेकसाहित्यक-सन्दर्भै: सिद्ध्यत्येव। सिन्धु-सरस्वती-गंगाप्रभृति पावननदीनामिवासां पवित्रतीर्थ-रूपे मान्यताऽसामान्यासीत। भगवतो रामस्य जीवनचरितसम्बन्धिनदीयं ईदृशी लोकप्रियाभवत् यत् तमसैकनाम्नोऽनेका नद्योऽभवन्। आसां दर्शनंस्नानं जलपानञ्च परमपुण्यप्रदं मन्यते श्रद्धालुभि: सत्पुरुषै:। अतएव आदिकविसदृशा मुनीश्वरा:[3] तमसातट एव तपोवनानि (स्वाश्रमान्)[4] स्थापितवन्त:, दशरथसदृशक्षितीशा: तमसातटयोरेव यज्ञान् सम्पादितवन्त:[5], श्रवणकुमारोऽपि चास्या:[6] तीर्थदर्शनाय,

---

1. मत्स्यपुराणम् 114/25, मार्कण्डेयपुराणम 57।22, 23 चित्रोत्पला सतमसा करमोदा···ऋक्षपाद प्रसूता वै तथान्या वेगवाहिनी।
2. सागरिका 25।3 द्रष्टव्य: 'प्रयागजनपदे वाल्मीकितपोवनम्' इति शोधलेख:, पृ० 1-5।
   (सागरिकाया अस्मिन्नेवाङ्के लेखकस्यापि शोधलेख: "वाल्मीकितपोवनस्थिति विमर्श:" द्रष्टव्य:, पृ० 37–40)
3. अभिगम्याश्रमं सर्वे वाल्मीकिकमभिवादयन्। वा० रामा०, अयोध्या० 56।16
4. वा० रामा० बाल० 2।3, 4, 5, 6
5. रघु० 9।20 ऋतुषु तेन···
6. रामा० अयोध्या 63।20 तस्मिन्नतिसुखे काले···सरयूमन्वगां नदीम् 24-53 (श्रवणाख्याने) श्लोकेषु।

अत्रैव आजगाम। वनयात्रायां रामेण तमसामहत्त्वमनुभूयास्यस्तटे प्रथमो[1] विश्रामो विहितः, सीतापरित्यागोऽपि गंगानिकटवर्तिन्यास्तमसायास्तटे एव लक्ष्मणेन कारितः।

## उपसंहार

उपर्युक्तविवेचनाधारेण कथयितुं शक्यते निष्कर्षे यत्—पौराणिकानेकतमसानदीषु यमुनासहायिकायाः पर्वतीयटोंस (तमसा) नद्या विशेषधार्मिकं महत्त्वं नासीत्। तमसानामसाम्येऽपि विभिन्नस्थलीया भिन्नाः तमसाः प्राक्तनमूलरूपे यत् किञ्चित् प्रवाहे परिवर्तिता कालक्रमेण सञ्जाता सन्ति, किन्तु आसां धार्मिक सांस्कृतिकैतिहासिकमहत्त्वं न्यूनं नैवाभवत्। अस्माकं राष्ट्रीयेतिहाससंस्कृतिसाहित्यादिरूपाणां साक्षीभूत गंगा-यमुना-तमसादिनैकानद्यो वन्दनीयाः सेवनीयाश्च सर्वथा। आसां नयनाभिरामनैसर्गिकीसुषमासंरक्षणार्थं प्रदूषणत्राणाय, सलिलस्य प्राकृतिकगुणसंवर्द्धनाय च सततं सर्वैः सच्चेष्टा करणीया[2]। □

---

1. ददृशे तमसा तत्र वारयन्तीव राघवम्।
   वा॰ रामा॰-अयोध्या॰ 45।32—
   रामा॰ 45।33 ततः सुमन्त्रोऽपि रथाद्विमुच्य···तमसाविदूरे।
   रामा॰ 46।1 ततस्तु तमसातीरं रम्यमाश्रित्य राघवः।
   46।17 अवसत् तत्र तां रात्रिं रामः प्रकृतिभिः सह।
2. द्रष्टव्यो लेखकस्य विस्तृत विवेचनात्मक लेखेऽस्मिन् विषये सागरिकायाः 25/4, 26।1 (रजत जयन्तीविशेषाङ्के) वि॰ सं॰ 2044, पृ॰ 71–78 संस्कृत विमर्शः 16।1-2, अंके राष्ट्रिय संस्कृत संस्थानम्, नवदिल्ली 1988 ई॰, पृ॰ 31–42

# किं प्रयागे विलुप्ता सरस्वती ?

सिन्धु सरस्वती गंगा प्रभृति भारतीय नद्यः पुरातन संस्कृतेः सभ्यतायाश्च संपोषिकाः सन्ति । भारतीय संस्कृते मूलाधारे सरस्वत्याः महन्महत्त्वं वैदिककाले आसीत् । सैव साम्प्रतं विलुप्ताऽस्ति । सरस्वतीविलोप विषये विविधा अवधारणा विचारणीयाःसन्ति । सा प्रयागे विलुप्ताऽन्यस्मिन् क्षेत्रे वा ? अस्याः प्रवाहपरिवर्तनस्य विलोपस्य वा कानि कारणानि समुपस्थितानि ? इति विचार्यतेऽस्मिन्शोधपत्रे ।

प्रकृष्टो यागो यागफलं यस्य यस्मात् वा तद् प्रयागं प्रसिद्ध तीर्थस्थलं प्राचीन साहित्ये प्रथितमेव । सामान्यतः सरितां संगमस्थलं संज्ञायते प्रयागाभिधानेन । साम्प्रतमपि बहूनि प्रयागस्थलानि प्रसिद्धानि पुरातनेऽस्माकमार्यावर्त्ते-देवप्रयाग-कर्णप्रयागरुद्रप्रयागादीनि, किन्त्वेतेषु प्रयागेषु गंगायमुना सरस्वतीनदीत्रयसंगमः 'त्रिवेणीति' प्रयागमिलाहाबादं वा विख्यातं विश्वस्मिन् ।

आधुनिके प्रयागे गंगायमुनयोरेव संगमः संदृश्यते, सरस्वती तु विलुप्तैव। प्राकृतिकप्रवाह सम्बन्धि शोधदृष्ट्या सरस्वत्याः स्वरूपावधारणं सर्वथा समीचीनमेव । ऋग्वेदे सरस्वती सम्बन्धिना अनेका ऋचः सम्प्राप्यन्ते आभिरस्याः तात्कालिक महत्त्वं सुस्पष्टमेव प्रतिभाति । वर्तमानकाले यन्महत्त्वं गंगायै प्राप्तमस्ति वैदिककाले तदेव महत्त्वं सरस्वत्यै[1] प्राप्तमासीत् । ऋग्वेदस्य अनेकैः सन्दर्भैर्ज्ञायते, यदियं सप्तधाराभिः दृषद्वती आपया, गुङ्गू, राका, सुनीता, क्षरा, सिनीवालीति सप्त-सहायकनदीभिः समं सवेग प्रवहन्ती समुद्रं संगच्छते स्म–

"सरस्वती सप्तथी सिन्धुमाता ।"

(ऋग्वेदे 7।36।6)

उतः न प्रिया प्रियासु सप्तस्वसा सुजुष्टा ।

(ऋग्वेदे 6।61।10)

परवर्तिवैदिक साहित्येऽपि परिवर्तितसरस्वत्याः स्वरूपसम्बन्धिता अनेके सन्दर्भाः सम्प्राप्यन्ते । ताण्ड्य ब्राह्मणे (25।10।1,16) अस्याः विनशनस्य जैमिनिब्राह्मणे (2 297) प्लक्षप्रास्रवणस्य (उन्मज्जनस्य वा) तथ्यं प्रकटितमस्ति सूत्रग्रन्थेष्वपि सरस्वत्या उल्लेखः प्राप्यते कात्यायन श्रौतसूत्र (12।3।20,24।6।22)

1. ऋक्० 2।41।16 अम्बितमे नदीतमे देवितमे सरस्वति ।

लाट्यायन श्रौतसूत्र (10।15।1,18।13,19।4) आश्वलायनश्रौतसूत्र (12।6।2,3) सांख्यायन श्रौतसूत्र (13 29)—प्रभृति सूत्रग्रन्थेषु रामायण महाभारतादिकाव्य-साहित्ये चाऽस्यास्तटयोः सम्पन्नयागानां महत्ता, जलस्य पावनता च वैदिकसन्दर्भ-पृष्ट्या प्रतिपादिता। यथा—रामायणेऽयोध्याकाण्डेऽवस्थितिरस्याः उ० प० यात्रा-मार्गे एवमभिव्यक्ताऽस्ति—

सरस्वतीं च गंगां च युग्मेन प्रतिपाद्य च।
उत्तरान् वीरमत्स्यानां भारुण्डं प्राविशद्वनम्॥

(अयोध्या० 71।5)

किष्किन्धाकाण्डेऽपि उत्तरापथस्य नदीनां गणनायां सरस्वती एवं वर्णिताऽस्ति वाल्मीकिना—"सरस्वतीं च सिन्धुं च शोण मणिनिभोदकम्।"

(किष्किन्धा 40।21

महाभारते सरस्वत्याः उद्गमक्षेत्रीय प्रवाहेऽसामन्यपरिवर्तनस्य एवमुल्लेखो विद्यते—

"ततो विनशनं गच्छेन्नियतो नियताशनः।
गच्छत्यन्तर्हिता यत्र मेरुपृष्ठे सरस्वती॥

(महा०, वन० 83/111)

प्रवाहे प्राकट्यमस्या एवं वर्णितवान् वेदव्यासः त्रिषु स्थलेषु महाभारते-

"चमसेऽथ शिवोद्भेदे च दृश्यते॥
स्नात्वा तु चमसोद्भेदे अग्निष्टोमफलं लभेत्॥"

(वन० 83/112)

प्रसिद्धगणितज्ञः भास्कराचार्योऽपि स्वग्रन्थे सिद्धान्तशिरोमणौ तथ्यमिमं समर्थयति।

सरस्वती शिवालिक-हिमालयस्य सिरमूरश्रेणीभ्य, (अम्बालाजनपद समी-पाद्) निर्गत्य दक्षिणे शुतुद्रियमुनयोर्मध्ये प्रवहन्ती अद्रबद्री समीपे समतलक्षेत्रे-ऽवतरति। भवानी बालप्परयोः समीपमस्याः प्रवाहः सैकते क्षेत्रे विलुप्तो भवति, किन्तु वरखेडानिकट इयं पुनः प्रादुर्भवति। विहोआ समीपे उरनई स्थाने मार्कण्डा नद्या सहाऽस्याः संगमो भवति। पुनश्च पटियालक्षेत्रे रसूलसमीपे संयुक्तधारया इयं छछंर छग्घर वा संगच्छते। यतः नदीयं 'हकरा' 'सोतार' वाभिधानं दधाति। राजस्थाने बीकानेरक्षेत्रे हनुमानगढे पुनरियं बालुकायां विलुप्ता भवति।

सरस्वत्याः शुष्कं प्राचीनप्रवाहक्षेत्रं बीकानेरसमीपे शताधिकमीटरान्तराले पञ्चकिलोमीटर विस्तृतं वर्तते, यं पूर्वोत्तराभिमुखे यमुना पर्यन्तं मनुनयाऽस्याः

प्रवाहापकर्षणस्य परिकल्पना कर्त्तुं शक्यते। सम्भाव्यते यमुनाप्रवाहः सरस्वत्याः प्रवाहः (अस्याः काचिद् शाखा वा) नैकट्यान्मिलितौ स्याताम्। डॉ० एम० एन० कृष्णन् प्रभृतिभौगोलिकानामियमेवावधारणा विद्यते सरस्वतीविलोप विषये। सी० एफ० ओल्डहम, डी० एन० वाडिया, एफ० अहमद, गुरुदेवसिंह, वी० एस० वाकणकरप्रभृति भूगर्भशास्त्रिपुरातत्त्वविद्भिः सरस्वत्याः प्राचीनप्रवाहे परिवर्तन-विषयक विचारः प्रकटितोऽस्ति। यस्य सम्यग्रूपेणाकलनं श्री गुणाकर मुलेमहोदयेन कृतमेव।

अस्मिन् सन्दर्भे पुरातन भूगोलज्ञानां विचारोऽस्ति यत् शुतुद्रि (सतलज) नदी सरस्वत्याः (हकरा, सोतार नद्याः वा) अधिकांशं जलमपहृतवती, यतः भौगर्भिकैतिहासिक तथ्यानि शुतुद्रि पञ्चनदक्षत्रस्य नदीं ईसातः द्वादश शताब्दाधिकं न प्रमाणीकुर्वन्ति। छर्छरसंयुक्तेयं लोकभाषायामद्यापि 'सुरसति' नाम्ना सत्यमेवा-भिज्ञायते स्थानिजनैः।

सरस्वत्याः प्रयागेऽन्यप्रवाहक्षेत्रे वा विलोप-विषये भौगर्भिक कारकानां प्रभावोऽपि ध्यातव्योऽस्ति। यतः अस्या उद्गम क्षेत्रे हिमालये, यतः मूलत इयं जलं गृह्णाति स्म, प्रभूतं परिवर्तनं बभूव। हिमालयः हिम युगात् (Pleistocene प्लीस्टोसीन युगात्) सततं उत्तिष्ठन्नस्ति। अतोऽस्य शिवालिकश्रेणीषु भौगर्भिक परिवर्तनैः आसामुत्तुंगत्वात् सरस्वत्याः मूलं जलस्रोतो विच्छिन्नमभविष्यत्[1]। सरस्वती स्व प्राचीन प्रवाहेण सप्तसहस्रवर्गमील क्षेत्रमभिसिञ्चितवती, यद्धुना मरुस्थले परिणतमस्ति। कदाचित् इयं नदी उत्तरवैदिक काले स्वकीयप्राकृतप्रवाहे परिवर्तनं प्राप्य ईदृशी विलुप्ताऽभवत्, यत् परवर्तिरामायण महाभारतादिग्रन्थे-स्वस्याः कुत्राऽपि उल्लेखः प्रयागे संगमस्थले न प्राप्यते। यथा रामायणे भरद्वाजा-श्रमस्थिति सन्दर्भे–

"यत्र भागीरथीं गंगां यमुनाऽभिप्रवर्तते।
जग्मुस्तं देशमुद्दिश्य विगाह्य सुमहद्वनम्॥
प्रयागमभितः पश्य सौमित्रे धूममुत्तमम्।
गंगायमुनयोः सन्धिमासाद्य मनुजर्षभौ॥

(अयोध्या 54,2,4)

---

1. द्रष्टव्यम्–Geology of India and Burma, Madras, 1955, P. 26.

2. "ऋग्वेद की नदीतमा सरस्वती" शीर्षक लेखः, 'दैनिक आज' 26 जुलाई, 1986।
(लेखकः गुणाकर मुले)

रामस्य लङ्कातोऽयोध्याप्रत्यागमनमार्गे संगमदृश्यवर्णने सरस्वत्या अविद्यमानता युद्धकाण्डऽपि प्राप्यते यथा–

"गंगायमुनयोर्भीमं समतीत्य समागमम् ।"

(रामा. युद्ध. 125।21)

एषा सा यमुना रम्या दृश्यते चित्र कानना ।
भरद्वाजाश्रमः श्रोमान् दृश्यते चैष मैथिलि ।।
इयं च दृश्यते गंङ्गा पुण्या त्रिपथगा नदी ।"

(युद्धकाण्डे 123।52-53)

महाभारते प्रसिद्ध तीर्थगणनायां प्रयागे संगमोल्लेखे सरस्वत्या अविद्यमानता एवं प्राप्यते वनपर्वणि–

यमुनागंगया सार्धं संगता लोक पावनी ।।
गंगा यमुनयोर्मध्यं पृथिव्या जघनं स्मतम् ।।
प्रयागं जघनस्थानमुपस्थमृषयो विदुः ।।
प्रयागं सप्रतिष्ठानं कम्वलाश्वतरौ तथा ।।"

(महा. वन. 85।75, 76)

कविकुलगुरुः कालिदासोऽपि रामायणमनुसृत्य, प्रयागे संगमवर्णने सरस्वतीं विलुप्तामेव मनुते। यथा रघुवंशे त्रयोदशसर्गे–"पश्यानवद्याङ्गिविभाति गंगा भिन्नप्रवाहा यमुनातरगैः ।

समुद्रपत्न्योर्द्वयसंन्निपाते पूतात्मनामत्र किलाभिषेकात् ।।
तत्त्वाववोधेन विनाऽपि भूयस्तनुत्यजां नास्ति शरीरबन्धः ।।

(रघु. त्रयोदश सर्गः:)

प्रतीयते, प्रयागे सरस्वत्याः प्रवाहे विलुप्ते सत्यपि 'त्रिवेणी' रूपेणऽस्या लोकेऽस्मिन् विद्यमानता कालिदासप्रभृतिपरवर्ति कविभिः कविसमयमाश्रित्य 'अन्तः सलिला' नदीव प्रतिपादिता। यथा रघुवंशे तृतीय सर्गे–

"नदीमिवान्तः सलिलां सरस्वतीम्"'इति ।"

(रघु० 319)

अतः कथयितुं शक्यते यत् बाह्य भौतिक रूपे प्रयागे सरस्वत्याः विलोपेऽपि 'अन्तः सलिला' नदीयमधिष्ठातृज्ञानदेवी प्रतीकेन ज्ञानधारया प्रयागं सततमाप्लावितं करोति, यतोऽत्र नैके सरस्वती सुनवः स्वकीय साहित्यरसस्रोतसा सदैव

 

'सहृदय' वल्लरीमभिसिञ्चन्ति ।[1] इति शम्



1. आकाशवाण्या: लक्ष्मणपुरकेन्द्रेण 7।5।86 दिनाङ्कृतकार्यक्रमे प्रसारिताया: लेखकस्य वार्तयाएकस्या आधारेण प्रस्तुतोऽयं शोधलेख: "विस्तृताध्ययनार्थं द्रष्टव्य: लेखकस्य शोधग्रन्थ:" सप्तसैन्धव प्रदेश: "ऋग्वैदिक भूगोल", साहित्यनिकेतनम्, कर्णपुरे, 1985 वर्षे प्रकाशित:)
दृष्टव्यो ,लेखकस्य अस्मिन विषये प्रकाशित: शोधलेख: संस्कृत विमर्श: 15/1 अंके, नवदिल्ली, ई० 1987, पृ० 87-92। शोधपत्रमस्मिन् विषये प्रस्तुतमासीत् अखिलभारतीय प्राच्चविद्यासम्मेलने शोधसंगोष्ठ्यां कलिकाताधिवेशने ।

# प्राचीननगरी-कालपी

झांसी-कर्णपुरीये मध्यरेलमार्गे बुन्देलखण्डस्योत्तरभागे पावनकलिन्दकन्याया यमुनाया दक्षिणतटेऽवस्थिता महत्त्वशालिनी नगरी, 'कालपी' पुराणेतिहास-साहित्यग्रन्थेषु समुल्लसति। सांस्कृतिकानां नानाङ्गानां शोभनां व्याख्यां प्रस्तौति च।

## वेदव्यासस्य जन्मभूमिः

पौराणिकदृष्ट्याऽस्या नगर्या महत्त्वं विद्यते। यमुनातटेऽवस्थितेयं नगरी ज्ञाननिधेस्तपोमूर्त्तेर्महर्षिवेदव्यासस्य जन्मभूमिरासीत् इति विदितचरम्। भारतीय-संस्कृतेः समुद्धारकस्य वेदव्यासस्य जन्मकथावर्णनप्रसङ्गे कालपी-माहात्म्यं भगवान् शंकरो नारदं वर्णितवान् ब्रह्माण्डपुराणे। अस्मिन् वर्णने नगर्या विस्तारेण समं नाम्नः व्युत्पत्तिरेवं निर्दशिता–

कालाद्धि पाति कालेशो यत्र स्वेन महौजसा।
तस्मादियं प्रोच्यते सद्भिः कालपीति शुभस्थली॥
कः प्रजापतिरित्युक्तोऽकारार्थो विष्णुरीरितः।
मकारेण महादेवः कथितो ब्रह्मवित्तमैः॥
सर्वे पान्ति यस्यां च कालपी सा प्रकीर्तिता।
चतुर्योजनदीर्घायां कालप्यां ये वसन्ति वै।
ब्रह्मविष्णुशिवात्मानो विज्ञेया नात्र संशयः॥

(ब्रह्माण्डपुराणम्)

अन्यपुराणेतिहासग्रन्थेष्वपि[1] व्यासस्य जन्मस्थली एषा नगरी वर्णिता। वाराहपुराणभविष्यपुराणादिग्रन्थेषु कालपी स्वकीयसूर्यमन्दिरैर्लोकविश्रुताऽऽसीदिति तथ्यं समुद्घाटितं म० म० वासुदेवविष्णुमिराशीमहाभागैः।[2]

---

1. महाभारते-आदिपर्वणि, 105. 6-14; देवीभागवतपुराणे-द्वितीये स्कन्धे; शिव-पुराणे-उमासंहितायां (44 तमेऽध्याये)।
2. V. V. Mirashi, Series in Indology, Val. 1, Second Ed. 1968, PP. 37

वस्तुतोऽद्यपि अत्र व्यासटीलानाम्नि स्थले व्यासमन्दिरं वर्तते। कतिपयसमाचार-पत्रेष्वपि[1] एतत्सम्बन्धिलेखः सचित्रं प्रकाशितोऽभवत्। प्रसिद्धपुराणवेत्तॄणां उत्तर-प्रदेशस्य तत्कालीनमुख्यमन्त्रिभिः डॉ० सम्पूर्णानन्दमहाभागैः सम्प्रज्ञापिता महा-महिमराज्यपालाः श्रीमन्तः कन्हैयालालमाणिकलालमुंशीमहोदया इमां नगरीमेव वेदव्यासस्य जन्मभूमिं मत्वा अत्रैव 1953 ईसवीयवर्षे, जनवरीमासे, 30 दिनाङ्के व्यासस्मारकस्य शिलान्यासं कृतवन्तः। प्रदेशप्रशासनेनापि व्यासस्मारकनिर्माणाय पञ्चाशतसहस्ररूप्यकाणां धनराशिः स्वीकृता। साम्प्रतं स्मारकेण प्रायः पूर्वस्वरूपं प्राप्तमेव। महामहिमराष्ट्रपतिः वी० वी० गिरिमहोदया अपि कालपीमागत्य व्यासजन्मस्थलस्य पावनं रजः शिरोधार्य भारतीयसंस्कृतेः संरक्षकस्य महर्षिवेद-व्यासस्य स्मारकनिर्माणाय प्रादेशिकसर्वकारस्येदं लोकलोचनोल्लासकं कार्यं प्रशंसित-वन्तः।

नानाजनश्रुतिभिरिदमपि मन्यते मनीषिभिर्यत् वेदव्यासस्य पितुः पराशरस्य जन्मस्थली अप्यस्या नगर्या निकटस्थिते 'पराशन'-नाम्नि ग्रामे आसीत्। अयं ग्रामः कालपीतो दक्षिण-पूर्वतो वेत्रवत्यास्तटेऽवस्थितोऽस्ति। व्यासमातुः धीवरकन्याया मत्स्यगन्धाया जन्मभूमिः कालपी एव स्वाभाविकरूपेण सिध्यति, यतोऽद्यापि धीवराणामत्र द्वादशग्रामवसतयो विद्यन्ते पार्श्ववर्तिक्षेत्रे।

## लौकिकसंस्कृतसाहित्यग्रन्थेषु कालप्या उल्लेखः

अस्याः नगर्याः संस्कृतसाहित्यग्रन्थेष्वपि 'कालप्रिय'–नाम्ना उल्लेखाः प्राप्यन्ते। ईस्वीयसप्तमशताब्द्युत्तरार्द्धेऽष्टमशताब्दिपूर्वार्द्धे वाविर्भूतः भवभूतिर्नाम महान् नाटककारः स्वकीयेषु नाटकेषु प्रायः प्रस्तावनायां कालप्रियनाम्नाऽस्याः उल्लेखं कृतवान्। यद्यपि तस्य कृतीनां प्राचीनटीकाकाराः[2] 'कालप्रियनाथं' महा-कालेश्वरस्याभिप्रायं गृहीत्वा इमामुज्जयिन्या अभिन्नां मन्यन्ते, तथापि सन्दर्भेऽस्मिन् पुण्यपत्तनस्य भाण्डाकरप्राच्यविद्याशोधसंस्थानमण्डलाय मालतीमाधवस्य, श्रीमता रामकृष्णगोपालेन सम्पादितं पुस्तकं प्रामाणिकं ग्रहीतुं शक्यते, यस्य पादटिप्पण्यां

---

1. द्रष्टव्यम्–विशालभारतम् (पं० वनारसीदासचतुर्वेदिना सम्पादितम्) 1928–29 (स्व० कृष्णवलदेवप्रसादवर्मणः लेखः)।
'दैनिकजागरणस्य' रजतजयन्तीविशेषाङ्कः, 1972· कर्णपुरम्, पृ० 181।
2. मालतीमाधवस्य टीकाकार स्त्रपुरारिर्वदति–"कालप्रियनाथस्य महाकाला-स्पदस्य शंभोः"। वीरराघवः–"कालप्रियनाथस्य पाठं गृहीत्वा लिखति–"कालप्रियनाथस्य कालप्रियानामिकाम्बिका पतेः"–डॉ० वेलवलकर, डॉ० काणे, प्रो० करकमरकरप्रभृतिभवभूतिनाटकानां सम्पादकाः इममर्थमेव स्वीकृतवन्तः।

सूत्रधारेण कालप्रियनाथस्य परिचयः एवं प्रकारेण प्रदत्तः—

"·········भवभूतिनाम्ना ब्राह्मणेन प्रकरणं स्वकृतं मालतीमाधवं नाम तदेव भगवतः कालप्रियनाथस्य सकलजगदेकचक्षुषो, विश्वात्मनः सूर्यस्य पुरतो यथा प्रयोगेण प्रख्यापयितुमहमुद्यतः।"[1]

तथ्यमिममनुमोदयन् उत्तररामचरितस्य टीकाकारः श्रीमान् शारदा रञ्जन-रायमहोदयः ग्रन्थस्यास्य भूमिकायां लिखितवान्—

"Mahakala is a well known name. Why should the poet alter it persistantly, alter it into unheard of kalapriyanatha ? Besides, Bhavabhuti was the court-poet of yasovarman at kanuauj why then should he go to Ujjayini to have his drama staged there ? It is more natural to take kalapriyanatha as some deity enshrined somewhere in yasovarman's own territory. Again kala-priyanath would be happyname for newly founded city. It means "the favourity of time (Kala)" i. e. "Imperishable", for it is "time" that desroys cities. It struck me a few days ago that the modern city of kalpi might be the kalapriya of Bhavabhuti.[2]

म० म० वासुदेवविष्णुमिराशीमहोदया अपि तथ्यमिदं स्वीकुर्वन्तः कालप्रियं कालप्या अभिन्नं मन्यन्ते[3]।

ईस्वीयदशमशताब्द्याः पूर्वार्धे महाकवी राजशेखरः काव्यमीमांसायामिमां नगरीं कालप्रियनाम्ना समुल्लिखन् गाधिपुरस्य (कान्यकुब्जनगरस्य) दक्षिण इमां निर्दिष्टवान्। यथा—

'तथाहि यो गाधिपुरस्य दक्षिणः स कालप्रियस्योत्तरः[4]।'

अतएव साहित्यग्रन्थेस्वपि उल्लेखेनास्याः उत्कृष्टं सांस्कृतिकमहत्त्वं परि-चीयते।

## नगर्याः पुरातात्त्विकैतिहासिकमहत्त्वम्

पुरातत्त्वशास्त्रदृष्ट्यापि अस्या नगर्या विशिष्टं महत्त्वं वर्तते। अत्र व्यास-

---

1. मालतीमाधवम्, तृतीयसंस्करणम्, पुण्यपत्तनम्, 1970, पृ० 50–52 (पाद-टिप्पणी)।
2. उत्तररामचरितम् (शारदारंजनरायसम्पादितम्), चतुर्थसंस्करणम्, कलकत्ता, Introduction PP. XVII.
3. सागरिका—विश्वसंस्कृतसम्मेलनाङ्कः, पृ० 440 (भवभूतिनाटकेषुकालप्रियनाथः ······इतिलेखे)।
4. काव्यमीमांसा (पं० के० ना० शर्मणा सम्पादिता), पटना, 1954, पृ० 96

टीलेति नाम्नो महर्षिवेदव्यासस्य जन्मस्थस्य उत्खनने भगवतः शेषशायिनो विष्णोर्दुर्गायाश्च मूर्तिभ्यां सहान्याः दश-द्वादश वा मूर्तयः समुपलब्धाः। भारतीयपुरातत्त्ववेत्ता रायबहादुर गौरीशंकर हीराचन्द ओझामहोदयो विख्यातेतिहासकारो-यदुनाथसरकारश्चात्र सर्वेक्षणाय समाजग्मतुः। अनेकैरन्यैरुत्कीर्णलेखैरपि अस्या नगर्याः प्राचीनता समाज्ञायते। येषु 918 तमे ईस्वीयवर्षे राष्ट्रकूटवंशिना तृतीयेन्द्र-नृपतिना कान्यकुब्जनगरस्याक्रमणवर्णनप्रसंगे मार्गेऽवस्थिताया कालप्रियनगर्याः देवालयस्य प्राङ्गणे चतुरंगसैन्यसंन्निवेशस्योल्लेखः एवं प्रकारेणकृतः—

यन्माद्यद्द्विपदन्तघातविषमं कालप्रियप्राङ्गणम्
तीर्णयत्तुरगैरगाधयमुना सिन्धुप्रतिस्पर्धिनी।
येनेदं च महोदयारिनगरं निर्मूलमुन्मूलितं
नाम्नाद्यापि जनैः कुशस्थलमिति ख्यातिं परां नीयते॥[1]

प्राचीनभारतीयेतिहासे मौर्यशुंगकुषाणगुप्तवर्धनगुर्जरप्रतिहारचन्देलराजवंशानां कालेऽपि काल्प्या अधिकं महत्त्वमासीत्। चन्देलनृपैः निर्मितेष्वष्टदुर्गेष्वेकमत्रैव निर्मितमासीत्। मुगलसम्राट अकबरस्य शासनकालेऽपीयं नगरी उन्नतिं भजते स्म। तस्य नवरत्नेषु प्रियतमः राजा बीरबलोऽस्यामेव निवसति स्म। यतस्तस्य रंगप्रासादस्य कतिपयाः ध्वंसावशेषा अद्यापि वर्तन्ते। इब्राहिमलोदीनृपस्य समाधिरप्यत्र विनिर्मिता। मुस्लिमशासनकालेऽस्यां नगर्यां सप्तसहस्रसंख्यकाः सूफीमतानुयायिनः सन्तस्तपश्चक्रुरिति लोकवादः।

अस्माकं राष्ट्रस्य स्वाधीनतासंग्रामस्य यशस्विनः योद्धारोऽपि संयोगवशात् काल्प्याः पावनरजसोऽग्रेसरा अभवन्। खानवायुद्धेऽप्रत्याशितं पराजयं गतः राणासंग्रामसिंहः बाबरं विजेतुं पुनः प्रयासं कुर्वन् कालपीतोऽन्वधावत्,[2] किन्तु सहयोगिनां विश्वासघातेन विषपानं कृत्वा 'एरिच'—नाम्निस्थाने स्वप्राणानत्यजत्। झाँसीराजनगर्याः वीराङ्गना महारानीलक्ष्मीबाईदेवी अश्वारूढा सती आङ्गलसैनिकान् संहरन्ती कालपीमागतवती,[3] अत्र दुर्गे च एकरात्रिं यापितवती।

## उपसंहारः

यदस्या नगर्याः प्राचीनता पौराणिकधार्मिकैतिहासिकपुरातात्त्विकसांस्कृतिकदृष्टिभ्योऽसंदिग्धेति उपरितनविवेचनेन प्रमाणितम्। महत्त्वमस्या न केवलं पौरा-

1. Epigraphica Indica Vo. VII P. 38.
2. द्रष्टव्यम्—'राणासाँगा' नामकं हिन्दी पुस्तकम् (सूचनामन्त्रालय-भारत-सर्वकारेण प्रकाशितम्)।
3. द्रष्टव्यम्—'सन् सत्तावन की क्रान्ति' नामकं हिन्दी-पुस्तकम् (सचित्रम्)।

णिकाधारेण निर्धारितमपितु नानादृष्टिभिरियं नगरी महत्त्वशालिनी वर्तते। राजनीतिव्यापारिकदृष्टिभ्यामियम् उत्तरमध्यवर्तिभारतस्य प्रधानं आकर्षणकेन्द्रमासीत्। अद्यापीयं बुन्देलखण्डे धान्यस्य विशालतमं व्यापारिककेन्द्रं वर्तते हस्तनिर्मितकागदस्योद्योगाय इयं सर्वत्र विश्रुता वर्तते। प्राचीनकाले यमुनाया नौकामार्गेण दूरवर्तिपूर्वीयनगरेभ्योऽस्याः वाणिज्यं प्राचलत्। कालप्याः सांस्कृतिक महत्त्वं गौरवमयातीतं प्रेरणाप्रदम्। भारतीयसर्वकारेणाऽपि अस्या प्राचीनध्वंसावशेषाः रक्षणीया, येन भविष्यति स्वानुसन्धानसामग्रीरूपेणोपयोगमियात्।[1] □

1. लेखकस्यास्मिन् विषये विस्तृतशोध लेखो द्रष्टव्यः सागरिकायाः 11/4 अंके, सागरम्, पृ० 405–409।

# प्राक्तनशिल्पकलायां गणपतेरङ्कनम्

संस्कृतेरनेकेषूपादानेषु साहित्यशिल्पवास्तुचित्रादिललितकलाः परस्परमाश्रित्य संसारस्य सर्वान् विषयानभिव्यञ्जयन्ति । पुरातनभारतीय-साहित्य[1] शिल्पचित्रादिकृतिषु श्रेष्ठसांस्कृतिकस्वरूपाणामङ्कनं समुपलभ्यते, यासु गणपतिरुल्लेखनीयः पुरातात्त्विकोत्कृष्ट-मूर्तिशिल्पकला दृष्ट्या ।

यद्यपि कतिपयप्राच्यविद्याविद्भिर्गणपतिरार्येतरदेवोऽवधारितस्तथापि विष्णुरुद्रेन्द्र-सूर्यादिदेवगण इव गणपतिरपि पूजित आसीत् प्राचीनकालादेव शैवशाक्तवैष्णवादिसर्वोपासकैः समान-श्रद्धाभक्तिपूर्वकम् । पाश्चात्यविद्वांसो गणपति ग्रामदेवतारूपे मानवीयविकासस्य द्वितीयावस्थायां पशुपालनकर्मणि पूजार्हमामनन्ति । तेषां मतानुसारं गणपतेर्देवत्वविकासः कालान्तर एवाऽभवत् । गणपतेर्गौरव-गानं पुराणादि[2]ग्रन्थेषु प्राप्यते, यत्र तस्यानेकनामरूपावताराणां वर्णनं वर्तते ।

प्राचीनशिल्पकलाकृतिषु गणपतेरनेकरूपेषु मनोहारिण्यो मूर्त्तयो वर्तन्ते । सुप्रसिद्धशिल्पकलामर्मज्ञ आनन्दकुमारः स्वामी शिल्पाङ्कन-दृष्ट्येमा गणपतिप्रतिमाः प्रकारान्तरेण यक्षरूपे मन्यते । इतिहाससंस्कृति-पुरातत्त्ववेत्ता डॉ० वासुदेवशरणोऽग्रवालोऽपि[3] प्रारम्भिकगणपतिप्रतिमा यक्षरूपे निर्मिता आसन्निति तथ्यं प्रतिपादयति ।

गणपतिः सामान्यतो मूषिकारूढ एकगजमुखः पञ्चगजमुखो वा विशालतुण्ड, एकदन्तो, यज्ञोपवीतधारी, लम्बकर्णो, द्विबाहुतः षोडशबाहून् धारयन् प्राक्तनशिल्पकलाकृतिषु निर्मितः । गणपतेः प्राचीनतमा प्रतिमाऽप्रतिमैव यान्ध्रप्रदेशेऽम-

1. वैदिक-साहित्ये (ऋक्० शुक्लयजुर्वेदः, रुद्राष्टाध्यायी 1.1 गणानां त्वा गणपति० हवामहे ।···)
   रामायणे अयोध्या० 25।8, महाभारते, आदिपर्वणि 1 83
   "सर्वज्ञो गणेशो यत् क्षणमास्ते विचारयन् ।
   तावच्चकार व्यासोऽपि श्लोकान्नयान् बहूनपि ।" आदि० 1.83
2. द्रष्टव्यं-शिवपुराणं स्कन्दपुराणं गणेशपुराणञ्च (गणपतिरूप-चरितावतारवर्णनम्) ।
3. कला और संस्कृति, प्रथम सं०, पृ० 134 । Mathura Art Musuem No. 2577 "Brahmanical Images in Mathura" J.I.S.O, 1937, P. 127

रावतीनगर्यां निर्मिता मन्यते पुरातत्त्वविद्भिर्यस्यां शुण्डदन्तरहितस्स मानवाकार: । ईदृशी गणपतिप्रतिमा श्रीलङ्कायां मिहिनतलेस्तूपादपि सम्प्राप्ता । अस्यां गणपति: शुण्डदण्डरहितश्चित्रित: । भारतीयश्रीलङ्काप्रतिमयोरनयो: पर्याप्तं साम्यं संलक्ष्यते शिल्पकलादृष्ट्या ।

सामान्यतया गणपति: प्रतिमासु किरीटेन करण्डकेन वा सुशोभितस्त्रिनेत्रधारी चर्द्धिसिद्धि-सहितश्च संलक्षित: । गणपतेरेका कुषाणकालिका प्रतिमा मथुरात: सम्प्राप्ता, यस्यां यज्ञोपवीतधारी पञ्चगजमुखो गणपतिश्च परिपूर्णमानवाकारेण विकसितां प्राक्तनशिल्पकलां प्रदर्शयति । (द्रष्टव्या मथुरासंग्रहालयो मूर्तिकलावीथी संख्या 2577)

भूमरानाम्नि स्थले सम्प्राप्ता गणपतिप्रतिमा गुप्तकालिकी प्रतीयते यस्यां गणपतिरत्यन्ताऽलंकृते सुन्दर आसने समासीनो वर्तते । अस्यां प्रतिमायां तस्य वामहस्ते मोदकपात्रं शोभते ।

मध्यप्रदेशस्योदयगिरिगुहायां गणपतिप्रतिमाऽप्रतिमैव विराजते यस्यामन्यविशेषताभि: सह स नग्न: प्रदर्शित: । (द्रष्टव्योदय-गिरि-गुहासंख्या 6)

मृन्मयी गुप्तकालीनैका गणपतिप्रतिमोत्तरप्रदेशस्य कानपुरग्रामीणजनपदस्य भीतरगांवनाम्नि ग्रामेऽवस्थिता पुरातनेष्टकामन्दिरे, यस्मिन्नु ड्डीयमानो गणपतिर्गणरूपेऽङ्कित: । अस्य पार्श्वे पुरुषोऽप्युड्डीयमान: परिलक्ष्यते । प्राक्तनेतिहाससंस्कृतिपुरातत्त्वशिल्पकलाविद्भिरनुमीयते प्रतप्रतिमेयं कुमारकार्तिकेयस्य ।

झांसीजनपदस्य देवगढमन्दिरेपि प्राप्तासु गुप्तकालिकोत्कृष्टप्रतिमास्वनन्त (शेष)—शायिनो विष्णोर्निकटस्थितं देवसमूहे गणपतेरमूर्तेरप्यङ्कनं विशिष्टकलात्मकं वर्तते ।

गुप्तोत्तरकालिकगणपतिशिल्पाङ्कन परम्पराऽपि गौरवपूर्णैवाऽवाप्यते, यस्यामधिसंख्यका: कलात्मकगणपतिप्रतिमा निर्मीयन्ते स्म शिल्पिभि: । ईदृश्य: प्रतिमा भारतस्य वर्षस्य क्षेत्रे क्षेत्रे प्राप्यन्ते बाहुल्येन । पुरातनपाञ्चालजनपदस्य[1] प्रसिद्धे राजनगरे कान्यकुब्जे (कन्नौज-नगरे) खीस्तस्याष्टम्यां शताब्द्यां निर्मिता नृत्यद्गणपते: प्रतिमा प्राप्ता या स्थानीये पुरातत्त्व-संग्रहालये सुरक्षिता विद्यते साम्प्रतम् ।

न केवलमुत्तरभारतेऽपि तु दक्षिणभारतस्यानेकस्थलेषु सर्वोत्तममूर्तिशल्पोदाहरणभूता गणपतिप्रतिमा: प्राप्यन्ते । तत्र बेंगोनामके स्थाने खीस्तस्य तृतीय—

---

1. 'पंचाल' शोधपत्रिकाया: प्रथमोङ्क: 1985 (कन्नौज-महोत्सवाङ्क:) पृ० 69 South Panchal Dr. R. K. Paul, Kanpur 1985 द्रष्टव्य चित्रम् 11A

चतुर्थ[1]शताब्द्यां विनिर्मिता द्विभुजोत्कृष्टकलात्मक-मूर्तिरूपलब्धाऽभवत् । प्रतिमायामस्यां गणपतिः शिवपरिवारेण सह सन्दर्शितः शिल्पकारेण भावपूर्णाकर्षकमुद्रायाम् ।

'दक्षिणभारते सामान्यतः सिंहारूढो गणपतिः संदृश्यते, शिल्कलाकृतिषु, किन्तु साम्प्रतं महाराष्ट्रे "मयूरेश्वर" इति नाम्नैको गणपतिविग्रहो विख्यातो यत्र शिल्पिना तस्य मयूरवाहनमङ्कितम् । मध्यप्रदेशे इन्दौरोज्जैननगरयोर्ड् णशालि-गणपतेर्विशालाः प्रतिमा विख्याताः । दक्षिणभारते मदुराईनगरे शक्तिस्वरूप सिंहासीनो गणपतिदर्शनीयः स प्रतिमायां पञ्चमुखो दशभुजश्च परिलक्ष्यते ।

टीकमगढ़े तु गणपतिर्द्वादशबाहुरङ्कितः । अनेकेषु स्थलेषु नृत्यन् गणेशोऽङ्कितः शिल्पिभिः सुन्दररूपे प्रसन्नमुद्रायाम् । भेड़ाघाटे स्थले गणपतेर्नृत्य-मुद्रामयी प्रतिमाऽत्यन्ताकर्षिका प्रतीयते ।

कर्णाटकप्रदेशस्य मैसूरनगस्य होलयेश्वरमन्दिरे, तञ्जौरस्य बृहदीश्वर-मन्दिरे चारि नृत्यतो गणपतेः प्रतिमाः शिल्पकलादृष्ट्याऽप्रतिमाः ।

न केवलमार्यावर्ते भारते वर्षेऽपि तु विश्वस्य बर्माजापानचीनकम्बोडिया-मारीशसथाइलैण्डहिन्देशियाटर्कीमैक्सिकोप्रभृत्यनेकेषु देशेष्वपि गणपतिप्रतिमा मन्दिरेषु संस्थापिताः सम्पूजिताश्च । न केवलं हिन्दुधर्मेऽपि तु बौद्धधर्मेऽपि गणपते-र्माहात्म्यं स्वीकृतम् । अत एव बौद्धविहारेष्वपि गणपतिप्रतिमाः प्राप्यन्ते । परिणामतो गणपतिपूजा भारतीयसीमा अतिक्रम्य विदेशेष्वपि प्रचलिताऽभवत् प्राचीन-कालादेवोपर्युक्तदेशानां मन्दिरेषु ।

गणपतेरेकविंशतेरवताराणामेकपञ्चाशतो रूपाणां सुन्दरं वर्णनं प्राप्यते पुराणग्रन्थेपु[2] । तस्य सहस्रं नामानि 'गणपतिसहस्रनामपुस्तक' उल्लिखितानि । एतेषु द्वादशनामानि परमप्रचलितानि माङ्लिकसंस्कारेषु भारतीयानां विद्यारम्भे विवाहे[3] च सर्वविघ्नोपशान्तये ।

---

1. द्रष्टव्यं "दैनिक-जागरणम्" (कलासंस्कृति-परिशिष्टाङ्कः, दिनाङ्क 16-9-88) तटस्थगोस्वामिनो लेखः 'गणपति भारतीय शिल्प में पृ० सं० 5
2. द्रष्टव्यं गणेशपुराणम् (एकं हस्तलिखितं गणेशपुराणाख्यं पुस्सकं लेखकेनैक-रसानन्दसंस्कृतमहाविद्यालयस्य पूर्वपुराणेतिहासविभागाध्यक्षस्य पं० लाल-बिहारिद्विवेदिनो मैनपुरीगृहेऽवलोकितम् । इदं शतत्रयवर्षप्राचीना प्रतीयते ।
3. सुमुखश्चैकदत्तश्च कलिपो गजकर्णकः ।
   लम्बोदरश्च विकटो विघ्ननाशो विनायकः ।।
   धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः ।
   द्वादशैतानि नामानि यः पठेच्छृणुयादपि ।
   विद्यारम्भे विवाहे च····· ।
   ···विघ्नस्तस्य न जायते ।।

गणपतेः शास्त्रोक्तानां बालब्रह्मचारिबालतरुणविघ्नहर्तृ-वक्रतुण्डपिङ्गल-लक्ष्मीपतिभुवनेशनृत्यशक्तिध्वजादीनां स्वरूपाणामभिव्यक्तिस्तु सम्यग्रूपेण शिल्पकलाकृतिषु न प्राप्यते, तथापि संसारेऽस्मिन् या याः शिल्पकलाकृतयोऽवशिष्टाः मूर्तिशिल्पे तास्तास्तस्य देवत्वं माङ्गलिकचारुरूपेण प्रमाणीकर्तुं प्रतिष्ठापयितुञ्चालम् ।

संक्षेपेण कथयितुं शक्यते यद्भारतीयोपासनायां विघ्ननाशिगणपतेर्महत्त्वपूर्णमनन्यं स्थानं सुरक्षितम् । अत एव तस्य मङ्गलमूर्ति परमैकतत्त्वरूपेऽवधार्य पुरातनशिल्पकलाकृतिषु प्रतिमा इमाः पुरातात्त्विकनिधौ सर्वकारेण तथा संरक्षणीया धर्मप्राणभारतीयजनताया उपासनायै यथा मूर्तितस्करान् इमाः विदेशान् न प्रेषयेयुः पापधनार्जनाय ।[1]



1· लेखकेन शोधपत्रमिदं प्रस्तुतं मैनपुर्यामखिलभारतीयसंस्कृतसम्मेलनस्य शोध-संगोष्ठ्याम् प्रकाशितञ्च "संस्कृत विमर्शस्य 17।1-2 अंके ई० 1990 वर्षे, नवदिल्ली–27, पृ० 35–39 ।

# चारुदत्तमृच्छकटिकयोः साम्यवैषम्ये

संस्कृतनाट्यसाहित्ये महाकविभासशूद्रकाश्वघोषकालिदासभवभूति प्रभृति-पुरातननाटककारणां महत्त्वपूर्णमवदानं वर्तते। प्रारम्भिकसामाजिकरूपकेषु महा-कविभासस्य 'चारुदत्तम्', महाकविशूद्रकस्य च 'मृच्छकटिकमुल्लेखनीये नाट्यरचने स्तः। उभयो रूपकयोः परस्परसाम्यवैषम्यथौ समीक्षात्मकमध्ययनमत्र प्रस्तूयते।

उभयोरेव रूपकयोर्नाटकीयवस्तुन उपस्थापनरीतिः, उपाख्यानांशः परस्परा-लापविषयश्च प्रायशः समान एव, परन्तु वर्ण्यविषयेऽभिनवानामनेकेषां पद्यानां संनि-वेशात् तथा कुत्रचित् नवोद्भावितानामपि दृश्यानां योजनया मृच्छकटिकस्य चत्वार एवाङ्काः चारुदत्ततः आकृत्यातिबृहत्तरा दृश्यन्ते।

पात्राणां नामानि तूभयोरूपकयोरभिन्नानि, केवलं चारुदत्ते यस्तावन्नायकः सज्जलक इत्याख्ययाऽभिहितः, स तु मृच्छकटिके शर्विलक इति नाम्ना प्रकटितो-ऽस्ति। तथैव प्रकरणे मृच्छकटिके प्रयुक्तः हस्तिपकः कर्णपूरकश्चारुदत्तो केवलं चेट इति नामविशेषः विशेषत एवोल्लिखितो वर्तते।

एतत्तु उभयोः रूपकयोः प्रमुखवैषम्यं विद्यते, यत् मृच्छकटिकवत् चारुदत्ते आदौ नान्दीपाठे कविपरिचयः तथान्तं भरतवाक्यञ्च नास्तीति।

प्रथमङ्के नानयोरुभयोरपि रूपकयोस्तादृशः कश्चिद् विशेषो दृश्यते, केवलं चारुदत्तप्रकरणे विटशकारौ द्वावेतौ नायिकावसन्तसेनामनुसर्तुरित्युक्तमत्र तु तदनुसरणे विटचेटशकाराणां त्रयाणामवतारणाऽवलोक्यते, इति भेदो विद्यते।

रूपकयोः द्वितीयांके नायकचारुदत्तः प्रकरणे–प्रतिभाशालिना महाकवि भासेन द्यूतकाराणां माथुर—द्यूतकार–दर्दुरकादीनां नामापि नोल्लिखितं किन्तु मृच्छकटिके तैरनुष्ठितं द्यूतव्यापारमवलम्ब्य विरचितं मौलिकाभिनवश्च दृश्यमेक-मालोक्यते, इत्यनयोरत्र विशेषः प्रकटितोऽस्ति।

अपि च, चारुदत्तः प्रकरणस्यास्मिन्नेवाङ्के संवाहकः वसन्तसेनातः प्रास्था-निकानुमतिमादाय प्रचलितः, ततः परिव्राजकः संवृत्तश्च, किन्तु मृच्छकटिके तु असौ

ततः शाक्यश्रमणकः[1] संवृत्त इति वैशिष्ट्यं परिलक्ष्यते ।

उभयोरपि रूपकयोस्तृतीये[2]ऽङ्केऽपि किमपि विशेषं वैषम्यं पार्थक्यं वा न परिलक्षयामः ।[3] साम्यमधोलिखितपद्येष्ववलोकनीयम् प्रथमाङ्के ।[4]

---

1. अत्र केचन प्राच्यविद्याविदः एवमामनन्ति, यत् मृच्छकटिके शाक्यश्रमणक-विवरणस्य सम्मुल्लेखप्रदर्शनात् सम्राट् अशोकप्रादुर्भावादुत्तरकाले एव विरचित-मेतन्मृच्छकटिकं नाम प्रकरणम् । यतः सम्राजः अशोकस्य शासनसमयादेव बौद्धधर्मस्य भूयसा प्रचारः समारब्धः इति । चारुदत्तन्तु ततः पूर्वमेव विरचितं, तत्र शाक्यश्रमणकादर्शनात् । तादृशी युक्तिस्तु न विचारसहाः तथाहि—तेषां यदि मृच्छकटिके शाक्यश्रमणकशब्दस्य उल्लेखदर्शनादेव मृच्छकटिकं राज्ञोऽशोकस्य शासनात् परमेव विरचितमिति सिद्धान्ततया सम्मतं स्यात् तदा समानयुक्त्या शाक्यश्रमणशब्दोल्लेखस्य क्वचित् चारुदत्ते रूपकेऽपि सत्त्वात्, तदपि अशोकशासनात् परमेव प्रणीतमिति सिद्धान्तयितुं शक्यते ।

   इदमवलोक्यते च चारुदत्तरूपकस्य तृतीयांके यदा सज्जलकः सन्धिं भित्वा चारुदत्तभवनं प्रविष्टवान्, ततः कियत्पूर्वमेव विदूषकः चारुदत्तमकथयत्—। 'अहं खु दाव कत्तव्व करिस्सतीकिद, संकेदी विअ । सविकप्रसमपाओ निद्दंसण लभामि ।" तथा च तेषां मतस्य परिपोषिकाया युक्तः भित्तिहीनतया तत्राऽस्माभिर्नास्थाख्यापयितुं शक्यते ।
2. तुलनात्मकाध्ययनार्थं द्रष्टव्यो डॉ० महेन्द्रकुमारवर्मणः पी. एच. डी० शोधग्रन्थः "भासके चारुदत्त तथा शूद्रककृत मृच्छकटिक" का तुलनात्मक एवं आलोचनात्मक अध्ययन" (आगराविश्वविद्यालयतः 1969 ई० वर्षे पीएच०डी० उपाधये स्वीकृतः) प्रस्तावना पृ० 21-28 ।
3. द्रष्टव्योऽस्मदीयः शोधलेखः—"समीक्षानिकषे-मृच्छकटिकम् "सागरिका" (रजतजयन्ती विशेषाङ्कः) 24।4, 26।1
4. चारुदत्ते 1।3 सुखं हि दुःखान्यनुभूयशोभते..................। मृच्छकटिके पद्यमिदं 1।10 क्रमाङ्के समानमेव ।
   चारुदत्ते 1।6 दारिद्र्यात् पुरुषस्य बान्धवजनो..................सम्भाव्यते । मृच्छकटिके पद्यमिद 1।36 क्रमाङ्के समानमेव ।
   चारुदत्ते 1।19 लिम्पती तमोऽङ्गानि.....................गता । मृच्छकटिके पद्यमिदं 1।26 क्रमाङ्के समानमेव ।
   चारुदत्ते 1।9 किं त्वं भयेन परिवर्तितसौकुमार्या ..................यासि । मृच्छकटिके पद्यमिदं 1।36 क्रमाङ्के समानमेव ।
   चारुदत्ते 1।5 सत्यं न मे विभवनाशगता विचिन्ता............। मृच्छकटिके पद्यमिदं 1।35 क्रमाङ्के समानमेव ।
   चारुदत्ते 1।29 उदयति हि शशाङ्क..................क्षीरधाराः पतन्ति । मृच्छकटिके पद्यमिदं 1।57 क्रमाङ्के समानमव ।

 

मृच्छकटिके तु चतुर्थाङ्के प्रथमांशे एवं चेटी नायिकावसन्तसेनासमीपमागम्य–अज्जए । अत्ता आणवेदि गहिदावगुंण्ठणं पक्खदुआरए सज्जं पवहणं । ता गच्छेत्ति इति; राजश्यालकसंस्थानमभिगन्तुं तां व्यजिज्ञपत् तच्छ्रुत्वा सा–"एव्वं विस्मा-विदव्वा" इति प्रत्यवदत् । मन्यामहे वयं मृच्छकटिककृता एतेनैतदावेदितं यत्, नायकं चारुदत्तं प्रति नायिकावसन्तसेनायाः प्रगाढोऽनुरागः न खलु गणिकानुकूल इति । यद्यपि वसन्तसेनाऽस्ति गणिकापुत्री तथापि तस्या व्यवहारस्तु गणिका अननुरूपतया सर्वथा श्लाघनीय इति । किं नाम एकानुरक्ततायाश्चरमोत्कर्षः तत् किल सा सम्यक्तया संदर्शितासीदिति मृच्छकटिकस्यात्यन्तोत्कर्षप्रतिपादको-यदंशः नास्माभिश्चारुदत्ते रूपकेऽवलोक्यते कुत्रापि ।

तथैव तत्र चतुर्थाङ्के चारुदत्तप्रकरणे वसन्तसेनामदनिकासज्जलकयोः एकान्तकृतादन्योऽन्याभाषणादेव भूषणवृत्तान्ते विदिते, चारुदत्तादेशात् विदूषकः धूतया प्रदत्तां रत्नमालारूपहृतालंकारविनिमयत्वेन वसन्तसेनायै प्रदातुं तंत्र समुपस्थितः प्रदाय च प्रातिष्ठत् । प्रस्थिते सति तु विदूषके दासीमदनिकया नीतेन सज्जलकेन स्वकपटप्रयोजनं विज्ञापिता वसन्तसेना सहसैव समभाषत–"इमं तस्स-चारुदत्तस्स देदु अज्जो" इति । तद कथितं सज्जलकेन–"भवति ! न खल्वहं गच्छामि", इत्युक्ते, वसन्तसेना पुनरपि प्रत्यवदत्–"अहं जाणामि, तस्व गेहे साहसं करिअ अणीदा अअं अलंकारो ।" इति ब्रुवती तद्दत्तानि स्वर्णालंकरणानि सा नाग्रहीत् ।

मृच्छकटिकप्रकरणे तु तत्रैव, एकान्ते स्थितया सुन्दर्या वसन्तसेनया, मदनिकाशर्विलकयोः रहसि कृतादन्योऽन्यालापात् विदितालंकारवृत्तान्तया सकपटं शर्विलकप्रदत्तानि स्वर्णालंकरणानि अग्राहिषत् न च किमपि रहस्यं तदानीमुद्घाटि, केवलं वाङ्मात्रेण तयैतदेवाभ्यधायि-यत्, "अहं अज्जचारुदत्तेण भणिदा–जो इमं अलंकारअं समप्पइस्सदि, तस्स तु ए मदणिआ दादव्वा" तासो जेव्व एदं ते देदित्ति, एवं अज्जेण अवगच्छिदव्वम्" इति ।

इत्थमतिवैदग्ध्येन रहस्यमिदमतिरमणीयं विदधतो वसन्तसेना तत्क्षणमेव छलेन आश्रिताया मदनिकायाः शर्विलकस्य च मन्तव्यमपूरयत् । ततश्च विदूषकेऽपहृताभरणविनिमयेन रत्नमालिकां प्रदातुमागते, अविचारितमेव सा तस्माद्रत्नमालाम् गृहीतवती, तेन च घटनारहस्यमपि क्रमात् घनीभूतमभवत् ।

महाकविभासप्रणीते चारुदत्तरूपके एतदुपवर्णितं यत् नायकचारुदत्तगृहात् निक्षेपभूतानि भूषणानि अपहृतानीति वसन्तसेना मदनिकासज्जलकाभ्यामावेदिता सती चोरिताऽलंकारविनिमयेन रत्नमालामर्पयितुमुपागतात् विदूषकात् यदा रत्नमालामगृह्णात् तदापि भूषणजातं करतलगतमस्याः नामवत् इति तेन च तत्र रहस्यमेव मदनिकासज्जलकाभ्यां विकासमभजत नादीयत, चापहृताऽलंकारव्यापारे चारु-

दत्तेन किं क्रियते, इत्यवगन्तुं वसन्तसेनाया कौतूहलोद्वेगयोः कोऽप्यवसर इति ।

शूद्रकप्रणीते मृच्छकटिके तु एतद् दृश्यते, यत् विदूषकस्य वसन्तसेनाभवन-समागमनात् प्रागेव निर्जनस्थले स्थिता सा ह्यनाऽलंकारवृत्तान्तमश्रृणोत्, अभूवंश्च तान्येवाभरणानि तस्या एव करतलेष्वस्थितानि इति । तेन च नायिकावसन्तसेनाया अलंकरणप्राप्तिकालं विदूषकागमनकालञ्चान्तरा, निक्षिप्ताऽलंकारेषु नायकचारु-दत्तास्य मनोदशायामलकारविषये तत्कर्त्तव्यतायाञ्च वसन्तसेनायाः । तथैव पाठ-कानां, नाट्यदर्शकानामपि हृदयोद्वेगः कौतुकञ्च तथाऽन्यद् वा यत्किञ्चिद्भवेत्; तद् भवतु, परन्तु आभूषणप्रत्यर्पणेन वसन्तसेना चारुदत्तस्य चित्ते शान्तिमानेतुं, शक्ष्यति, इत्येवंविध उद्वेगोपशमस्य भाविकोत्सुकस्य च सम्यक् विकासावकाशोऽत्र प्रदर्शितः नाटकारेण ।

ततः परमेव यदा नायकचारुदत्तेन स्वकीयविश्वासस्य संशोधनार्थं विदूषक-हस्तेन रत्नमालिका संप्रेषिता, तदा प्रभृति नायिकावसन्तसेनाया मनस्तं प्रति दृढतरमाकृष्टमभवत् । यदा तस्याः अनुरागः पूर्वस्मादपि घनीभूतमभवत्, तदा तु सा स्वकान्तं चारुदत्तमपश्यन्ती फलमपि अपेक्षितुं नाशक्नोत् । महाकविभासविरचिते चारुदत्ते तु ईदृशी वस्तुवर्णना न हि उपकल्पिता विवृता व ।

अन्यमपि रहस्यमिदं चारुदत्तं वसन्तसेनाञ्चाधिकृत्य मृच्छकटिके स्फुटतया विकासमभजत इति नाट्यवस्तूनि समधिकां प्रकृष्टतामभजन्त, सा खलु वसन्तसेनायाः वेशवाससंवादिनी विमलचरित्रानुरूपा च रचनायाः कियन्मात्रपरिवर्तनेनैव तदिदं तारुदत्तरहस्यात् परिस्फुटा चारुतामावहतीति अस्माकमवधारणा ।

रूपके चारुदत्ते वसन्तसेना स्वभूषणानि न गृहीतवती, परन्तु चारुदत्तमेव प्रत्यर्थयितुमुपादिशत्, तेन च वयं मन्यामहे यत् मृच्छकटिकवद् अलंकाराणामिदं संक्रान्तविवरणस्य नेह सम्यक् विकासनं कवेरभीप्सितमासीदिति । यो ही कौतुको-द्दीपको भावो मृच्छकटिकेऽस्मान् नितरामावर्जयति, तादृशस्याभासमात्रमपि महा-कविर्भासः स्वरूपके चारुदत्ते न प्रकाशितवान् ।

इदमपि विचारणीयं वर्तते, यत् महाकविभासः स्वरूपके चारुदत्ते सज्जल-कमङ्कावसाने निराक्रमत् तेन वयं पुनरनुमन्यामहे यत् विवर्णितादन्यत् किमपि नाटकीयं वस्तु सज्जलकेन प्रकाशयितुं नैच्छदिति । महाकविः शूद्रकस्तु मृच्छकटिके प्रकरणे वसन्तसेनासद्मनिर्गच्छतः तदानीन्तनीं घोषणावाणीमाकलयतश्च शर्विलकस्य "अहं इदानीं ज्ञातीन् विटान्" इत्यादि वचनैः प्रयोजनान्तरमपि सुस्पष्टं प्रदर्शितवान् ।

संक्षेपेण इदमेव कथयितुं शक्यते, यत् कथावस्तुदृष्ट्या चारुदत्तमृच्छक-कटिकयोः रूपकयोःपर्याप्तं साम्यं वर्तते । मृच्छकटिकस्यान्योऽन्यस्मादङ्कात् चतुर्थाङ्के एव चारुदत्तरूपकेण सह भूयसा वैषम्यस्य एतदेव कारणं यत् इतः प्रभृति मृच्छकटिकरचनाकारेण स्वकीययाऽसामान्यया कल्पनया काव्यं किमपि नवीनमेव

निर्मास्तते, तदर्थमेवासौ कविसुलभकल्पनापथेऽत्राग्रेसरतीति शम् ।

**सहायक ग्रन्थाः**


( i ) नाट्यशास्त्रीयानुसन्धानम्—डॉ० रामजी उपाध्याय, वाराणसी प्रथम सं० 28205

( ii ) भासनाट्यग्रन्थावलिः, डॉ० रामजी उपाध्याय, वाराणसी, 2043 वि०

( iii ) Sanskrit Drama, A. B. Keith, II Edi· P. 137–138

( iv ) The Litle Clay Cart, Rydey. P. XVI.

( v ) शूद्रकः,–पं० चन्द्रवली पाण्डेयः, प्रथम सं० पृ० 67.

( vi ) महाकविः शूद्रकः–डॉ० रमाशंकर त्रिपाठी, पृ० 350 प्रथम सं०

( vii ) मृच्छकटिकभूमिका, डॉ० रांगेय राघव प्रथम सं० पृ० 12–13

(viii) समीक्षानिकषे मृच्छकटिकम्–डॉ० कैलाशनाथ द्विवेदी, (सागरिका 26/1, पृ० 49 63) सं० 2०44 विक्रमी ।

( ix ) द्रष्टव्य–लेखकस्य शोधलेखः, सागरिका-28/4 अंकः, वि० संवत् 2047, वाराणसी, पृ० 65–70 । □

# विशाखदत्तस्य नाट्य-नैपुण्यम्

संस्कृत साहित्यस्य सुप्रसिद्धेषु प्राचीन नाटककारेषु विशाखदत्तस्य महत्त्वपूर्णं स्थानं विद्यते । मुद्राराक्षसं नाम सुप्रसिद्धं एकमेव नाटकं वर्तते तस्य संस्कृत नाटकसाहित्ये, एस्मिन्नद्भुतं नाट्यनैपुण्यभवाप्यते विशाखदत्तस्य । सोदाहरणं विवेचनं मया विषयेऽस्मिन् ।

विशाखदत्तेन स्वाप्रतिमप्रतिभया मुद्राराक्षसे वस्तुनेतारसादीनां नाट्यतत्त्वानां नैपुण्येन सन्निवेशः कृतः । सप्तभिरङ्कैः संग्रथिते नाटकेऽस्मिन् मौर्यराजवंशकालिकी चन्द्रगुप्तराजानुबन्धिनी कथैका वर्ण्यते । अन्तिमनन्दनृपस्य स्वामिभक्तं सचिवं राक्षसं चन्द्रगुप्तप्रवश्यं कर्तुं चाणक्यप्रयुक्ता कूटनीतिः, म्लेच्छराज पुत्रं मलयकेतुं च स्वपक्षे कृत्य चन्द्रगुप्तमौर्यं सिंहासनाच्च्यावयितुं राक्षसोपात्ताः चतुरोपायाश्चात्र अर्जस्वलया शैल्या उपनिबद्धाः सन्ति । चाणक्यभेदनयेन मलयकेतौ राक्षसेऽविश्वासिति सति, राक्षसोऽपमानमसहमानः मलयकेतुं व्यक्तवान् । स्वमित्रस्य चन्दनदासस्य जीविताय मृत्युभयं दृष्ट्वा राक्षसः मित्रप्राणयितुं चाणक्यायात्मानं समर्थ्यं समर्पितवान् । चन्द्रगुप्तमौर्यस्य प्रधानामात्यपदं स्वीकृतवान् । एव (सुखान्तं) नाटकं सम्पन्नम् ।

मुद्राराक्षस्यैतिहासिकं कूटनीतिव्यवहारबहुलं च कथावस्तु विद्यते । नाटकेऽस्मिन सर्वेषां पात्राणां तत्तत्क्रियोद्देश्यं राक्षसंसंग्रहणं नाम केवलमेकम् । अतोऽस्य पात्राणि न धर्ममाकलयन्ति नाप्यधर्मम्, मैत्रीं कुर्वन्ति च भञ्जयति च । राक्षसः विरोधं त्यजेत् इति कृत्वा चन्दनदासेऽपि वधदण्डः पात्यते । नाटके सर्वाणि पात्राणि यथागुणं नानायुगलेषु विभक्तानि इत्येसोऽस्य नाटकस्यापरो विशेषः । यथा-कूटनीतिनिपुणयोः चाणक्यराक्षसयोरेकं युगलं, प्रतिपक्षभूतयोर्नृपचन्द्रगुप्त मलयकेतोः द्वितीयं युगलं, भागुरायणसिद्धार्थकयोः तृतीयं युगलं विलसति । प्रतियुगलं द्वयोः पात्रयोः गुणवैषम्यं सम्यक् स्फुटीकृतमवलोक्यते । चन्दनदासपत्नीरूपेण केवलमेकं पात्रं सप्तमाङ्के प्रवेश्यते, तदपि तद्कठोरकर्त्तव्यपरायणतामात्मोत्सर्गञ्च दर्शयितुं न तु दूरतोऽपि शृङ्गारसम्पर्कमारचयितुम् ।

सत्यपि स्त्रीपात्राभावेऽसत्यपि च हास्यरसकोविदे विदूषके नाटक मिदं नाकर्षणेन हीनं न च रोचकतया शून्यं वर्तते । चरित्राणां चित्रणमपि विशाखदत्तेन तननैपुण्येन कृतम् । नाट्यकलानिष्णातो नाटककारोऽयं तथात्वेन पात्राणां सृष्टिञ्च-

कार यथात्वेन तानि अन्योऽन्यस्य पात्रस्य चारित्रिकचारुता विकासने सहायकानि स्युः। वस्तुतो नाटकमिदं यस्मात्पामात् गतिं मतिं स्फूर्तिं च लभते स चाणक्य एव नान्यः कोऽपि। सः स्वकूटनीतिं साधयितुं कठोरतामपि कौलिशीं प्रयोक्तुमुद्युङ्क्ते।

"अद्याऽपि वध्यमानां बध्यः को नेच्छति शिखां मे।"[1] "वत्स कार्याभियोग एवास्मान् व्याकुलयति न पुनरुपाध्यायरुहभूः शिष्य जने दुःशीलता"[2] साक्षिभूतानि वचनानीह उपर्युक्ततथ्यस्य। यद्यपि चाणक्यस्याग्रे राक्षसस्य नीतिरसफलता भवति, तथापि राक्षसस्य मानवता मृदुलमनस्कता सुहृद्वत्सलताऽतितरामेव स्पृहणीया विद्यते। सः स्वर्गतस्यस्वस्वामिनो निमित्तेन प्राणानपि जुहूसति। नाटकारो नैपुण्येन प्रकटयति तस्य भावान।

"देवेगते दिवमतद् विधमृत्युयोग्ये,
शैलेश्वरे तमधिकृत्य कृत प्रयत्नः।
तस्मिन् हते तनयमस्य तथाप्यसिद्धिः
दैवं हि नन्द्रकुलशत्रुरसौः न विप्रः॥"

(मुद्रा॰ 6|7)

निपुणो नाटककारो विशाखदत्तः राक्षस्यासाधारणी प्रभुभक्ति राजनीतिज्ञतां प्रतिपाप्तन्ञ्चानुमन्यमानः चाणक्यं चन्द्रगुप्तस्यमन्त्रिणं कर्तुमच्छुगोतरतं प्रदर्शयति–

"कार्योपक्षेपमादौ तनुमपि रचयंस्तस्य विस्तारमिच्छन्।
बीजानां गर्भितानां फलमतिगहनं गूढमुद्भेदयश्च।
कुर्वन् बुद्ध्या विमर्शं प्रसृतमपि पुनः संहरन कार्यजातं।
कर्त्ता वा नाटकानामिममनुभवति क्लेशमस्मद् विधो वा॥"

(मुद्रा॰ 4|3)

इत्यादीनि वाक्यानि तस्य नीतिनिष्णाततां प्रदर्शयितुं नाट्यकलाविचमणोविशाखदत्तोतदुक्तानि ह्युपनिबहनन् वीक्ष्यते। चन्दनदासस्य प्राणान् परित्रातुं राक्षसः स्वमाश्रुतमपि उपेक्षितुमुपक्रमते। कथ्यति–

"येन स्वामिकुलं रिपोरिव कुलं दृष्टं विनश्यत् पुरा,
मित्राणां व्यसने महोत्सव इव स्वस्थेन येन स्थितम्।

---

1. मुद्राराक्षस नाटकम् 1|9
2. प्रथमाङ्के दशमवलोकान्ते चाणक्यन्योक्तिः।

आत्मा यस्य बधाय वः परिभवक्षेत्रीकृतोऽपि प्रियां–
तस्येयं ममसृत्युलोकपदवीवध्यस्रगाबध्यताम् ।।"

(मुद्रा० 7।4)

यद्यपि प्रधानो रसोऽस्मिन्नाटके वीर एव विद्यते अथापि न स इह तथाऽभिव्यक्तिमापन्नः स्राप्यते, यथा–भवभूतिप्रणीते महावीरचरिते भट्टनारायणप्रणीते च वेणीसंहारे। परन्तु सर्वारम्भाणामेकक्रियाकारित्वम् ( Unity of action ) नाम यो नाटकीयगुणविशेषः स यथाऽत्र दृश्यते न तथा कस्मिश्चिदपि संस्कृतनाटकान्तरे। नाटकस्य गतिरोधशून्यः कार्य-व्यापारः पूर्णतयैव गत्वरः। नाटककारस्य प्रतिभापारवेन पात्रानुकूलप्रयुक्ता नादकीयतापूर्णा च भासो कथावस्तुनिबन्धनकौशलेन च न क्वापि श्लथतायावाऽरुचिरतायाः कणोऽपि प्राप्यते। वस्तुतः ओजोमयस्य वातावरणेस्यावतारणे वीररसस्य चोन्मीलने मुद्राराक्षसं संस्कृत रूपकसाहित्येस्तुत्यसाफल्यक्रियां शोभते, चौरयति च चेतांसि सचेतसाम्। निपुणोनाटककारोऽप्रस्तुतविधानमपि प्रीणाति, ओजपूर्णशान्तेज्ञशब्देषु भावपक्षं पुष्णाति च–

"आस्वादित द्विरदशोणितशोणशोभां,
सन्ध्यारुणामिव कलां शशलाञ्छनस्य।
जृम्भाविदारितमुखस्य मुखात् स्फुरन्तीं,
को हर्तुमिच्छति हरेः परिभूयदंष्ट्राम् ।।"

(मुद्रा० 1।8)

अस्माच्छलोकान्न केवलमप्रस्तुतविधानसौन्दर्यं दृष्योत्तरं भवत्यपितु ओजसएछटागौडीरीतेः प्रकर्षः पूर्णोपमा प्रस्तुतप्रशंसान्वितः सत् स्वरूपोऽप्यवलोक्यते। नाट्य नैपुण्यपूर्णाः सर्वेप्रयासाः विशाखदत्तस्य वीररसमेव सम्पूर्ण नाटके परिपोषयन्तो दृष्टाः भवन्ति। कविः श्रृङ्गारमपि तथात्वेन विनिवेशयति यत्सोऽपि समासोत्तयाऽभिभवकारिणी तेजस्वितां गृह्णाति–

"वामां बहुलतां निवेश्यशिथिलं कण्ठे निवृत्तानना
स्कन्धे दक्षिणाया बसान्निहतयाप्यङ्के पतन्त्या मुहुः।
गाढालिंगनसङ्गपीडितमुखं यस्योद्यमाशाङ्किनी,
मौर्यस्योरसि नाधुनापि कुरुते वामेतरं श्रीस्तनम् ।।"

(मुद्रा० 2।12)

नाट्यनिपुणो विशाखदत्तः प्रकृतिसुन्दरतामपि नाटके यथास्थानं दर्शयतिः परन्तु तदीया प्रकृतिशोभा नाटकीयभावनां तीव्रतरामेवादधाना पर्यवेक्ष्यते–

विपर्यस्तं सौधं कुलमिव महारम्भस्वनं,
सरः शुष्कं साधोर्हृदयमिव नाशेन सुहृदाम् ।
फलैर्हीना वृक्षा विगुणविधियोगादिव नया,
स्तृणैश्छन्ना भूमिर्मतिरिव कुनीतैरविदुषः ।।"

(मुद्रा० 6।11)

मुद्राराक्षसनाटकं नानाभिः नाट्यशास्त्रीयविशेषाताभिः समन्वितं भूत्वा विशाखदत्तस्य नाट्यनैपुण्यमेव प्रकटयति । डॉ० मुग्धा[1]नल (Thacdonell) अस्य वैशिष्ट्यवीक्ष्य सत्यमेव प्रतिपादयति । पात्रानुरूपा एव भावाः यथास्थान संस्कृत शौरसेनी-मागधी-प्राकृतभाषाष्वभिव्यक्ताः सन्ति । कवेः प्राकृतभाषाष्वपि विद्वत्त्वं ज्ञातं जायते । नाटके कविना न्यायज्योतिषायुर्वेद राजनीतनाट्यशास्त्रादीनां वैदुष्य-मपि नैपुण्येन विविधपात्रैः प्रकटिम् । विशिष्टतेयमपि महीयसी यदिदं नाटकं ललिताभिः गम्भीरसूक्तिभिः सामाजिककेभ्यः उत्तमोत्तमान् उपदेशानपि प्रददाति–यथा–

"पुरन्ध्रीणां प्रज्ञा पुरुषगुणविज्ञानविमुखी ।"[2]

(मुद्रा० 12।7)

"ये सत्यमेव हि गुरुनतिपातयन्ति, तेषां कथं नु हृदयं न भिनत्ति लज्जा,[3] सेवांलाघवकारिणीं कृतधियः स्थाने श्ववृत्ति विदुः ।[4] इति

संक्षेपे, वार्ताया उपसंहारे कथायितुं शक्यते यद् निःसन्देहं नाटकमिदं विशाखदत्तस्य महनीयाऽतिसफला नाट्यकृतिः । भाषाभावकवित्वकथावस्तु पात्र चरित्र-चित्रणादिकानि सर्वाण्यपि तत्त्वानि अद्भुतां सफलतामवगाहमानान्यस्मिन् लक्षितानि नाट्यनैपुण्येन । विशाखदतस्य नाट्यनैपुण्यमेव दृष्ट्वाऽस्य प्रशस्तिः

---

1. "Among the works of other dramatists, Vishakha Dattta's "Mudraraksasa or Raksasa and the Seal" deserves special mention because of its unique character. For, unlike all the other dramas hitherta described, it is a play of political intrigue, composed, moveover, with much dramatic talent, being full of life, action and sustained interest."
A History of Sanskrit Literature, 1965, P. 309
(Macdonell)
2. मुद्रा० 2।7
3. मुद्रा० 3।33
4. मुद्रा० 3।13

पापठ्यते विद्वद्भिः[1]–

"यो मुद्रया राक्षस कीर्तिहारी स्वज्ञानमुद्रार्जितराक्षसश्रीः ।
विज्ञानभानुर्नयवर्त्मदक्षो विशाखदत्तः प्रदते पृथिव्याम् ।।"

इति शम् ।

1. संस्कृत साहित्य का समीक्षात्मक इतिहास, डॉ० कपिलदेव द्विवेदी, इलाहा० पृ० 353
लेखकेन दि० 2 फर्वयो, 1980, शनिवारे आकाशवाण्या, लक्ष्मणपुरकेन्द्रात् प्रसारिता संस्कृतवार्ता।
अखिलभारतीय प्राच्यविद्यासम्मेलने, शान्तिनिकेतनेऽधिवेशने प्रस्तुतमिदं शोधपत्रम् । विद्वद्भिः प्रशंसितञ्च ।

# पं० रामनाथचतुर्वेदिनः संस्कृत-साहित्यम्

विशालबुन्देलखण्डीयवसुन्धरा न केवलं वरिष्ठवीराणामपितु महायशस्वि-साहित्यकाराणां प्रसवित्रीति सुप्रसिद्धास्ति। अस्या जालौनहमीरपुर-बाँदा-झाँसी-ललितपुरादिजनपदाः नैकविख्यातकविभिरभिमण्डिताः प्राप्यन्ते। बाँदाजनपदान्त-र्गतरफनौलनाम्नि ग्रामे पण्डितकुञ्जनलालचतुर्वेदिनो गृहे पुत्ररत्नं रामनाथचतुर्वे-दिनः प्रादुर्भावः 1886 ईस्वीयाब्देऽभवत्।

परममेधावि-रामनाथचतुर्वेदिनः प्रारम्भिकी संस्कृतशिक्षा गुरुवरपण्डित-दुःखहरणझामहोदयस्य सान्निध्ये चटाईमोहाल-कर्णपुरे श्रीरामसंस्कृतपाठशालायाम-भवत्, यत्रायं व्याकरणे मध्यमपरीक्षामुत्तीर्णः। साहित्यज्योतिषादिविषयेष्वपि अस्याकुण्ठितगतिरासीत्। कर्णपुरतोऽध्ययनं परिसमाप्य शैक्षिकीं वृत्तिमवलम्ब्य प्रारम्भे कर्णपुरग्रामाञ्चलस्य बनीपाराग्रामेऽयं संस्कृतपाठशालामचालयत्, पश्चात् जालौनजनपदान्तर्गते एटस्थानेऽयं संस्कृतशिक्षकोऽभवत्। एटतोऽयं संवत् 1864 विक्रमाब्दे श्रीवसन्तपञ्चम्यां समीपस्थे कौंचनगरे पञ्चाशत् सुयोग्यच्छात्रैरभिनवां संस्कृतपाठशालां स्थापयामास।

क्रौञ्चनगरे संस्कृतमहाविद्यालये सेवमानोऽयं स्वयोग्यशिष्यैर्विद्याप्रेमिमान्य-नागरिकैश्च पूजितोऽभवत्। अस्य सुविख्यातशिष्यपरम्परायां रामचरणशाण्डिल्य-प्रभुदयालुद्विवेदि-जुगुलकिशोरचतुर्वेदिसूर्यप्रसादपटेरियाप्रभृतयः पण्डिता उल्लेखनीया सन्ति। चतुर्वेदिनस्तिस्रः पत्न्य आसन् किन्त्वनपत्योऽयं दुर्भाग्यवशाद्राजयक्ष्मारोग-ग्रस्तोऽल्पायुष्येव 1934 ईस्वीयाब्देऽगस्तमासस्य 27 तमे दिनाङ्के दिवंगतः। अस्यान्यौ सहोदरावपि सन्तानहीनावास्ताम्। श्रीचतुर्वेदिनः पारिवारिकदायादे दूरस्थदौहित्रः श्रीपाठकः क्रौञ्चमागत्याऽस्य वल्मीकावशिष्टसाहित्यकग्रन्थनिधि-मद्यापि संरक्षते। श्रीचतुर्वेदिनः प्रामाणिकजीवनपरिचयोऽयोध्यातः प्रकाशितसंस्कृ-तम्[1] विद्वद्वृत्तम् चेति माध्यमेन सह पं० ज्वालाप्रसाददीक्षितप्रभृतिवयोवृद्धेभ्यः प्राप्तुं शक्यते।

विप्रशर्मोपनाम्ना कविना पं० चतुर्वेदिनाधोलिखितसंस्कृतरचनाः कृताः—

(1) जुहोतिया-परिचयः। (2) नवदुर्गास्तवः। (3) संस्कृतगीतसंग्रहः। (4) रसमञ्जरीटीका। (5) प्रकीर्णसंस्कृतसाहित्यम्।

---

1. संस्कृतम् (मासिकं) अयोध्या 2।1, 3।3; "विद्वद्वृत्तम्", अयोध्या, सं० 1988 वि०, पृ० 9

(1) "जुहोतिया परिचयः"[1] नाम्नि लघुग्रन्थे जुहोतिया-ब्राह्मणानामुत्पत्तिः शास्त्रीयदृष्ट्या सम्यग्रूपेण प्रतिपादिता । तत्र निम्नलिखितश्लोकेषु वैदिकपौराणिक-व्याकरणिकभाषावैज्ञानिकप्रतिभा प्रकटिता भवत्येव–

"जुहोति शब्दः खलु यज्ञवाची, ज्ञाने च यः धातुरपि प्रसिद्धः ।
'क' प्रत्यये सिद्धयति सुष्ठु ताभ्यां जुहोतियेति प्रथितं पदं वै ।। ४।।
जुहोतिमिज्यां श्रुतिमूलकत्वाच्छ्रुतित्रयीं चावयवैः समेताम् ।
ये यान्ति जानन्ति जुहोतियास्ते, व्युत्पत्तिरेषा रुचिरावगम्या ।। ५ ।।

अपि च–

"षट्कर्मणां मुख्यमिदं प्रदिष्टं श्रुतित्रयीकर्मजुहोति कर्म ।
तज्ज्ञानवैशिष्टयत एव जाता जुहोतिया ब्राह्मणजातिमुख्याः ।।
(६+१)

(2) "नवदुर्गास्तवः" इति स्तोत्रकाव्यग्रन्थे सुकविना विप्रशर्मणा नव-विग्रहधारिण्याः दुर्गादेव्या भव्यभावपूर्णा स्तुतिः कृतास्ति । अस्मिन् स्तोत्रकाव्य-ग्रन्थे कवेस्तन्मयताऽलंकारप्रियता रसवत्ता च सर्वत्र संलक्ष्यते । देव्याः मर्मस्पर्शि-स्तुतौ प्रयुक्तं सालंकृतमनुलोमविलोमपद्यमत्र[2] प्रस्तूयते–

"देवाधिदेवि प्रविदेऽधिवादे स्वदा स्वदासस्यसदाऽस्वदाऽऽस्य ।
स्वदाऽस्वदासस्य सदाऽस्वदाऽऽस्व देवाधिदे विप्रविदेऽधिवादे ।।"

विमलां कमलामभ्यर्थयन् कोशलेन कथयति स्वहृद्गतम्—

"श्रयतां दिद्यातृ विभवाश्रयतां, विपदन्तकारि वव देवि पदम् ।
शरणं करोमि तमसः शरणं कमले ! दयस्व मयि नैकमले ।।"[3]
"अगम्य महिमा हिमाभवसना, सनातनसुखासुखातिदमनी ।
मणीव विमला मलाहतिपरा, परा सहृदया दयामुपनयेत ।।"[4]

'नमस्तस्यै' शीर्षकेण सरस्वतीमेवं स्तौति सत्कविरयं गजलगीतिमाध्यमेन–

---

1. जुहोदिया परिचयः, सं० ज्वालाप्रसादवीक्षित, कोंच, सं० 2027 वि०; पृ० 4, 5, 6 ।
2. नवदुर्गास्तवः, 4, 6, संस्कृतम् 2।3 अंकः, अयोध्या, सं० 1988 वि०, पृ० 3 ।
3. संस्कृतम्-सम्पादक, कालीप्रसादशास्त्री, अयोध्या, 2।1 कार्तिकाङ्क, सं० 1988 वि० ।
4. तदेव सम्पादक कालीदासशास्त्री, 2।1 अंकः अयोध्या 2।1 कार्तिकाङ्क, पं०, 1988 वि० ।

तुषारोत्पुञ्जविशदायै सरस्वत्यै नमस्तस्यै ।
सिताम्भोजासनस्थायै प्रभावत्यै नमस्तस्यै ।।
करे संशोभते यस्याः सुवीणा कच्छपी नाम्नी ।
सुहासैर्भासिताशायै निनदवत्यै नमस्तस्यै ।।
मरालानां कुलोत्तंसो मनोज्ञं वाहनं यस्याः ।
अहो वाचामधीशायै मुदितवत्यै नमस्तस्यै ।।
समस्तं जाड्यमन्तस्थं विभिन्तेया स्वभक्तानाम् ।
विशुभ्रस्फाटिकीं मालां विधृतवत्यै नमस्तस्यै ।।
प्रसादेनैव यस्या वस्तु निखिलं सूरयो विददुः ।
सदाकविविप्रगीतायै दयावत्यै नमस्तस्यै ।।"

(संस्कृतम् 1।4 माघाङ्क, सं० 1987 वि०)

(3) "संस्कृतगीतसंग्रहः" नाम्नि मौलिकमुक्तकगीत-काव्यग्रन्थे कविना विप्रशर्मणा सामयिकस्वरचितसरसगीतानां संग्रहः कृतोऽस्ति । अस्मिन् 'गोविन्द-गीतिः' 'रमापते, 'नवारंवारम्' 'त्रिशूलापाणे, 'युगलं राजते', 'अभ्यर्थना', 'नमस्तस्यै' 'प्रभृतिनैकललितगेयगीतानि सहृदयहृदयावर्जकानि सन्ति । आस्वादयन्तु सरलां सारसाञ्च गोविन्दगीतिमेकामिमाम्–

"देवः स नन्दबालो मम मनसे निविशताम् ।
गोकुलसरो मरालो मम मानसे निविशताम् ।।
पदतलजितप्रवालो नीपप्रसूनमालो ।
मुकुटप्रशोभिभालो मम मानसे निविशताम् ।।
(देवः स नन्दबालो·· )
पीताम्बरो विशालो लीलार्थधेनुपालो ।
स्फुरदुदंशजालो मम मानसे विविशताम् ।।
(देवः स नन्दबालो )
गोपीप्रणयरसालो नृत्यन् प्रदत्ततालो,
मकरध्वजस्यकालो मम मानसे विशिताम् ।।
(देवः स नन्दबालो···)
कविविप्रविप्रपालो भावपादपालवालो,
दुःखार्त्तजनदयालो मम मानसे निविशताम् ।।
(देवः स नन्दबालो···)

(संस्कृतगीत संग्रहः पृ० 9, संस्कृतम् 1।5 फाल्गुनाङ्कः, पृ० 2)

संस्कृतगीतकाव्यग्रन्थस्याऽस्य एवमन्यान्यपि सामयिकविषयेषु विरचितानि संस्कृतगीतानि अत्यन्तं महत्त्वपूर्णानि सन्ति। नववर्षारम्भे मेधाविनो विप्रशर्मण इयमाकांक्षा सामयिकशुभसन्देशमावहति निम्नांकितेऽस्मिन् पद्ये–

"प्रतिपलमहमर्थये समर्थः गणपतिविष्णुकलत्रविष्णुवाणीः।
मुदितबुधजनस्य संस्कृतस्य भवतु शुभाय नवीनवर्षवेशः॥"

(संस्कृतम्, 2।1 अंकः, पृ० 1 अयोध्या, सं० 1988 वि०)

(4) त्रयोदश–चतुर्दशशताब्द्यां प्रादुर्भूतस्य प्रसिद्धरसवाद्याचार्यभानुदत्तस्य 'रसमञ्जरीमाश्रित्य 'पं० रामनाथचतुर्वेदी' विप्रशर्मैकामुत्कृष्टां टीकामलिखत्। पूर्ववर्तिप्रसिद्धाचार्यगोपाल (बोपदेव)–महादेवरंगशायिनागेशभट्टानन्तपण्डितशेष चिन्तामणिगोपालभट्टानन्तशर्मव्रजराजविश्वेश्वरादिविद्वट्टीकाकारै रसमञ्जर्यां ये टीककाग्रन्था रचिता तेभ्यष्टोकाग्रन्थेभ्यो ऽज्ञात[1]नाम्नः पण्डितरामनाथचतुर्वेदिना 'रसमञ्जरीटीकाग्रन्थः' किमप्युल्लेखनीयं वैशिष्ट्यं भजते। अयमप्रकाशितो हस्त-लिखितरममंजरीटीकाग्रन्थः स्वर्गीयग्रन्थकर्तुर्ग्रन्थालये सोभाग्यवशाद् वर्तते।

(5) पण्डितचतुर्वेदिना प्रकीर्णसंस्कृतसाहित्यस्य संरचना कृता काले-काले ललितलेखाख्यायिकारूपकादिरूपेषु। अनेन 1914 ईस्वीयाब्दे एकः स्तरीयज्योतिष-पञ्चाङ्गं विनिर्मितम् यस्मिन् अप्रैलमासे क्रौंचनगरस्य चन्द्रग्रहणस्थिती रेखाचित्रेण सन्दर्शिता। क्रौञ्चनगरादेव प्रकाशितोऽनेन, सम्प्रत्यपि वर्ततेऽस्य ग्रन्थालये जीर्ण-शीर्णम्।

पं० चतुर्वेदिविप्रशर्मा संस्कृतकाव्येन सह सामयिकहिन्दीकाव्यमप्यरचयत् सवैया-घनाक्षरी-सोरठादिवृत्तेषु। संस्कृतेऽपि कविना सोरठा-सवैयादिवृत्तानां साधु प्रयोगः कृतः। यथा–हनुमद्वन्दनायां सोरठाच्छन्दसः प्रयोगोऽत्रावलोकनीयम्–

"यत् करुणाप्रसरेण, सकलवस्तु सुलभं सदा।
तत्पदमनुरागेण, कपिवरस्य वन्दामहे॥"

(संस्कृतम्–2।2 अंकः, पृ० 9)

एवमेव स संस्कृतेन सवैयाघनाक्षरवृत्तमप्यलिखत्। अवलोकयन्तु सरसं सालंकृतं पद्यमिदम्—

"यदीयशरीरविभा प्रतिभाति विभातविभाकरविम्बविभेव।
स भामुर-माधिपभूषितभाल, इमास्य उदस्यतु विघ्नकुलानि॥"[2]

---

1. रसमञ्जर्या एकादशटीकाकारेष्वज्ञातनामा यः टीकाकार उल्लिखितो डॉ० श्री० भा० वर्णेकरेण तस्यैव नामास्ति पं० रामनाथचतुर्वेदी, द्रष्टव्यः "संस्कृत-वाङ्मयकोश (द्वितीयखण्डः) कलकत्ता, 1988 ई०, पृ० 293–294।
2. संस्कृतम् 2।1 (कार्तिकाङ्कः), सं० 1988 विक्रमाब्दे, सं० 2।2 पृ० 9।

श्रीविप्रशर्मणः संस्कृतकाव्यसाहित्यमधोलिखितविधिना वर्गीकर्तुं शक्यते— (क) स्तोत्रात्मकसंस्कृतगीतिकाव्यम् । (ख) सामयिकोद्बोधनात्मकं संस्कृत-काव्यम् । (ग) चित्रात्मकमनुलोमविलोमसंस्कृतकाव्यम् । (घ) सामयिकसंस्कृत-काव्यम् । (ङ) प्रकीर्णं (विविध) संस्कृतसाहित्यम् ।

(क) स्तोत्रात्मके संस्कृतगीतकाव्ये कविना नानादेवीदेवा अनुरागपूर्वकम्-लंकृतललितपदावल्यां स्तुताः, यस्मिन् प्रसादमाधुर्यगुणसमन्वितानुप्रासयमकोपमाद्य-लंकाराणां स्वाभाविकीशोभा वर्तते । यथा—"युगलं राजते" ललिते गीते सालङ्कृतं स्वाभाविकं वर्णनं पश्यन्तु सहृदयाः—

अस्या मनोरममाननं धत्ते सकलचन्द्रद्युतिम् ।
एतस्य मुखमण्डलविभा, रविविम्बबदलं राजते ॥
अनया जलदमालासदृशमानीलवसनं धारितम् ।
अस्या-तडिदिव पीताम्बरमीक्ष्यममलं राजते ॥
माणिक्यमणिगणरचितमञ्जुलहार आलम्बत इतः ।
अत्रापि भुक्ता ग्रथितसूत्रमतीव धवलं राजते ॥
एकत्रवेणी द्युतिमयी सदरत्नजालकगुम्फिता ।
इतरत्र केशकलापकं रमणीयकुटिलं राजते ॥
श्रीजनकभूपतिनन्दिनी रघुराजयुगलं राजते ॥

(संस्कृतम् 1।8 ज्येष्ठ सं० 1988 वि० पृ० 1)

भगवन्तं पिनाकपाणिं जन्मभूमिभक्तः स स्तुवन् निवेदयति—

भगवन् त्रिशूलपाणे खलजनदलं विनाशय ।
विघ्नन्ति परहितं ये तेषां बलं विनाशाय ॥
मधुरैरही वचोभिर्विश्वास्य साधुलोकान् ।
शश्वद्वृथा छलयतां नृणां छलं विनाशय ॥
भूत्वापि ये समर्थाः कुर्वन्ति नो हितानि ।
स्वस्थाश्च जन्मभूमेस्तान् खलजनान् विनाशय ॥

(संस्कृतम् 1।7)

(ख) पण्डितरामनाथचतुर्वेदिना कबीरादिनिर्गुणभक्तकीवननुसृत्य साम-यिकोद्बोधनात्मकं संस्कृतकाव्यं भजनशैल्यां रचितम्, यस्मिन् मायाजालवद्धं मानवं मुक्तिमार्गं निदर्शयन् सुकविविप्रशर्मा एवमुद्बोधयति—

भज भज रे दीनदयालुं, मानुष जन्म न वारम्वारम् ।
वृथा किमर्थं गमयसि कालं परिहर सकलं मायाजालम् ।।
बिद्धनिजार्थपरं परिवारं परिचिनु रे कर्तारम् !
मानुषजन्म न···

विषयवासना: प्रबला एता आसंगेन कदापि न जेता ।
प्रत्युत कलयसि वृद्धिमुपेता यथा घृते न हुतारम् !
मानुषजन्म न···

सर्वज्ञं सामर्थ्यनिधानं जगतामद्वितमद्वितयोपादानम् ।
मनसा चिन्तय परमात्मानं सकलदुरितहर्तारम् ।।
मानुषजन्म न वारंवारम् ।

विप्रकवेरिति वचोऽधरिष्य: किमपि न कष्टं सुखदभविष्य: ।
सुखराशिं भज रे सर्वेशं कठिनममुं भवसिन्धुं तरिष्य: ।।
(संस्कृतम् 1।7 अंक)

एवमधोलिखितमुद्बोधनात्मकं भावपूर्णसमस्यापूर्तिकर पद्यमवलोकयन्तु सुधिय:—

परिश्शृणुत रे मायाबन्धे निबद्धतरा जान: ।
कुरुत सुकृत दत्त्वा चित्तं परत्रहित खलु ।
श्रयत चरणौ सम्प्रत्येव प्रभो: शमनालये,
गमनसमये को जानीते भविष्यति कस्य किम् ?
(संस्कृतम् 1।6 पृ॰ 8)

(ग) सुकविर्विप्रशर्मा चित्रात्मकमनुलोमकाव्यसर्जनं निपुण आसीत् । निम्न-लिखितं लालित्यपूर्णं सानुप्रासं भावमयं चित्रात्मकं पद्यद्वयं प्रस्तूयते—

बुधबला धवला धवलाम्बरा, भवरदाऽवरदां वरदा मम ।
वितनुतां तनुतां तनुतापना स्वजहिताऽजहिता जहिता व्यथा: ।।
देवाधिदेवि प्रतिदेऽधिवादे स्वदा स्वदासस्य सदाऽस्वादाऽऽस्य ।
स्वदाऽस्वदासस्य सदाऽस्वदाऽऽस्व, देवाधिदे! विप्रविदेऽधिवादे ।।

(घ) कवि: सामयिकसामाजिकराजनैतिकस्थितिभिरपि प्रभावितो बभूव । स्वदेशस्य स्वातंत्र्यसंग्रामे महात्मगान्धिनोऽपूर्वं योगदानमवलोक्य तस्य नीचैर्निन्दनं श्रुत्वा सुकविर्विप्रशर्मा व्यथितो भूत्वा सामयिकसमस्यापूर्तिकरेऽधोलिखिते पद्ये स विशदयति—

मह्यां महितः सुयशाः, सकलजनाह्लादकारको गान्धीः ।
भ्रमररैरिव चाम्पेयः, परममनोऽपि निन्दितो नीचैः ॥

(ङ) पं० रामनाथचतुर्वेदिनः प्रकीर्णं-(विविधं) संस्कृतसाहित्यं टीकाभाष्यादिलेखनेन सामयिककाव्यसमस्यापूर्त्यर्थंविरचितसंस्कृतपद्येषु प्रायः प्राप्यते । अखिलभारतीयसमस्यापूर्तिप्रतिस्पर्धायामपि प्राप्तपुरस्कारः सत्कविरयं साकेततः प्रकाशितस्य "संस्कृतं" पत्रस्य सुयोग्यसम्पादकेन श्रीकालीप्रसादशास्त्रिणा प्रशंसितोऽभवत् । अखिलभारतीयप्रधानपञ्चसंस्कृतसेवकेषु पण्डितविप्रशर्माणं गणयन् सम्पादकवर्यः स्वात्मनिवेदने गौरवशालिनं गीतकारं श्रीचतुर्वेदिनमभिलक्ष्य कथयति—

"कोंचस्य रामनाथचतुर्वेदी यथागेयगीतनिर्माणे दक्षतामलभत तथैवान्योऽपि महोदयो लभताम् ।"

पण्डित श्रीरामचतुर्वेदिनो विप्रशर्मणो वैविध्यपूर्णं[1] विपुलं ललितं संस्कृतसाहित्यमवलोक्य कथयितुं शक्यते, यदयं रससिद्धः श्रेष्ठोऽर्वाचीनः सत्कविरासीत् । सालंकृतललितपदावल्यां गभीरमर्मस्पर्शिभावं सरलतया ललितगीतमाध्यमेन प्रकटीकर्तुं परमनिष्णात आसीत् सत्कविरयं विप्रशर्मा ।

सत्कवेरस्य गीतकाव्यनैपुण्यमवलोक्य सत्यमेव समीक्षते साहित्यकारः श्रीमहावीरप्रसादजोशी संस्कृतम् (विप्रशर्मणः सरसं संस्कृतगीतं) पठित्वा—

"यत्र रामनाथविप्रः चम्पालता विराजते, हृदयेशं मालतीपुष्पमपि धरते, कविकुलकमलार्ककालीप्रसादः सेवितुं तत्संस्कृतकानन न कस्य मनो हरते ।"

(संस्कृतम् 3।3, पृ० 3)

पं० श्रीरामनाथचतुर्वेदिविप्रशर्मणः समस्तसंस्कृतसाहित्यस्यतलस्पर्श्यनुसन्धानदृष्ट्या व्यापकमध्ययनं मननञ्च नितान्तमपेक्षितम् । कवेरस्याप्रकाशितसाहित्यस्यापि प्रकाशनं प्रसारणञ्चाप्यऽवश्यकमस्ति जनहितार्थम् । आशास्यते, विद्याव्रतिनोऽनुसन्धायकाः श्रद्धेयाः संस्कृतसाहित्यसेवका तस्य समस्तकृतीनामवगाहनं कृत्वा सम्यक् मूल्याङ्कनमवश्यमेव यथाशीघ्रं करिष्यन्तीतिशम् । □

---

1. संस्कृतम् 2।2 (मार्गशीर्षाङ्कः) सं० 1988 वि०, साकेत, पृ० 1
समस्यापूर्त्यर्थं विरचितैकाऽर्याऽवलोकनीया कवेर्विप्रशर्मणः—
अहो अवधपतिसुकृतं, दुष्करैस्तपोभिरपि दुरधिगम्यम् ।
तनुते बालक्रीडां यस्यालिन्दे परं ब्रह्म ॥
(संस्कृतम् 2।2, सं० 1988 वि० पृ० 1)

# अभिनव सन्देशकाव्यम्
## श्री हनुमद्दूतम्

संस्कृतसाहित्यस्य सन्देश काव्य परम्परा सुदीर्घाऽविच्छिन्ना चावलोक्यते, यस्यां मेघदूत पवनदूत हंसदूत हंससन्देशादिप्राक्तनकाव्यश्रृंखलायामर्वाचीनसन्देश काव्यरचना 'श्रीहनुमद्दूतम्' अत्यन्तमहत्त्वपूर्णा अस्ति साहित्यिकवैशिष्ट्यदृष्ट्या।

श्रीहनुमद्दूतस्य प्रणेता डॉ० हरिनारायण दीक्षित: एक: प्रतिभाशाली कविरस्ति। नैनीतालस्य कुमायू विश्वविद्यालये संस्कृत-विभागाध्यक्षपदमलं कुर्वाणोऽयं रचनाकार: साहित्य व्याकरण सांख्ययोगादि शास्त्रेषु प्रावीण्यं प्राप्य श्रीहनुमद्दूते स्वकीयं परिचयमेवं ददाति–

रम्ये हृद्ये विमलचरिते भारते धर्मदेशे
जालौनाख्ये लघुजनपदे चोत्तरे सुप्रदेशे।
ग्रामोऽस्त्येको भुवि पढ़कुलाख्यो न तुल्यो नवीनै:,
प्राय: कृष्यां निहित मनसो मानवा यत्र सन्ति ॥

श्रीहनु० 109

विप्रो मान्यस्सदसि रघुवीरस्सहायान्तनामा,
धर्मज्ञश्च प्रतुलविभवो मे पिता दीक्षितोऽस्ति।
पूज्या माता विमलहृदया श्रीसुदामाभिधा च,
तस्मिन्ग्रामे मम सुपितरौ वासमेतौ विधत्त: ॥

श्रीहनु० 110

तत्पुत्रोऽहं स्ववशहरिनारायणो दीक्षितश्च,
सांख्ये योगे पदविवरणे काव्यशास्त्रेष्वधीती।

---

1. शोध छात्रा एवं संस्कृत प्राध्यापिका, वनस्थली विद्यापीठम्, वनस्थली (राज०)।
2. शोध निर्देशक: तथा संस्कृत-विभागाध्यक्ष:, जनता महाविद्यालय:, अजीतमल (इटावा)।

एतत्काव्यं जनकतनया प्रीतयेऽकुर्त्रि मत्तया,
रामोऽनेनापि पवनसुतश्चापि तुष्टौ भवेताम् ।।

श्रीहनु० 111

सुकवि: डॉ० हरिनारायणदीक्षित: नयनदेवीमन्दिरे[1] रामायणस्य[2] कथा-वस्तुना मेघदूते[3] काव्येन च प्रभावितो भूत्वा श्रीहनुमत् प्रेरणया 108 मन्दाक्रान्ता पद्येसु श्रीहनुमद्दूतमिति नाम्न: सरस सन्देशकाव्यस्य रचनामकरोत् । अस्य काव्य ग्रन्थस्य प्रकाशनं 1987 ई० वर्षे दिल्लीतोऽभवत्[4] ।

रावणापहृता सीताऽशोकवाटिकायां बन्धनस्था, वियोगव्याकुला भूत्वा हनूमता रामं प्रति यत् स्वसन्देशं प्रेषितवती, तदेव कथानकं काव्यस्यास्य अस्मिन् सन्देशकाव्ये पर्याप्तं भाव साम्यं वर्तते वर्ण्यविषये रामायण[5] मेघदूतो[6] त्तर-

---

1. द्रष्टव्या भूमिका (Preface) श्रीहनुमद्दूतम्, दिल्ली, 1987 पृ० 9, 10
2. वाल्मीकिरामायणे, सुन्दरकाण्डे 39/1 मणिं दत्त्वा तत: सीता हनूमन्त मथा ब्रवीत् । 39/5, 39/7, 40/1–10 पर्यन्तं ।
3. उत्तरमेघदूते 37 इत्याख्यति पवनतनयं मैथिलीवोन्मुखी सा,
   त्वामुत्कण्ठोच्छ्वसितहृदया वीक्ष्यसम्भाव्य चैनम् ।
   श्रोष्यत्यस्मात् परमवहिता सौम्य ! सीमन्तिनीनां,
   कान्तोदन्त: सुहृदुपनत: संगमात् किञ्चिदून: ।।
4. प्रकाशक:, ईस्टर्न लुक लिंकर्स, जवाहर नगर, दिल्ली–7, 1987 पृ० 122 ।
5. वा० रामा०, सुन्दर० 39/1 मणिं दत्त्वा तत: सीता हनूमन्तमयाब्रवीत् ।
   ” ” 39/2 मणिं दृष्ट्वा तु रामो वै त्रयाणां संस्मरिष्यति
   ” ” 40/7 एष चूडामणिर्दिव्यो……। तुलनीयं–श्रीहनु० 46
   मत्पित्रे यं प्रमुदितमना…प्राणाधारो मम जलधिजस्सोऽद्यचूडामणिश्च,
   विश्वासार्थं तव परिचित: प्रेष्यते चिह्नरूप: ।।
6. पूर्वमेघ० 10 आशाबन्ध: कुसुमसदृशं प्रायशो ह्यङ्गनानां, सद्य: पाति प्रणयि हृदयं विप्रयोगे रुणद्धि ।।
   श्रीहनुमद्दूतम् 45 आशा नूनं कथमपि पते प्रेयसीनां विदेशे,
   पत्यौ दूरे विरहविधुरं प्राणवायुं बिभर्ति ।।
   पूर्वमेघ० 38 मन्दायन्ते न खलु सुहृदामभ्युपेतार्थकृत्या: ।
   श्री हनु० 72 नो नीचोऽपि प्रथममुपकारेण तुष्टोऽत्र कश्चित् ।
   सख्यु: कार्ये भवति विमना: किम्पुनर्थस्सुकण्ठे: ।।

राम[1]चरितादीनां काव्यनाट्यग्रन्थानाम् तथापि यत्र तत्र प्रभूतं काव्यसौन्दर्यं सदृश्यते ।

मन्दाक्रान्तानां मार्मिकता श्रीहनुमद्दूते सरसाभिव्यक्तया सर्वत्र मनोहरति सहृदयानां, यतः यत्र तत्र काव्यभावभूमौ शब्दार्थालंकाराणां चारुच्छटाऽप्यवलोकयितुं शक्यते। अनुप्रास रूपकोपमार्थान्तरन्यास दृष्टान्तविशेषोक्ति समासोक्ति स्मरणाद्यलंकार संन्निवेशः सर्वथा स्वाभाविक एवास्मिन् सन्देश काव्ये संलक्ष्यते, येन रसिकमनांसि रससिक्तानि सद्य एव भावितुं शक्यते। यथानुप्रासालंकारस्य सुषमा एषु पद्येसु दृष्टुं शक्यते–

कृत्वा मायामृगमनु भवन्तं महाधूर्तराजः,
साहाय्यार्थं मम च वचसा लक्ष्मणेऽपि प्रयाते ।
युष्मद्भीतो विहितमुनिवेषो वनान्ताद्रहोऽयं,
भिक्षां याचन्कुटिलविधिना वञ्चयित्वाऽहरन्माम् ॥

श्रीहनु० 22

जायादेहे सुरतसुखदेऽप्यस्ति साधारणानां,
गाढाप्रीती रघुकुलमणे भारते मानवानाम् ।
स्वीयं स्नेहं शिथिलयसि किं राम । सीताकृतेत्वं,
हा किं जातं त्वमसि भुवने मानवेषूत्तमो ना ॥

श्रीहनु० 33

पात्यापद्भ्यः पतिरिति मतो योषितं स्वां मनुष्यो,
भर्त्ता प्रोक्तोभरणकरणाद् घोषितश्चात्तपाणेः ।......पालयन्ति ॥

श्रीहनु० 36

रूपकालंकारस्य रम्यता रसिक हृदयहारिणी पद्येस्वेस्वारस्या यथा–

"दूरेनीतस्तव तनु सरस्तोऽसुमीनो मदीयः,
त्वत्स्नेहाम्बुप्रतुलतरणाभावपीडा कुलोऽस्ति ।

श्रीहनु० 63

---

1. उत्तररामचरिते 3/26 त्वं जीवितं त्वमसि मे हृदयं द्वितीयं त्वं कौमुदीनयनयोरमृतं त्वमङ्गे श्रीहनु० 8 त्वं मे प्राणास्त्वमसि दयितस्त्वं सखा त्वञ्च स्वामी, त्वं मे भर्ता हृदयरमणो जीवा धारहेतुः ।
श्रीहनु० 74 त्वं मे कान्ता त्वमसि दयिता प्राणभूटं त्वं मे भार्या हृदयगतिश्चक्षुरामा त्वमेव ।

 

साङ्गरूपकस्य सुन्दरमुदाहरणं श्री हनुमद्दूतस्याऽधोलिखितं पद्यं प्रस्तौति कविरयं रामायणमहाभारतयोर्भावानुहरणेन । यथा–

मूलं यस्यास्त्यसुरसुखदो मेघनादोऽभिमानी,
यस्य स्कन्धः प्रचुरशयनः कुम्भकर्णो गरीयान् ।
यत्पत्राणि प्रमददितिजा यस्य शाखाः क्वमात्याः,
त्वं छिन्ध्येतं झटिति खरहन् । रावणं पापवृक्षम् ।।

श्रीहनु० 66

वाल्मीकि-रामायणेऽपि राक्षसराजरावणः[1] वृक्षेण सह सम्यग्रूपेण निरूपितः आदिकविना महर्षिवाल्मीकिना । महाभारते+ कुरुराजः दुर्योधनः[2] धर्मराजः युधिष्ठिरश्च[3] पृथक् पृथक् महाद्रुमरूपौ साङ्गरूपकेन निरूपितौ स्तः वेदव्यासेन । एवमेव राज्यवृक्षस्य साङ्गरूपकालंकारः सम्यक्रूपेण निरूपितः कविनाऽस्मिन् निम्नलिखिते पद्ये–

मायास्कन्धोऽघनिकरदलो दुष्टतावृद्धि शाखः,
पापाचारप्रसरकुफलस्सज्जनातङ्कपङ्कः ।
लंकाक्षेत्रः खल जलदृढश्चाप्यहंकारमूलः,
छेद्यश्शीघ्रं षलपरशुना रक्षसां राज्यवृक्षः ।।

श्रीहनु० 78

कल्पनाप्रवणोऽयं कविरुत्प्रेक्षालंकारस्य प्रयोगेऽपि परमनिपुणोऽस्ति । यथा–

रम्याकारो ललिततिलको राम ! मानः शिलेयः,
प्रेम्णा सृष्टस्तव मतिपथे सोऽधुना नास्ति मन्ये ।।

श्रीहनु० 32

---

1. वाल्मीकि रामायणे, युद्धकाण्डे 109/9 धृति प्रवालः............
.. ......रणे महान् राक्षसराजवृक्षः सम्मर्दितो राघवमारुतेन ।।
\+ महाभारतं स्वयमेव द्रुमरूपे निरूपितमस्ति । आदि पर्वणि 1/92—
पर्जन्य इव भूतानामक्षयो भारतद्रुमः ।
2. महाभारते आदि० 1/110–111 दुर्योधनो मन्युमयो महाद्रुमः स्कन्धः कर्णः शकुनिस्तस्य शाखाः । दुःशासनः पुष्पफले समृद्धे मूलं राजा धृतराष्ट्रोऽमनीषी
आदि० 1/110
महाभारते युधिष्ठिरो धर्ममयो महाद्रुमः स्कन्धोऽर्जुनो भीमसेनोऽस्यशाखाः । माद्रीसुतौ पुष्पफले समृद्धे, मूलं कृष्णं ब्रह्म च ब्राह्मणाश्च ।। आदि० 1/111
3. अत्रोत्प्रेक्षया सह समासोक्ति अर्थान्तरन्यासालंकाराणामपि चारुता द्रष्टव्या ।

'मन्ये भाषां सुरकुलरिपुः संस्कृतं भाषतेऽयं,
नास्तिक्षम्यः पुनरपि महाराक्षसोऽयं जघन्यः ।
नीचोपेता खलजनरता रूपयुक्तापि कापि,
राजन् लोके भवति विदुषां नादरायात्र कन्या ॥

श्रीहनु० 38

श्रीहनुमद्दूते समासोक्ति[1] विशेषोक्ति[2] काव्यलिंग[3] दृष्टान्तार्थान्तरन्यासाद्यलंकाराणां[4] सरससंन्निवेशः सहृदयान् सर्वानावर्जयति । अर्थान्तरन्यासचारुतया काव्येऽर्थगौरववृद्धिरपि कविना कृतैव । यथा–

'वेदज्ञानं प्रति नहि रिपोस्त्वं विचारं विदध्याः,
पापाचारं कमपि न जनं वेदविद्या पुनीते ॥'

श्रीहनु० 39

यावन्नाहं मृतिमुपगता तावदेवाशु रक्ष्या,
शस्ये शुष्के सलिलसरणं जायते मोघमेव ॥

श्रीहनु० 41

जातोद्वाहा निजपतिरता भारतीया च योषा,
स्वापेऽप्यन्यं कमपि पुरुषं सेवते नो सकामा ॥

श्रीहनु० 43

'शब्दं श्रुत्वाच्छलमृगकृतं मोहमूढा च भूत्वा,
त्वां यां वाचं निगदितवती तात ! नीचामधीराम् ।
शान्त्यै तस्या अनुजसदृशं त्वां क्षमां प्रार्थयेऽहं–
व्यामूढानां परुषवचनं बुद्धिमन्तः क्षमन्ते ॥

श्रीहनु० 86

---

1. श्रीहनुमद्दूतम् 71, 34, 38 ।
2. " 71 ।
3. " 26 ।
4. " 71 ।
5. मनुस्मृति 7/156 अष्टौ चान्याः समाख्याताद्वादशैव ताः स्मृताः ।
" 7/158 अनन्तरमरिं विद्यादरिसेविनमेव च । अरेरनन्तरं मित्रमुदासीनं तयोः परम् ॥ (तुलनीयं कौटल्यस्य अर्थशास्त्रमरिप्रकरणम्) ।

 

कवि: काव्येऽस्मिन् मनुकौटिल्याद्यनेकनीति धर्मशास्त्रानुरूपं स्वराज-नीतिज्ञानमपि प्रकटयति। यथा—

शत्रोर्मित्रं नृपनयविदामन्यते शत्रुरेव मित्रशत्रुश्च शत्रुः ॥
श्रीहनु० 97

भूभृन्नीतिर्वदति मतिमन् सत्वरं मित्रशत्रुः,
मृत्युं प्राप्यो भुवि सहगणो वाञ्छता राज्यशान्तिम्।
नो चेत्तर्हि स्वरिपुसुहृदं हन्ति सोऽरिस्तु नूनं,
शत्रुं मत्वा तमलसनृपं नीतिवाक्यानुसारी ॥
श्रीहनु० 98

संक्षेपे, कथयितुं शक्यते, यत् कविरस्मिन् काव्ये विचाराणां परिपक्वता-मनुभवजन्यां स्वाभाविकीं सम्प्रेषणीयतां, दाम्पत्यप्रेमदृढतां, संकटकालिकींसहन-शीलतां, धीरतां, कर्त्तव्यनिष्ठां, निर्णयं प्रति स्थिरताञ्चाद्यनेकमानवीयान्त: पक्षानपि सम्यक् रूपेण प्रकाशितवान्। कवे: काव्यकौशलमसाधारणं संलक्ष्यते सर्वत्र। संस्कृतभाषायामधिकार इव प्रत्येकपंक्तौ परिलक्ष्यते, येन सरलतां, सुबोधतां च प्रत्येक: सहृदयपाठकोऽनुभवति। परिणामत: संस्कृतसन्देशकाव्य साहित्ये श्रीहनुमद्दूतस्य महत्त्वपूर्णं स्थानं सुनिश्चितमस्ति। अनेन काव्यग्रन्थरत्नेन अपारसंस्कृतसाहित्यसम्पत्ते: सर्वथा श्रीवृद्धिर्भवति। अत एवाऽस्य प्रणेता डॉ० हरिनारायणो दीक्षितोऽभिनन्दनीय: सत्कार्यश्चेतिशम्। □

# संस्कृतवाङ्मये विवेकानन्दात्मकं विवेचनम्

विंशशताब्द्या अर्वाचीनसंस्कृतसाहित्यं भव्यराष्ट्रियभावनया समुन्नत-सांस्कृतिकचेतनया च समृद्धं संलक्ष्यते । साहित्येऽस्मिन्नैकराष्ट्रियसमस्यामयविचार-धाराभिः समसामयिकानेकराष्ट्रियमहापुरुषाणामुज्ज्वलचरित्रचित्रणमपि शीर्षस्थ-संस्कृतरचनाकारैर्विविधविधामयकाव्यकृतिषु कृतम् । श्रीमल्लक्ष्मीबाईस्वामि-विवेकानन्दस्वामिदयानन्दसरस्वती सुभाषतिलकमालवीय जवाहरलालमहात्मगान्धि प्रभृति लोकनायकानां यशश्चन्द्रिकयाऽर्वाचीनसंस्कृतसाहित्यं सर्वथा सरसं समुज्ज्वलञ्च समवलोक्यते सुधीभिः ।

अर्वाचीनराष्ट्रियमहापुरुषाणां मध्ये महात्मनो विवेकानन्दस्य स्थानमप्रतिमं वर्तते । महापुरुषममुमभिलक्ष्य अर्वाचीनसंस्कृतरचनाकारैरनेकाः काव्यकृतयो विरचिताः, यासु वाराणस्याः वसन्तमहाविद्यालयस्य पूर्वप्राध्यापकस्य श्रीमतस्त्र्य-म्जकशर्मभण्डारकरस्य 'श्रीविवेकानन्द चरितम्' नामाष्टादशसर्गात्मकं महाकाव्यं, नागपुरविश्वविद्यालयस्य प्राक्तनसंस्कृतविभागाध्यक्ष डॉ० श्रीधरभास्करवर्णेकर-विरचितं दशाङ्कीयमहानाटकं[2] विवेकानन्दविजयम्', डॉ० यतीन्द्र विमल चौधुरी-प्रणीतं 'भारतविवेकं नाटकं'[3] (द्वादशदृश्यात्मकं रूपकं), डॉ० वी० राघवन् विरचितं "नरेन्द्रो विवेकानन्दः"[4] जीवन्यासतीर्थस्य 'विवेकानन्दचरितम्' (अंकत्रयात्मकं रूपकम्), बंगलोरतः के० नागराजन्महोदयस्य 'विवेकानन्दचरितम्', डॉ० गजाननबालकृष्णपलसुलेमहाभागस्य 'विवेकानन्दचरितम्' (शारदाप्रकाशनं, पुणे) तथा च बद्रीविशालकालेज, फरुखाबादस्य प्राध्यापक डॉ० शम्भुनाथाचार्यस्य विवेकानन्दात्मकं"[5] खण्डकाव्यादिकृतयः साहित्यिकदृष्ट्या विशेषरूपेणोल्लेखनीयाः सन्ति ।

---

1. ग्रन्थ प्राप्ति स्थानम् भारतमनीषासंग्रह ग्रन्थमाला 1973 संस्करणम् । चौखम्भा सं० सी०, चौक वाराणसी ।
2. ,, विवेकानन्दशिलास्मारकसमितिः, मद्रास–5. (कन्याकुमारी स्मारकस्थले)
3. "प्राच्यवाणी" कलिकाता 1963
4. साहित्य अकादमी 1959 ई०
5. विधु प्रकाशनम्, फरुखावाद–209625

विवेच्यखण्डकाव्यस्य—विवेकानन्दात्मकस्य विरचयिता कविवर—डॉ० शम्भुनाथ आचार्यः हिन्दीसंस्कृतयोरेकः समर्थः सत्कविरस्ति, यस्याधोलिखित संस्कृतग्रन्था उल्लेखनीयाः सन्ति—स्तोत्रसाहस्त्री, राष्ट्रियगीताञ्जलिः, राधा-माधवीयं कालिदासीयं, पाकिस्तानोद्धरयं, द्रोणात्मकथ्यं, नृत्यगीतिकलिका, शोक-गीतिका (Elegy), रुक्मिणीमानहरणं, लोहितंशुक्लकृष्णा[1] तुलनात्मकं काव्य-शास्त्रम् नवलकथा स्फुटपद्यसंग्रहः, समीक्षावृन्तञ्च ।

विचारणीयं "विवेकानन्दकं" 178 पद्यात्मकं संस्कृतखण्डकाव्यं श्रीस्वामि-विवेकानन्दस्योदात्तजीवनदर्शनं सरसकाव्येन प्रस्तौति प्राज्ञपुरुषेभ्यः । भारतसर्व-कारीयमानवसंसाधनविकासमंत्रालयप्रदत्तेन वित्तीयसहाय्येन 1989 तमेऽवर्षे प्रकाशितमिदं खण्डकाव्यमखण्डभारतस्योच्च विचारधारांमखिलविश्वधरातले प्रवाहयितुं शक्नोति । प्रणेतुरवधारणेयं सर्वथा समीचीना प्रतीयते यत—स्वामि-विवेकानन्दो देशविदेशेषु भारतस्यक यदाध्यात्मि स्वरूपं व्याचख्यौ तस्मिन् स्वरूपे भौतिकीसमृद्धिरपि आवश्यकतया मणिकांचन—संयोगवद् समुल्लसन्ती राराजते । निरपेक्षभौतिकसमृद्धि. आध्यात्मिकीच्छटा निरस्तपादपदेशे एरण्डछायेव श्रन्तकलान्त मानवसौख्याय नालमिति धरित्र्याः वास्तविकत्वम् । वटच्छाया खलु आध्यात्मिकी चिन्ता, मुमूर्षप्राणदा च भौतिकसमृद्धिरियं मन्दाकिनी धारा । द्वयोरप्यनयोः ईश्वरो-न्मुखतया मानवताश्रेयस्कारितया च नास्ति द्वन्द्वः ।

भारतस्य दुरितदैन्यविद्रावणाय, अतीत गौरवप्राप्तये, विश्वबन्धुता प्रसा-राय मानवताधर्महेतवे संन्यासितल्लजो विवेकानन्दः इदमेवावश्यकं प्राह ।"[1] नूनमेवान्यूनविचारसरणिः स्वामिनो विवेकानन्दस्य निरन्तरस्वार्थविखण्डिते जगति विचारशीलसज्जनानुपकरिष्यतीति स्वरूपुद्देश्ये काव्यमिदं सर्वथा सार्थकं प्रतिभाति ।[2] विचारप्रधानकाव्यमिदं निम्नांकित सुन्दरमगलाचरणात्मकपद्याभ्यां प्रारभ्यते—

'शब्दार्थ'वत् तोयतरंग[4]वद्वा, संगीतगीतध्वनिवत् युतौ वा ।
प्रणम्य मातापितरौ जगत्याः वितन्यते काव्यमुदीर्णं सत्त्वम् ।।

(विवेका० 1)

---

1. उ० प्र० संस्कृत अकादमी पुरस्कृता आकाशवाणी प्रसारित कथात्मक रचना.)
2. द्रष्टव्यम—विवेकानन्दात्कं (प्राक्कथनम्) पृ० 1
3. तुलनीयं—रघुवंशे 1/1 वागर्थाविवसंपृक्तौ वागर्थप्रतिपत्तये । जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ।।
4. ,, रामचरितमानसे—गिरा अरथ जलवीचिसम कहियत भिन्न न भिन्न (तुलसीदासः)

तदेव काव्यं रमणीयमिष्टं, निगद्यते मत् हरिकीर्तनाढ्यम ।[1]
विशीर्यते तत्कविकर्म यत्र, स्यात् प्राकृतानां गुणगानमेव ।।
(विवेका० 2)

श्रीमद्–गीतागायकस्य कर्मयोगिकृष्णस्य[2] कमनीयजीवनादर्शानुप्राणितं श्रीस्वामिविवेकानन्दस्य चारुचरित्र–चित्रणे समाजे आस्तिकभावनया मानवीय श्रेष्ठगुणान् प्रतिष्ठापयितुं प्रतिभाशालिकविरयं प्रयासशील: परिलक्ष्यतेऽस्मिन् खण्डकाव्ये । यथा—

"सन्तोऽप्यनन्त: सुलभोऽप्यलभ्यो, दृश्योऽप्यदृश्य: सगुणोऽप्यगुण्य: ।
वनौकसां गेहवतामजस्रं स निर्विशेषं भुवि कामनीय: ।।
(विवेका० 131)

न मानवात् श्रेष्ठतरं हि किञ्चिद् वाक्यं सदा चेतसि धारणीयम् ।
दुर्लभ्यमेतत् नरजीवनं हि, संलभ्य रक्षेदिह मानवत्वम् ।।
(विवेका० 91)

अपि च–

स्वधर्मकर्माचरणै: प्रशस्तं निष्कण्टकं मानवतापथं ये ।
चक्रु: सदा तेऽपि विसृष्टदेहा: प्रापुर्यशस्यं सुखदं च नाम ।।
(विवे० 93)

समर्थसाधकस्य सदाचारपराणस्य स्वामिनो विवेकानन्दस्य वाग्मितां विशेषरूपेण वर्णयन्नसौ कवि: कथयति–

"गंगा प्रवाहोपमितेन तत्र, हृद्ध्वान्तनिर्यापरेण वाग्मी ।
मंत्रेण बद्धानिव तान् प्रमुग्धान्, चकार भूयो निजभाषणेन ।।
(विवेका० 98)

विवेकानन्दात्मके सुकवे: श्रीशम्भुनाथचार्यस्य परिष्कृतभावानुकूलभाषया प्रसादमाधुर्यगुणोपेता, सरसा सालंकृता च भव्यभारती भावुकजनाना-

---

1. तुलनीयं श्रीमद्भागवते "तद्वागविसर्गो जलतांघविप्लवो यस्मिन् प्रतिश्लोकमजद्धवत्यपि । नामान्यनन्तस्थ यशोंऽकितानि शृण्वन्ति गायन्ति गृणन्ति साधव: ।।
2. विवेकानन्दात्मके 129 नीलद्युतिर्मेचकविग्रहोऽसो, पीताम्बरश्चातकतृप्तिकारी सौदामिनीश्लेषविशिष्टकान्ति: विचित्रयो……।

 

ह्लादयन्ती महात्मनो विवेकानन्दस्य चारुचरित्रं गरिष्ठगुणगरिमाणं, धर्मदर्शन-विषयकं सुदृढं दृष्टिकोणञ्च शोभनमभिव्यनक्ति । यथा–

कृशोऽपि धीमान् विबुधः प्रशान्तः पूजां सदा संलभते मनस्वी ।
कदा मृगाङ्कः सकलंक एषः न पूर्णिमायां वद पूज्यतेऽत्र ॥[1]

(विवेका० 168)

अपि च–

ददाति यो लोकहिताय सर्वं क्षीणोऽप्यसौ वन्द्यतमो जनानाम् ।
कलावशेषो हि निरन्तरश्रीः संधार्यते मूर्ध्नि शशी शिवेन ॥[2]

(विवेका० 169)

अनुप्रासोत्प्रेक्षोपमाद्यलंकाराणां सुन्दरसंन्निवेश एकस्मिन्नेव प्रसादमाधुर्य-गुणामये पद्ये एव मवलोक्यते काव्यतत्त्वराज्यप्रेमिभिः—

तारस्वरैश्चारु निनादिताया, विपञ्चिकायास्त्रुटितेन तन्त्र्याः ।
इव स्वरे मौनमिते मुनीन्द्रे, तस्मिन् बभौ स्तब्ध इवैष लोकः ॥[3]

(विवेका० 118)

विवेकानन्दात्मके लालित्यपूर्णे खण्डकाव्ये प्रायः प्राज्ञेन कविना उपजति-वृत्तस्य प्रवीणतया प्रयोगः कृतस्तथापि यत्र तत्र काव्ये दोधकरथोद्धताप्रभृतिछन्द-समापि सुन्दरचना दृष्टुं शक्यते । यथा–

उपजातिश्छन्दः–

श्रद्धाभिभूताः सकला जनास्ते, तं योगिवर्यं सहसा प्रणेमुः ।
ययाचिरे तं यमिनं प्रपन्नाः शुभाशियं कृष्णमिवाभिमत्य ॥

(विवेका० 138)

दोधकवृत्तस्य रमणीयतेयमवलोकनीया–

धर्मधुरीणतया स यतीशो, देशविदेशजनानुपलभ्य ।
भारतभूमिसुचिन्तितधर्मं साधुतया प्रथितं हि चकार ॥[4]

(विवेका० 139)

---

1. अनन्तरोदीरितलक्ष्मभाजी पादौ यदीयावुपजातयस्ताः । (वृत्तरत्नाकरः)
2. दोधकनाम्नि भत्रयतो गौ । (छन्दो मञ्जरी)
3. रान्नराविह रथोद्धता लगौ । (छन्दो मञ्जरी)
4. तुलनीयं एतादृशस्त्रिभुवने किमु कोऽस्तिदेशे नाशिक्षि येन भरतावनितश्चरित्रम् । नापीहि कोऽपि जगति प्रथितोऽस्तिधर्मो येनात्मनो परतत्त्वमितो गृहीतः ॥ (स्वामि० वि० 16, 17)

वृत्तसंख्या 140 तः–147 पर्यन्तं रथोद्धता राराजते रसान्विता मधुरैवैवम्।

वञ्चनं हि जगतां स्वभावतामागतं सकलजीवनेष्वहो।
सर्व एव भुजगा इवान्तरे, पालयन्ति विषमुल्वणं परम्॥
(विवेका० 144)

अपि च समीचीनमभिव्यक्ताऽवधारणा सामान्यतथ्यपूर्णा–

वैरभावमपहाय मानवो, मानवस्य भवतात् प्रियंकरः।[1]
प्राप्नुयाच्च नियतं महद्यशो, मानवत्व सुखसाधने रतः॥
(विवेका० 147)

अद्वैतवेदान्ततत्त्वस्य शोभनामभिव्यक्ति स्वामि विवेकानन्द शब्देषु सुधिय एवं प्राप्नुवन्ति काव्येऽस्मिन्–

शुश्रूषवस्ते हि दिदृक्षवस्तं, देहा[2]त्मेनोऽद्वैतविदस्तदानीम्।
चकासिरे सिन्धुजलादभिन्ना, रिङ्गत्तरंगा इव नित्यमारात्॥
(विवेका० 111)

स्वामिविवेकानन्दस्य व्यावहारिक धर्मविषयकं विचारमवधार्य कविरयं सत्यमेव कथयति–

दुःखान्न दैन्यं न पलायनं वा संघर्षमास्थाय च तस्यनाशम।
जिजीविषन्तीह विधाय धीराः, शौर्योद्धतानामयमेव[3] धर्मः॥
(विवेका० 175)

संक्षेपे, सदविचारपूर्णं खण्डकाव्यमिदं सुकवेः शम्भुनाथाचार्यस्य प्रभविष्णु-भावव्यंजनया, प्रसादमाधुर्यगुणोत्वित ललित प्राञ्जलपदावलीपूर्णभाषया, सालंकृत-विविधवृत्तैः सहृदयहृदयावर्जयितुं शक्यते। संस्कृत संरचनातत्परोऽर्वाचीनसंस्कृत

---

1. तुलनीयं मानवीयप्रेमविषयकं लक्ष्यसिद्धिसहायकं महाकवेस्त्र्यम्बक शर्मभण्डार-करस्य समानविचारपूर्णपद्यमिदं–स्नेहस्त्वदीय हृदये नरजातिमात्रे चेद्विद्यते सहृदये निजजन्मभूमौ। आयाहि गन्तुमनिशं पुरतो न पश्चात् यत्सं विधातुमिह सत्तम लक्ष्यसिद्ध्यै॥ (श्री स्वामिविवेकानन्दचरिते 16/20)
2. तुलनीयो डॉ० श्रीधरभास्करवर्णेकरस्य एवंविषयो भावः–
सच्चित्प्रमोदमयमात्मनि जृम्भमाणं आत्मानुभूतिविषयं विषयातिरिक्तम्।
सत्साहिति मुकुरबिम्बितमुज्ज्वलाभं सारस्वतं किमपि तत्त्वमुदेतु चित्ते॥
(विवेकानन्दविजयम् 9/1)
तुलनीयं विवेकानन्दविजयस्य पद्यमिदं–दुखार्ता भ्रातरः सर्वे, मातृतुल्या परांगना। मोक्षार्थमात्मनो जन्महिताय जगतस्तथा॥ 9/2

साहित्यसंवर्धनार्थं सत्कविरयं भूयो भूयोभूयोऽभिनन्द्यते एवम् प्रशंसापूर्ण शब्देषु स्वकीयसमीक्षात्मकपत्रेणानेन तं सम्बोध्य–

गीत्वा विवेकानन्दस्य चरितं, त्वया स्वदेशस्य विशिष्टतोक्ता ।
देशस्य धर्माय च दर्शनाय, सेव्यं सुकाव्यं सततं त्वदीयम् ।।

आशास्यतेऽस्यसत्कवेः समस्तसंस्कृतग्रन्थानां सुपरिचयं प्राप्यसुधियोऽध्ययनं मननंञ्च अवश्यमेव करिष्यन्ति, कविश्चायं भविष्येऽपि श्रेष्ठसंस्कृतग्रन्थरचनया भारतीय काव्यनिधिमनवरतं सम्वर्धयिष्यति ।

इतिशम्



# दक्षिणपञ्चालानुशीलनम्

वैदिकयुगीनतृत्सूनां (पुरूणां, कुरूणां, भरतानां वा) राजनैतिक प्रभावः परवर्ति–(उत्तर वैदिक) काले सप्तसिन्धुप्रदेशात्[1] पूर्वंऽस्मिन् गंगायमुनायोर्मध्यवर्त्ति ब्रह्मर्षि[2]देशे परिवर्द्धित आसीत् । दाशराज्ञयुद्धस्य विजेतुः तृत्सुराजस्य पैजवनसुदासस्य 'वीतहव्यस्य' एकछत्रशासनक्षेत्रमिदं पञ्चालनाम्ना परवर्तिवैदिकसाहित्ये[3] समुल्लिखितमस्ति ।

पौराणिकसाहित्ये[4] महाराजस्य भद्राश्वस्य (हर्यश्वस्य) पंचपुत्रै समवेतविजितशासितसंरक्षितत्वात् अस्य राज्यस्याभिधानं 'पञ्चालं' प्रचलितम्भवत् ।

---

1. द्रष्टव्यो डॉ० कै० ना० द्विवेदिनः शोधग्रन्थः (सप्तसैन्धवप्रदेशः (ऋग्वैदिक भूगोल) साहित्यनिकेतनम्, कर्णपुरम्, 1984–85 संस्करणम् ।
2. मनु० 2/19 कुरुक्षेत्रं च मत्स्याश्च पञ्चालाः शूरसेनकाः ।
   एष ब्रह्मर्षिदेशो वै ब्रह्मावर्त्तादनन्तरः ॥
3. काठकसंहिता–30/2, वाजसनेयी संहिता 11/3/3, ऐतरेय ब्रा० 8/23, गो० ब्रा० 1/2/9, शत० ब्रा० 13/5/4–7, तैत्ति० ब्रा० 18/4/1–2, बृहदारण्यक उप० 3/1/1, 6/1/1 (तत्र कुरुपञ्चालानां ब्राह्मणा अभिरूपेता बभुवुः) छान्दोग्यो 305/3/1
4. मत्स्यपुराणे 50/40, विष्णुपु० 4/19/59 नस्मान्मुद्गल सृञ्जयबृहदिषुयवीनर काम्पिल्यः संज्ञापञ्चानामेव तेषां विषयाणां रक्षणायालमेते मत्पुत्रा इति पित्राभिहिता पाञ्चालाः । वायुपुराणे यवीनरस्य स्थाने यवीमान्, काम्पिल्यस्य स्थाने क्रमीलाश्व नामनी उल्लिखितं स्तः । श्रीमद्भागवत पु० 9/21/31 भार्म्याश्वस्तनयस्तस्य पञ्चासन् मुदगलादयः ।
   यवीनरो बृहदिषुः काम्पिल्यः संजयः सुताः । भ्रम्यश्वि प्राह पुत्राणां मे पञ्चानां रक्षणाय हि । विषयाणामलमिमो इति पञ्चाल संज्ञिताः ।

महाभारतस्य शान्तिपर्वणि पञ्चालनाम्नः राजर्षेर्वर्णनं प्राप्यते, यस्य वंशपरम्पराऽपि परवर्तिकाले पाञ्चालनाम्ना प्रचलिताऽभवत्—

"पाञ्चालेन क्रमः प्राप्तस्तस्माद्भूतात् सनातनात् ।"

(महाभारते, शान्तपर्वणि)

महाकाव्यकालीनमध्यदेशस्य आर्यावर्त्तस्य वा षोडशमहाजनपदेषु पञ्चाल-स्याऽवस्थितिः हृदयवदासीत्+, येषामुल्लेखो महाभारते एवं प्राप्यते—

"तत्र मे कुरुपञ्चाला शाल्वा माद्रेयजाङ्गलाः ।
पञ्चाला कोसलाश्चैव मेरुपृष्ठधुरन्धुराः ।।
अपरान्ता परान्ताश्च पाञ्चलाश्चर्ममण्डलाः ।।"

(भीष्मपर्वणि)

प्रतीयते, पुरातनपञ्चालप्रदेशस्य विस्तारः उत्तरे हिमालयपर्वतात् दक्षिणे चर्मण्वती नदीपर्यन्तमासीत् । महाभारतस्य उल्लेखेन ज्ञायते, यत् कौरवपाण्डवानां गुरोः द्रोणाचार्यस्य पञ्चालपालपार्षतं यज्ञसेनं 'द्रुपदं' प्रति वैरमासीत् । द्रुपदस्य पराभवपश्चात्पञ्चालराज्यस्य विभाजनमकारयत् द्रोणाचार्येण परिणामतः गगानदी पञ्चालस्य विभाजकरेखाऽभवत् । उत्तरीपञ्चाल क्षेत्रं द्रोणस्य अधीनं सञ्जात, यस्य राजधानी अहिच्छत्रमभवत् । दक्षिणीपञ्चालराज्यम् भागीरथ्याश्चर्मण्वती-पर्यन्तविस्तृतमासीत्, यत् द्रुपदशासितमासीत्, यस्य राजनगरे काम्पिल्यंमाकन्दी चामवताम् । यथोक्तम् महाभारते आदि पर्वणि—

राजासि दक्षिणे कूले भागीरथ्यामहमुत्तरे ।
सखायं मां विजानीहि पञ्चाल यदि मन्यसे ।।
माकन्दीमथ गङ्गायास्तोरे जनपदायुताम् ।
सोऽध्यवसद् दीनमनाः काम्पिल्यं च पुरोत्तमम् ।।

(आदिपर्वणि 137/70)

दक्षिणांश्चापि पञ्चालान् यावच्चर्मण्वती नदी ।
पुत्रजन्मं······अहिच्छत्रं च विषयं द्रोणः समभिपद्यत ।।
एवं राजन्नहिच्छत्रं पुरी जनपदायुता ।
युधि निर्जित्य पार्थेन द्रोणाय प्रतिपादिता ।।

(महा० आदि पर्वणि 137/74–75)

पुरातने द्रुपदशासिते दक्षिणीपञ्चालजनपदे वर्तमानेटावामैनपुरीफर्रुखाबादैटाकानपुर नगर ग्रामीणजनपदानां भूखण्डानि समाविष्टानि। अस्य राज्यस्य प्राकृतिकसीमा: सर्वथा सुरक्षिता आसन्नदीवनादिदुर्गम प्राकृतिकस्वरूपै:। दक्षिणपञ्चाले कान्यकुब्जसंकाश्यकाम्पिल्यमाकन्दीशिवराजपुरमूसानगरभरेहकुदरकोटप्रभृतिप्रसिद्धानि नगराण्यासान्, येषसामार्थिकधार्मिकराजनैतिकैतिहासिकसांस्कृतिकमहत्त्वं सर्वविदितमस्ति। कान्यकुब्जसंकाश्यनगरयोरुल्लेख: रामायणे[1]ऽपि प्राप्यते। येनाऽनयो: प्राचीनताऽनुमीयते पुरातत्त्वेतिहासविद्भि:।

दक्षिणपञ्चालस्य महदवदानमासीत् प्राचीनभारतीयेतिहाससंस्कृतिसम्वर्द्धनगौरवाय। प्राचीनवैदिक लौकिकबौद्धजैनादि साहित्येऽस्योल्लेखा: यत्र तत्र महत्त्वपूर्णसन्दर्भेषु प्राप्यन्ते। अनेके वैदेशिकयात्रिण: फाह्यानह्वेनसांगादयो दक्षिणपञ्चालस्य सुप्रसिद्धसांस्कृतिकधार्मिकैतिहासिकस्थलानामुल्लेखमपि स्वयात्रासु कृतवन्त एव। दक्षिणपञ्चालजनपदे प्राप्ता पुरातात्त्विक सामग्री अप्यत्यन्तमहत्त्वपूर्णाऽस्ति, यस्यां पुरातनपञ्चालशासकानां राजमुद्रा:, पुरालेखा:[2], पाषाणमृण्मयमूर्त्तयश्चोल्लेखनीया: सन्ति।

प्रसन्नताया विषयोऽस्ति, यत् पुरातनपञ्चालप्रदेशस्य साम्प्रतं प्रभूतमनुसन्धानकार्यं सञ्जातं कर्णपुरस्य 'पञ्चालशोधसंस्थानस्य' तत्त्वावधाने। संस्थानस्य सचिव: डॉ० आर० के० पाल: स्थानीय–क्राइस्ट चर्च महाविद्यालयस्य इतिहास विभागाध्यक्ष:, सागरविश्वविद्यालयस्य प्राचीनेतिहाससंस्कृति पुरातत्त्वविभागस्य प्राक्तनटैगोरप्राध्यापक: कृष्णदत्तवाजपेयीमहोदयोऽस्य संस्थानस्याध्यक्षश्च। कार्यवाहाध्यक्षस्य श्रीहजारीमलबांठियासंयोजकत्वे संस्थानमिदं प्रतिवर्षं पञ्चावजनपदे स्वकीयं वार्षिकाधिवेशनेषु शोधसंगोष्ठी: समायोजयति, यासु पञ्चालक्षेत्रस्य अधुना-

---

1. वाल्मीकिरामायणे–बालकाण्डे 33/23 कुशनाभस्य राजनगरं शतकुब्जानां कन्यानां सन्दर्भे सुप्रसिद्धमभवत्।
   " बालकाण्डे 70/2, 3, 7 वार्याफलकपर्यन्तां पिबन्निक्षुमतीं नदीम् संकाश्चां पुण्यसंकाशां विमानमिव पुष्पकम्।
   " बालकाण्डे 33/19 स राजा ब्रह्मदत्तस्तु पुरीमध्यवसत् तदा। काम्पिल्यां परया लक्ष्म्या देवराजो यथादिवम्॥
2. दक्षिणपञ्चाल क्षेत्रे बिलसढस्थले कुमारगुप्त प्रथमस्कन्दगुप्तयो: शिलालेखे समसामयिकमहासेन ध्रुवशर्मनृपयोरुल्लेख एवं प्राप्यते—
   "बिलसढनिवासिना स्वामिमहासेनस्यायतनेऽस्मि कार्त्तयुगाचारसद्धर्मवर्त्मानुयामिना······ध्रुवशर्मणा कर्म्ममहाकृतेदम्।" (भिटारीत: प्राप्तशिलालेख:)

तनान्वेषणस्य शोधपूर्णानि[1] पत्राणि पठ्यन्ते । संस्थानेन 'पञ्चाल' नाम्न: शोध-पत्रिकाऽपि प्रकाश्यते प्रतिवर्षम् ।

पञ्चालस्य पुरातनेतिहासगवेषणाकार्ये बहवो विद्वांस: शोधच्छात्राश्च व्यापृता: सन्ति, येषु डॉ० आर० के० पाल:, डॉ० श्रीनिवासवर्मा, कपिलदेव द्विवेदी प्रभृतय: उल्लेखनीया: सन्ति । प्रो० कृष्णदत्तवाजपेयिन: सुयोग्य निर्देशने डॉ० आर० के० पाल: दक्षिणपञ्चालस्यैतिहासिकसांस्कृतिकभूगोलविषयकमहत्त्वपूर्णं शोधकार्यं सागर विश्वविद्यालयत: कृतवान् ।

दक्षिणपञ्चालविषयकशोधग्रन्थ:[2] 'SOUTH PANCHALA' इति शीर्षकेण आंग्लभाषायां महत्त्वपूर्णां शोधसामग्रीं प्रस्तौति परिस्फुरन् पालमहोदयस्य प्राक्तनेतिहाससंस्कृतिपुरातत्त्वविषयकप्रतिभाम् । अस्मिन् शोधग्रन्थे भूमिकाविर-हिताष्टाध्याया: विशिष्टानुसन्धानविषयैर्विलसन्ति ।

भूमिकायां विषयप्रवेशे पञ्चालजनपदस्य परिचयं दत्त्वा प्रथमाध्यायेऽस्य भौतिकस्वरूपं, द्वितीयेऽध्याये राजनैतिकैतिहासं तृतीयेऽध्याये नदीनां[3] विवरणं, चतुर्थेऽध्याये जनपदस्यविस्तारमवस्थितिञ्च, पंचमेऽध्याये प्राक्तन–ग्रामनगरादि-वसतीनां परिचयं, षष्ठाध्याये व्यापारिकमार्गाणां स्वरूपं, सप्तमाध्याये आर्थिक भूगोल अष्टमाध्याये च सांस्कृतिक भूगोलं शोधकर्त्ता सम्यग्रूपेण विवेचयति ।

'South Panchal' शोधग्रन्थस्य वैशिष्ट्यं समीक्षानिकषे प्रमुखप्राच्य-विद्याविद्भिरपि व्यक्तीकृतमस्ति । American Institute of Indian Studies.

---

1. पञ्चालशोधसंस्थानस्य अहिच्छत्राऽधिवेशने प्रस्तुतं 'पंचाल का ऐतिहासिक भूगोल' शीर्षकं शोधपत्रं लेखकस्य (डॉ० कै० ना० द्विवेदिन:) 'पंचाल की ऐतिहासिक स्थितिबोध विषयकं श्रीकपिलदेवस्यद्विवेदिन: शोधपत्रं, डॉ० वी० पु० जोशीमहोदयस्य पंचालस्य प्राचीन मूर्त्तसम्बन्धिशोधपत्रञ्चोल्लेखनीयमस्ति । इमानिशोधपत्राणि पंचालस्य तृतीयऽङ्के प्रकाशितानि ।
2. पंचालशोधसंस्थानम् 2/16 शक्करपट्टी, कानपुर कृते साहित्य निकेतनेन ई० 198९ वर्षे प्रकाशितोऽयं ग्रन्थ: 95 रूप्यक मूल्यक: 144 पृष्ठीय: प्रस्तौति पुरातनेतिहासं पंचालजनपदस्य ।
3. नदीनां समीकरण शोधकर्तुर्यत्रतत्र भ्रान्तिरपि सम्प्राप्यते । यथा–यमुना सन्दर्भे स. भ्रान्तिवशात् कलिन्दकन्यां कालीनदीं कथयति रघु० 6/49 सन्दर्भानुसारम् द्रष्टव्य: South Panchal, Rivers. P. 41

   The Raghuvansa and Kadambari Bana calls it Kalinadi due to darkness of its water. वस्तुत: कालीनदीक्षुमती अन्यां, कालिन्दी कलिन्दकन्या वान्या नदी (यमुना) सुविदितैव सुधीभि: ।

संस्थाया: प्रो० कृष्णदेव:[1] स्वकीयमभिमतमेवं प्रकटयति–

"The work is critical and well documented with a comprehansive coverage and will be an important source of reference as well as pleasant and informative study for a scholar and the lay reader."

पश्चिमीजर्मनी देशस्य बर्लिननगरेऽत्रस्थितस्य प्राच्यदेशसंग्रहालस्य निदेशक: (Direktor, des Museams For Indische Kunst Berlin W. Germony) प्रो० डॉ० एच० हर्टेल:[2] ग्रन्थस्यास्य समीक्षामेवं करोति–

"Dr Paul's book is a helpful contribution to the studies in history culture and geography of South Panchal* personal explorations in the area concerned added new material and braught the information up-to date. The method in which all the dates have been dealt with is convincing. The book in all its intended brevity is handy and useful."

पौरस्त्यै:प्राच्यविद्यामर्मज्ञैरपि शोधग्रन्थोऽयंमृशं प्रशंसितोऽस्ति प्रसिद्धपुरातत्त्ववेत्ता पंचालशोधसंस्थानाध्यक्ष: प्रो० कृष्णदत्तवाजपेयी महोदय: South Panchal ग्रन्थं समीक्षयन् सत्यमेव कथयति–

"The author has made a detailed survey of the historical sites. As a result of this exploration he has been able to bring to light some important places of interest which were not recorded by the previous scholars. The author has taken into account the relevant archaclogical and literary evidences and has discussed it eritically. The documention is adequite."[3]

डॉ० बी० एन० पुरी[4] डॉ० अवधविहारीलाल अवस्थी[5] प्रभृतिविद्वद्भिरपि

---

1. द्रष्टव्यं साहित्यनिकेतनस्य पुस्तक विवरणपत्रम् 1988. P. 4. & South Panchal opinions.
2. ,, तदैव ,, ,, ,,

* South Panchal ग्रन्थे द्वादशमानचित्राणि द्वाविंशतिचित्राणि च समाविष्टानि सन्ति, यै: प्रतिपाद्यविषयस्य प्रामाणिकता प्रकटीभवति स्वत एव शोधदृष्ट्या ।

3. South Panchal, Kanpur, 1985, opinions. (Back title Page)
4. प्राक्तनविभागाध्यक्ष: आचार्यश्च, इतिहास:संस्कृति पुरातत्त्वविभाग:, लखनऊ विश्वविद्यालय:,
5. प्राक्तन टैगोर प्रोफेसर & विभागाध्यक्ष:, प्राचीनेतिहाससंस्कृति पुरातत्त्वविभाग:, सागरविश्वविद्यालय:, सागरम् (म० प्र०)



शोधग्रन्थोऽयं प्रशंसितोऽस्ति। प्राचीनेतिहाससंस्कृतिपुरातत्त्वजिज्ञासूनां कृते South Panchal ग्रन्थोऽयं परमोपादेयोऽस्ति, अतएव आद्योपान्तमस्यानुशीलनं करणीयं जिज्ञासु सामान्यपाठकैश्चापि ज्ञानवर्धनाय।

साम्प्रतं दक्षिणपञ्चालक्षेत्रं स्वकीय पुरातनसांस्कृतिक गौरवेण विरहितमिव दृश्यते। अस्य प्राक्तनोत्कर्षलाभाय सर्वकारेण सर्वतोविधाः प्रयासाः सततं करणीयाः। अस्यां रचनात्मकदिशि पञ्चालशोधसंस्थानस्य कार्यक्रमेषु गतिशीलता, सोद्देश्यता, सफलता चाऽपरिहार्याऽस्ति। यदि प्रशासनेन अस्मै शोधसंस्थानाय वाञ्छितार्थिक-सहायता शोधकार्याय प्रदीयते प्राचीनपञ्चालजनपदस्य[1] अनुसन्धानकार्येषु अस्य संस्थानस्य प्रगतिरवश्यमेव प्रभविष्यति, भाविनोभारत राष्ट्रस्याऽपि सांस्कृति-कोत्कर्षः सर्वस्मिन् संसारे शीघ्रमेव संदृक्ष्यते। इतिशम् □

---

1. द्रष्टव्यम् लेखकस्य "पञ्चाल का ऐतिहासिक भूगोल" इति शोधपत्रं 'पञ्चाल' तृतीयोऽङ्कः 1987–88 पृ० 49–59

# अभिमतम्

कौंचस्थितमथुराप्रसादमहाविद्यालयस्य प्राचार्येण डॉ० कैलाशनाथद्विवेदिना प्रणीतो 'लेखाञ्जलि' ग्रन्थो मयाऽऽद्योपान्तमवलोकितः । अस्मिन्महदुपादेयनिबन्धग्रन्थे प्राच्यविद्यायाः व्यापकानुसन्धानात्मकपृष्ठभूमौ समृद्ध-संस्कृतसाहित्यस्य वेदविषयकाः, ऐतिहासिकपौराणिकाः, कालिदासीयाः, साहित्यसमीक्षात्मकाः, सांस्कृतिकाश्च विविधाः विचारपूर्णाः शोधलेखाः समाविष्टाः सन्ति ।

अधिकांश लेखाञ्जलिललितलेखाः अन्ताराष्ट्रिय-राष्ट्रिय प्राच्यविद्यासम्मेलनीयशोधसंगोष्ठीषु डॉ० द्विवेदिना प्रस्तुताः विद्वद्भिर्विचारिताः बहुचर्चिताः, आकाशवाण्या लखनऊकेन्द्रस्य संस्कृतकार्यक्रमे प्रसारिताश्च लेखकस्य वैदुष्यमभिव्यञ्जयन्ति ।

अस्मदीयोऽयं दृढविश्वासोऽस्ति यन्महदुपादेयग्रन्थरत्नोऽयं संस्कृतवाङ्मयस्य लेखविधायाः महत्त्वपूर्णमवदानं भूत्वा सहृदयसंस्कृतपाठकैः साभिरुचिमवश्यमेवाऽधीष्यते ।

—कृष्णदत्त बाजपेयी
एफ. एन. आई.
अध्यक्ष, भारतीय पुरालेख परिषद्
अध्यक्ष, भारतीय मुद्रा परिषद
तथा भारतीय पुरातत्त्व समिति
सेवानिवृत्त टैगोर प्रोफेसर, सागर विश्वविद्यालय,
सागर (म० प्र०)



## डॉ० कैलाशनाथ द्विवेदी

**परिचयः** —पण्डित श्री सुदर्शनलालद्विवेदिपुत्रोऽयं कानपुर देहात बैनाग्रामे ११–१–१९४२ ई० दिनाङ्के प्रादुर्भूतः।

**शिक्षा** —एम० ए०, साहित्याचार्य, साहित्यरत्न, पी-एच० डी०, डी० लिट्० उपाधि विभूषितेनाऽनेन संस्कृतविषये विशेषयोग्यतापूर्वकं सर्वाः परीक्षाः प्रथमश्रेण्यामुच्चयोग्यताक्रमे उत्तीर्णाः।

**प्राप्त पुरस्काराः**—१९६३ ई० वर्षे आगरा विश्वविद्यालयस्य सर्वश्रेष्ठस्नातकरूपे उ० प्र० कुलाधिपतिपदकप्राप्तकर्त्ता, १९८५ ई० वर्षे उत्तरप्रदेश संस्कृत अकादमी विशिष्ट पुरस्कारः, १९८६ ई० वर्षे बिहारशासनस्य डॉ० काशीप्रसादजायसवालनामिताऽखिलभारतीय पुरस्कारः।

**कृतयः** —महाकविकालिदास, कालिदास की कृतियों में भौगोलिक स्थलों का प्रत्यभिज्ञान (शोधग्रन्थः), सप्तसैन्धवप्रदेशः (ऋग्वैदिक भूगोलः डी० लिट्० शोधग्रन्थः), भारतीय संस्कृति की रूपरेखा, भाषाविज्ञान की भूमिका, संस्कृत साहित्य का समीक्षात्मक इतिहास, निबन्धविषयः, कुसुमाञ्जलिः (काव्यम्), गुरुमाहात्म्यशतकम् (काव्यम्), शाकुन्तलयीम् (काव्यं) शताधिकशोधलेखाः उच्चस्तरीयशोधपत्रिकासु प्रकाशिताः। विविधसंस्कृतवार्ता आकाशवाण्या प्रसारिताः पण्डितैः प्रशंसिताः।

**सम्प्रति** —प्राचार्यः, मथुराप्रसादमहाविद्यालयः, कोंच (जालौन) उ० प्र०, प्रादेशिकप्रमुखः, कार्यकारिणीपार्षदः, निखिलभारतसंस्कृतमहासम्मेलनम्, हावड़ा (प० बं०)

प्रादेशिक पार्षदः—विश्वसंस्कृत प्रतिष्ठानम्, उ० प्र०

मानद कार्यदर्शी—सोमैया सुरभारती केन्द्र (अजीतमल, इटावा)